# मनोविज्ञान-मीमांसा

[ उत्तरप्रदेश-शासनेन पुरस्कृता ]

लेखक :

आचार्य-विश्वेश्वरः सिद्धान्तशिरोमणिः

वृन्दावनस्थ-गुरुकुल-विश्वविद्यालयाचार्यः,

अनुसन्धान विभागसञ्चालकः,

दिल्लीविश्वविद्यालय-हिन्दी अनुसन्धानपरिषदः

सम्मान्यः सदस्यश्च ।


वृन्दावन गुरुकुल विश्वविद्यालय कृते

आत्माराम एण्ड सन्स,

काश्मीरद्वारम्, दिल्ली ६

प्रकाशनसंस्थाया प्रकाशिता

## ※ लेखक की अन्य रचनाएँ ※

★

| | | |
|---|---|---|
| १. हिन्दी ध्वन्यालोक | [ उ० प्र० शासन द्वारा पुरस्कृत ] | १०) |
| २. हिन्दी काव्यालङ्कारसूत्र | [ ,, ,, ,, ] | १२) |
| ३. हिन्दी वक्रोक्तिजीवित | [ ,, ,, ,, ] | १६) |
| ४. हिन्दी तर्कभाषा | [ ,, ,, ,, ] | ४॥) |
| ५. नीतिशास्त्रम् | [ ,, ,, ,, ] | |
| ६. हिन्दी कुसुमाञ्जलिः | [ ह०म० डालमिया पुरस्कार प्राप्त ] | |
| ७. अभिनवभारती | [ दिल्ली विश्व विद्यालय प्रकाशन ] | |
| ८. नाट्यदर्पण | [ ,, ,, ,, ,, ] | |
| ९. हिन्दी काव्यप्रकाश | [ ज्ञानमण्डल वाराणसी प्रकाशन ] | |
| १०. खगोल प्रकाशः | [ संस्कृत ग्रन्थ ] | |
| ११. प्रपञ्च परिचय ... | [ हिन्दी दर्शन ग्रन्थ ] ... | २॥) |
| १२. महात्मा ईसा ... | ... ... | २॥) |



प्रकाशक:—

रामलाल पुरी,

**आत्माराम एण्ड सन्स,**

काश्मीरद्वार, दिल्ली ६

★

| | | |
|---|---|---|
| मूल्य | : | ८) रुपया |
| प्रथम संस्करण | : | मार्च, १९५९ |
| आवरणकार | : | *योगेन्द्रकुमार लल्ला* |
| मुद्रक: | : | त्रिलोकीनाथ मीतल<br>**अग्रवाल प्रेस, मथुरा.** |

# समर्पणम्

*योजनां तु समाश्रित्य येषां ग्रन्थो विनिर्मितः ।*
*सम्पूर्णानन्दमिश्रेभ्यः तेभ्य एव समर्प्यते ॥*

# तन्मे मनः शिवसंकल्पमस्तु

यज्जाग्रतो दूरमुदैति दैवं, तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमस्तु ।।

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां, तन्मे मनः शिवसंकल्पमस्तु ।।

यत्प्रज्ञानमुत चेतो धृतिश्च, यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते, तन्मे मनः शिवसंकल्पमस्तु ।।

येनेदं भूतं भुवनं भविष्यत्, परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता, तन्मे मनः शिवसंकल्पमस्तु ।।

यस्मिन्नृचः सामयजूंँषि यस्मिन्, प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तँ सर्वमोतं प्रजानां, तन्मे मनः शिवसंकल्पमस्तु ।।

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं, तन्मे मनः शिवसंकल्पमस्तु ।।

यजुर्वेदे अ० ३४।१–६ मन्त्राः ।।

# प्रास्ताविकं किञ्चित् ।

अञ्जसैव संस्कृतविश्वविद्यालयत्वेन सम्भावितस्य वाराणसेय-राजकीयसंस्कृतमहाविद्यालयस्य उपाधिपरीक्षासु नव्यानां मनोविज्ञाना-दीनां विषयाणां समावेशः, संस्कृतग्रन्थमाध्यमेनैव च तदध्यापनं समीचीनं स्यादिति बुद्ध्या १९४९ ख्रीष्टीये संवत्सरे तत्कालीनानां शिक्षा-मन्त्रिणां महाभागानां श्री सम्पूर्णानन्दमहोदयानां परामर्शेण उत्तर-प्रदेशीयेन प्रशासनेन नव्येषु आचार-मनोविज्ञान-खगोल-अध्यात्मादिषु विषयेषु संस्कृतभाषायां ग्रन्थनिर्माणार्थं योजनैका विनिर्मिता । जी० ओ नं० ए ७०४८ । १५-१६० । १९४७, २२ नवम्बर १९४९ संख्याङ्किते च राज्यादेशे राज्यपालमहोदयेन सा योजना स्वीकृता । शिक्षाधिकारिभिः समाचारपत्रेषु प्रकाशिता च । तत्रापेक्षितानां ग्रन्थानां विषयः, आकारः पृष्ठसंख्या, रचनापद्धतिः, पुरस्कारराशिश्चेति सर्वमपि निर्दिष्टमासीत् । किन्तु केनापि न प्रयतितं तत्र । ततोऽग्रिम वर्षे पुनरपि पत्रेषु प्रकाशितां तां योजनामुपजीव्य पाश्चात्यदर्शनस्य आचारतत्त्वविषये मया-'नीतिशास्त्रम्' इत्याख्यं पुस्तकमेकं विलिखितम् । तच्चावलोकनार्थं मान्यानां शिक्षामन्त्रिणां श्री सम्पूर्णानन्दमहाभागानां, लखनऊ-विश्वविद्यालयस्य दर्शनविभागाचार्याणां डा० देवराज महोदयानां च सेवायां सम्प्रेषितम् । उभाभ्यामपि च तदभिनन्दितम् । तदभिनन्दनप्रोत्साहितेन च मया १९५२ ख्रीष्टीयस्य संवत्सरस्य जुलाई मासे ग्रन्थोऽयं विधिवत् शिक्षाविभागा-धिकारिणां सेवायां विचारार्थं सम्प्रेषितः । प्रायो वर्षत्रयानन्तरं जी० ओ० नं० ए० २२१३ । १५-११६० । ४७ दिनांक ६ जून १९५५ संख्याङ्किते राज्यादेशे उत्तरप्रदेशीयेन शासनेनास्य ग्रन्थस्य प्रकाशनमङ्गीकृतम् । लेखकश्च पुरस्कृतः । प्रकाशनस्य स्वीकृत्यनन्तरमपि प्रायो वर्षचतुष्टयं व्यतीतं किन्त्वद्यापि ग्रन्थोऽयमप्रकाशित एव विद्यते । मन्ये दीर्घसूत्रिणी राज्यकार्यप्रक्रियैवात्रापराध्यति ।

प्रशासनस्य प्रथमप्रयासे नीतिशास्त्रविषयकमेकमेव पुस्तकं प्रस्तुतं संजातम् । मनोविज्ञानादिष्वपरेषु विषयेषु केनापि संस्कृतविदुषा न प्रयतितम् । ततो १९५५ संवत्सरे मनोविज्ञान-खगोलादिषु विषयेषु ग्रन्थ-निर्माणाय पुनरपि द्वितीया योजना उत्तरप्रदेशशासनेन प्रकाशिता । अस्यां योजनायां पुरस्कारराशिर्द्विगुणतां नीतः । ये विद्वांसो ग्रन्थलेखने

समुद्युक्ताः स्युस्तैः तस्य रूपरेखा पूर्वं प्रेषणीया इत्यपि योजनायां निर्दिष्ट-मासीत्। मदीय एको ग्रन्थो बहु विचारानन्तरं शासनेन स्वीकृत इति मदीया लेखशैली शिक्षाधिकारिणां परिचितैवेति कृत्वा मया नवीनग्रन्थानां रूपरेखा तु न प्रेषिता किन्तु शिक्षाधिकारिणः सूचिता यदहं ग्रन्थलेखने प्रवृत्तोऽस्मि। काले च ग्रन्थद्वय भवत्समक्षं समुपस्थापयिष्यामि। तदनुसारं मनोविज्ञानमीमांसाया टंकिता पाण्डुलिपिः २६-८-५५ दिनांके खगोल-प्रकाशस्य च टंकिता पाण्डुलिपिः २२-११-५५ दिनांके राज्याधिकारिणां सेवायां सम्प्रेषिता। किन्त्वेतस्मिन्नैवान्तरे येषां विदुषां सकाशात् ग्रन्थानां रूपरेखा शासनेन प्राप्ता तेषां मध्यात् केऽपि विद्वांसस्तत्र नियोजिताः। इत्यस्माकमुभावपि ग्रन्थौ तद्विचारासहत्वात् प्रत्यावृत्तौ।

तयोरेकतरो ग्रन्थोऽयमद्य प्रकाश्यते इति महत्प्रमोदस्थानम।

प्रशासनेन येऽन्ये विद्वांसो मनोविज्ञान-खगोलादिविषयकाणां ग्रन्थानां लेखने ऽधिकृतास्तेषां ग्रन्थाः प्रस्तुता न वेत्यद्यापि न ज्ञायते। अस्माकमियं मनोविज्ञानमीमांसा विदुषां करकमलयोर्विराजते। खगोलप्रका-शाख्यो नव्यखगोलविषयको द्वितीयो ऽपि ग्रन्थः प्रस्तुतोऽस्ति, प्रकाशनव्य-वस्थां च प्रतीक्षते। अस्य ग्रन्थस्य प्रकाशनं 'आत्माराम एंड सन्स' इत्याख्यायाः प्रकाशनसंस्थायाः अध्यक्षाणां श्रीरामलालपुरी महाभागानां औदार्येण कृपया च संजातमिति ते धन्यवादार्हाः। संस्कृतग्रन्थानां प्रकाशनं तेषां कार्यक्षेत्रे न विद्यते इति मया तत्प्रकाशनस्य प्रस्तावोऽपि तेषां सम्मुखे न स्थापितः। किन्तु अस्य ग्रन्थस्य स्थितिं ज्ञात्वा अप्रार्थितैरपि तैः स्वयमेव तत्प्रका-शनेऽभिरुचिर्दर्शिता। तत्कालमेव च तत्प्रकाशनमंगीकृत्य उपबन्धः कृतः, प्रकाशनस्य चापेक्षिता सर्वापि व्यवस्था सद्यः सम्पादिता। तेषामिदं महत्सौजन्यमस्मत्कृते आश्चर्यावहमासीत्। तत्कृते वयं तेषां कृतज्ञाः स्मः। नूनमन्येऽपि संस्कृतानुरागिणो एवंविधे मनोहरे रूपे संस्कृतग्रन्थस्य प्रकाशनं दृष्ट्वा प्रमोदमनुभविष्यन्ति, रामलाल पुरी महोदयानां कृतज्ञाश्च भविष्यन्ति।

विदुषां वशंवदः—
**विश्वेश्वरः सिद्धान्तशिरोमणिः**

# विषयानुक्रमणिका

★

## प्रथमः परिच्छेदः [ १–१८ ]

### विषयप्रवेशः



## द्वितीयः परिच्छेदः [ १८–३६ ]

### मनःस्वरूपम्



## तृतीयः परिच्छेदः [ ३२–५२ ]

### नाडितन्त्रम्

## चतुर्थः परिच्छेदः [ ५३–६० ]

### मानसिक्यः प्रतिक्रियाः



## पञ्चमः परिच्छेदः [ ६१–७५ ]

### मूलप्रवृत्तयः



## षष्ठः परिच्छेदः [ ७६–९५ ]



## सप्तमः परिच्छेदः अनुकृतिः [ ९६–१०३ ]

### विशिष्टा मूलप्रवृत्तयः

## अष्टमः परिच्छेदः [ १०४-११३ ]

### क्रीडा



## नवमः परिच्छेदः [ ११४-१२२ ]

### शिक्षणम्



## दशमः परिच्छेदः [ १२३-१३४ ]

### अवधानम्



## एकादशः परिच्छेदः [ १३५-१४५ ]

### प्रकृतिः [ आदत ]

## द्वादशः परिच्छेदः [ १४६–१५५ ]

### इच्छिता क्रिया



## त्रयोदशः परिच्छेदः [ १५६–१७० ]

### चरित्रम्



## चतुर्दशः परिच्छेदः [ १७१–१८७ ]

### संवेदनम्



## पञ्चदशः परिच्छेदः [ १८८–२०३ ]

### प्रत्यक्षम्



## षोडशः परिच्छेदः [ २०४–२१८ ]

### स्मृतिः

## सप्तदशः परिच्छेदः [ २१९–२२५ ]

### कल्पना



## अष्टादशः परिच्छेदः [ २२६–२३८ ]

### विचारः



## एकोनविंशः परिच्छेदः [ २३९–२५२ ]

### संवेगाः



## विंशः परिच्छेदः [ २५३–२६० ]

### बुद्धिपरीक्षा



## एकविंशः परिच्छेदः [ २६१–२६८ ]

### व्यक्तित्वम्

## द्वात्रिंशः परिच्छेदः [ २६६–२८२ ]

### इतिवृत्तम्



## त्रयोविंशः परिच्छेदः [ २८३–२९३ ]

### नव्याःसम्प्रदायाः



## चतुर्विंशः परिच्छेदः [ २९४–३०८ ]

### मनोविश्लेषणवादः



## पञ्चविंशः परिच्छेदः [ ३०९–३१४ ]

### स्वप्नाः



—:*:—

# मनोविज्ञान-मीमाँसा

प्रथमः परिच्छेदः

## प्रवेशकः

**मनोविज्ञानस्य प्रयोजनम्**—

ऐदंयुगीनं हि प्रधानतमं मनोविज्ञानाख्यमिदं शास्त्रम् । न खलु व्यक्तिसम्बद्धः समाजसम्बद्धो वा कश्चिदपि विषयो मनोविज्ञानमन्तरा सम्यगध्येतुं विशिष्य विज्ञातुं च शक्यते । राजनीतिशास्त्रस्य, समाजशास्त्रस्य, अर्थशास्त्रस्य, कर्तव्यशास्त्रस्य च सम्यगध्ययनाय वैशद्याय च मनोविज्ञानस्याध्ययनमुपयोगो वा नोपेक्षणीयतामर्हति । मनुष्यस्य विचाराणां क्रियाणां च निरूपणमेव येषां शास्त्राणां प्रधानं प्रयोजनं न खलु तेषामात्मलाभोऽपि मनोविज्ञानमन्तरा सम्भवति, दूरतस्त्वात्मसम्पत्तिरर्थगौरवं च । यो हि मनोविज्ञानस्य साहाय्यं विना समाजसम्बद्धे व्यक्तिसम्बद्धे वा कस्मिंश्चिदपि विषये ग्रन्थनिर्माणाय समुत्सहते तस्य प्रयासो न विज्ञैरभिनन्द्यते न वा कृतिस्तस्य तद्गौरवाय कल्पते ।

मनोविज्ञानस्य साहाय्येन बालानामुपलालने परिपालने च सम्यगनुष्ठीयमाने तेषां यथेष्टो विकासो यथार्था समुन्नतिश्च सम्भवति नान्यथेति पितरौ मनोविज्ञानस्याध्ययनमपेक्षेते । विद्यालयेषु मनोविज्ञानप्रयोगमन्तरा सममेव सर्वेषां छात्राणां विषयाणां चाध्यापनेऽनुष्ठीयमाने ये छात्रा अध्ययनात् पलायन्ते त एव मनोविज्ञानपूर्वकं तन्मनोवृत्त्यनुरूपे विषयेऽध्याप्यमानेऽध्ययनाय स्पृहयन्ति, अद्भुतां दक्षतां च प्रदर्शयन्तीति

शिक्षकाणां कृते मनोविज्ञानस्याध्ययनमपरिहार्यं भवति। मनोविज्ञानानभिज्ञो हि शिक्षको न बालानां चरित्रनिर्माणाय न वा ज्ञानसम्पादनाय प्रभवति। एवं वणिजो व्यापारे, राज्याधिकारिणः शासनकार्ये, नेतारो जनसम्पर्के च सौन्दर्यं साफल्यं चाधातुं मनोविज्ञानमपेक्षन्ते। मनोविज्ञानावबोधपूर्वकं सम्यग् विधीयमानं सर्वमपि कार्यजातं रुचिरं सरलं सुन्दरं च सञ्जायते। मनोविज्ञानस्य प्रयोगो हि कार्ये प्रीतिमुत्पादयति साफल्यं द्विगुणयति, लोकमनुरञ्जयति, प्रचुरां चोपयोगितामभिवर्धयति। तस्मादस्मिन् युगे मनोविज्ञानस्याध्ययनं सर्वेषां कृतेऽपरिहार्यमेव विद्यते। तथा चोक्तम्—

लोकव्यापारसाफल्य–समुत्कर्ष–विधायकम्।
मनोविज्ञानशास्त्रं वै सर्वलोकोपकारकम् ॥१॥

## मनोविज्ञानस्य विषयः—

मनोविज्ञानाख्यमिदं शास्त्रमाङ्गलभाषायां 'साइकालोजी' इति नाम्ना व्यवह्रियते। अयं 'साइकालोजी' शब्दो यूनानी-भाषायाः 'साइके' 'लोगस' इति शब्दाभ्यां निष्पद्यते। तत्र 'साइके' शब्द आत्मवाचको 'लोगस' शब्दश्च विचारार्थकः। तदेवमात्मविचार आत्मचिन्तनं वा 'साइकालोजी' शब्दस्य मुख्योऽर्थः। वर्तमानयुगस्य प्रारम्भात् पूर्वं पाश्चात्यैरप्यस्मिन्नेवार्थे शब्दोऽयं प्रयुज्यते स्म। आत्मैव चास्य विवेच्यो विषय इति मन्यते स्म। तदानीं मनोविज्ञानमध्यात्मविद्याया अङ्गमात्रं न तु स्वतन्त्रं शास्त्रमासीत्। तावन्न मनोविज्ञानस्य वैशिष्ट्यं विकासो वा कश्चिदुल्लेखयोग्यः समजनि। वर्तमानयुगस्य आविर्भावादारभ्य अत्र दृष्टिपरिवर्तनं जातम्। इदानीं मनोव्यापारा एव मनोविज्ञानस्य विषया अङ्गीक्रियन्ते। (तत्र चेतना अचेतनाश्चेति द्विविधा मनोव्यापारा भवन्ति। त इमे द्विविधा अपि मनोव्यापारा मनोविज्ञानस्य विषयतामवगाहन्ते मनोविज्ञानेऽध्येतव्याश्च भवन्ति। पूर्वं ज्ञायमानाश्चेतना मनोव्यापारा एव मनोविज्ञानस्य विषया मन्यन्ते स्म। विज्ञानस्य विकासानुक्रमेण इदानीमचेतना अविज्ञायमाना अपि मनोव्यापारा मनोविज्ञानस्य विषयतामवगाहन्ते। तदेवं चेतनाचेतनानां मनोव्यापाराणां विवेचकमध्ययनपरं च मनोविज्ञानशास्त्रमिति त एव मिलिता मनोविज्ञान-शास्त्रस्य विषयः।)

यद्यप्यत्र चेतनाचेतनभेदेन मनसो मनोव्यापाराणां च द्वैविध्यमाम्नायते तथापि वस्तुतो न मनश्चेतनं नापि मनोव्यापाराश्चेतना:। किन्तु ये व्यापारा: सामान्यतो ज्ञायमाना: प्रत्यात्मवेदनीयाश्च भवन्ति त एव चेतना इत्युपचर्यन्ते। अन्ये त्वचेतना:। एवमनुभूयमानव्यवहारोपरक्तं मनश्चेतनमित्युपचर्यते। तद्भिन्नं चाचेतनम् तदुक्तम्—

व्यक्ताव्यक्तमनोनिष्ठा विज्ञाताज्ञातहेतुका: ।
विवेचनीया व्यापारा: सर्वे शास्त्रेऽत्र सम्मता: ॥२॥

## अध्ययनस्य वैज्ञानिको विधि:—

मनोविज्ञानं विज्ञानमिति व्यपदिश्यते ततस्तद्विषया वैज्ञानिकेनैव विधिना अध्ययनविषयत्वमुपयान्तीति निश्चितम्। अध्ययनस्य शास्त्रीयो वैज्ञानिकश्चेति द्विविधो विधि:। तत्र शास्त्रीये विधौ पूर्वसिद्ध एव सिद्धान्त:। इति तत्साधनपर एव युक्तिक्रमोऽनुसन्धीयते। अत्र च शब्दप्रमाणस्य ज्येष्ठत्वम्। वैज्ञानिके च विधौ न पूर्वसिद्ध: सिद्धान्त: किन्त्वनुसन्धेय:। नापि आप्तवचनस्य शब्दस्य प्रामाण्यं किन्त्वनुभवस्य। प्रयोगा: परीक्षणान्येव च सिद्धान्तस्यावधारणे प्रयोजकानि। नत्वाप्तवचनमात्रं सिद्धान्तावधारणे प्रयोजकम्। वैज्ञानिका हि वस्तुवृत्तं समाहरन्ति, ततस्तेषां वर्गीकरणं सम्पादयन्ति। वर्गीकृतेषु च वस्तुवृत्तेषु सर्वत्रानुस्यूतं सूत्रं परिकल्पयन्ति। ततस्तस्य परीक्षणं प्रयोगं च कुर्वन्ति। तदुत्तरं सिद्धान्तमवधारयन्ति। यथा जलेऽवलम्बितानि भारवन्त्यपि वस्तूनि लघून्यनुभूयन्ते, इति बहुशोऽनुभूतं वस्तुवृत्तं समाहृत्य वर्गीकृत्य च विविधै: प्रयोगै: परीक्षणैश्च 'आर्कमीदिस' इति नाम्ना प्रथितेन विदुषा नियमोऽवधारितो यत् पदार्थस्यायतनान्तर्गतस्य जलस्य यावान् भारो भवति तावानस्य भारो जले न्यूनतामापद्यत इति। तस्मात्—

१ वस्तुवृत्तसमाहार:, २ वर्गीकरणं, ३ अनुस्यूतस्य सूत्रस्य परिकल्पनं, ४ परीक्षणप्रयोगादिकं, ५ नियमावधारणं चेति वैज्ञानिकस्याध्ययनस्य मुख्यानि पञ्चाङ्गानि।

एतत्सहकृतेन विधिना यथा भौतिकविज्ञानानुसन्धानपरा वैज्ञानिका अर्थतत्वमनुसन्दधते: एवं मनोवैज्ञनिका अपि पञ्चाङ्गसहकृतं वैज्ञानिकं विधिमेव स्व-अर्थतत्त्वानुसन्धाने समाद्रियन्ते। एकाग्रताया:, श्रान्ते:, शिक्षणस्य, स्मरणस्य च सम्बन्धिन: सर्वेऽपि मनोवैज्ञानिका

नियमा अनेनैव पञ्चाङ्गेन विधिना निर्धारिताः सन्ति । कोऽपि जनः प्रयोगैस्तेषां प्रामाण्यमवधारयितुं शक्नोति ।

किन्तु मनोविज्ञाने प्रयोगावसरो भौतिकविज्ञानापेक्षया न्यूनतरो भवति । विषाक्तस्य भोजनस्य मनसि प्रतिकूलोऽस्वास्थ्यकरः प्रभावो भवतीति तस्य परीक्षणाय विषाक्तं भोजनं कस्मैचिदपि मनुष्याय प्रदातुं नाधिकृतो वैज्ञानिकः । कदाचित् तीव्रेण केनचिच्छोकावेगेन मानसिकं सन्तुलनं विहाय जनो विक्षिप्ततामुपैतीति तस्य परीक्षणाय तादृशे शोकावेगे कमपि पुरुषं निक्षेप्तुं न प्रभवति कश्चिदपि मनोवैज्ञानिकः । लोकोत्तरप्रतिभाशलिनः कस्यचित् पुरुषस्य मस्तिष्करचनायां किं वैशिष्ट्यं विद्यते इति परीक्षणाय मण्डूकस्याङ्गविच्छेदवत् तत्र शल्यक्रिया नानुज्ञायते । एवं मनोविज्ञाने बहुषु विषयेषु सप्रतिबन्धः प्रयोगावसर इति । यत्र प्रयोगावसरो न भवति तत्र प्रयोगस्थाने निरीक्षणमेवोपादीयते । अत एव वैज्ञानिकविधेः पञ्चाङ्गेषु निरीक्षणं प्रयोगश्चेत्युभयमपि समाविष्टं विद्यते । तदुक्तम्—

वस्तुवृत्तसमाहारो वर्गीकरणमेव च ।
अनुस्यूतस्य सूत्रस्यानुसन्धानं तदन्तरा ॥३॥
परीक्षणैः प्रयोगैश्च नियमस्यावधारणम् ।
अध्ययनस्य पञ्चाङ्गो विधिर्वैज्ञानिको मतः ॥४॥

## मनोविज्ञानस्य विकासक्रमः—

चेतनाचेतनानां मनोव्यापाराणां वैज्ञानिकेन विधिनाध्ययनमेव मनोविज्ञानमिति सामान्यतो मनोविज्ञानस्य स्वरूपं यद्यपि निरूप्यते तथापि तद् विशदं न भवति । तस्य वैशद्याय मनोविज्ञानस्येतिवृत्तमालोचनीयं भवति । मनोविज्ञानवाचकस्य 'साइकालोजी' शब्दस्य आत्मविचारार्थकत्वादात्मैव पूर्वं मनोविज्ञानस्य विषय आसीदिति पूर्वमुपपादितम् । तदा मनोविज्ञानमध्यात्मविद्याया अङ्गमात्रमासीन्न स्वतन्त्रं तस्यास्तित्वमासीत् । गच्छता कालेन विज्ञानस्य प्रभावादात्मन्येव पाश्चात्यविदुषामनाश्वासः समुत्पन्नः । तदा सन्दिग्धमात्मानं परिहृत्य मन एव तेषामध्ययनस्य विषयतामुपगतम् । आत्मतत्वापेक्षया मनस्तत्वं स्थूलतरं प्रचुरव्यवहारविषयं चेति ये जना आत्मसत्तायाः पलायन्ते स्म, बिभ्यति स्म वा, ते मनस्तत्वावष्टम्भेन क्षणिकं सन्तोषमन्वभवन् । किन्तु स सन्तोषोऽप्यस्थिरः क्षणिक एव चासीत् । मनस्तत्वमात्म-

तत्वापेक्षया स्थूलतरमपि वस्तुत आत्मवदेवाभौतिकमनाकारं अप्रत्यक्षं च विद्यते, इति तदपहाय चेतनामात्रावलम्बिनः संवृत्ताः पाश्चात्या विद्वांसः चेतनाया अध्ययनमेव मनोविज्ञानस्य विषय इति किञ्चित्कालपर्यन्तं मनोवैज्ञानिकानां समुद्घोषः समभवत् । किन्तु भौतिकविज्ञानस्यानुदिनमभिवर्धता प्रभावेण निरीक्षण—परीक्षणानर्हा चेतनाऽपि न चिरं विद्वन्मनोग्राहितामलभत । कश्चिद् भौतिकविज्ञानवेत्ता स्वर्णानुसन्धाने निरीक्षणपरीक्षणाभ्यां यादृशं परिणाममधिगच्छति परोऽपि तत्प्रक्रियया तादृशमेव फलमनुभवतीति सर्वजनसंवेद्यम् । स्वर्णस्यापेक्षिकं घनत्वं विविधैरपि परीक्षणैः सममेव लभ्यते । ३२ तापमानमधिगत्य द्रवत्वं विहाय हिमतामापद्यते जलमिति परीक्षणशतैरपि तुल्यैव समुपलब्धिः । किन्तु चेतनाविषये न सार्वजनीनस्तादृशो नियमः । चेतना हि प्रातिस्विकी न लोकसाधारणी । अस्तोन्मुखमादित्यमवलोक्य कश्चिदाह्लादमनुभवति कश्चिच्च दुःखम् । कश्चिन्मालूरफलाय ( विल्वफलाय ) स्पृहयति कश्चिच्च तत उद्विजते, इति व्यक्तिभेदेन भिद्यते चेतनेति न सा वैज्ञानिकाध्ययनस्य विषयतामर्हति । एवं चेतनापि मनोविज्ञानस्य क्षेत्राद् बहिर्गता ।

नात्मा, न मनः, नापि चेतना मनोवैज्ञानिकाध्ययनस्य विषय इति जड़वादिभिरनुस्त्रियमाणायां प्रक्रियायां व्यवहार एवाध्ययनस्य विषयतामभिप्रपेदे । इदानीं मनुष्याणां व्यवहारस्यैवाध्ययनं मनोवैज्ञानिकैः प्रारब्धम् । स च सम्प्रदायो 'व्यवहारवाद' इति नाम्ना प्रथितोऽभवत् । व्यवहारवादिनश्चेतनाया उग्रतमा विरोधिनः संवृत्ताः । ते हि मनोव्यापाराणां विश्लेषणे तादृशं कमपि शब्दमपि न प्रयुञ्जते येन चेतनाया, आत्मनो, मनसो वा कश्चन भ्रमः समुत्पद्येत, चेतनाया अभिव्यक्तिर्वा सम्भवेत् । उग्रतमेन व्यवहारवादिना वाटसन–महोदयेन तु प्रत्यक्षीकरण–[ परसैप्शन ] अनुभव–[ फ़ीलिंग ] प्रतिमा–[ इमेज ] प्रभृतयः शब्दा अपि मनोविज्ञानस्य क्षेत्राभिष्कासिताः । प्रत्यक्षाभिव्यक्तिप्रसङ्गे 'प्रकाशं प्रति प्रतिक्रिया' [ रेस्पान्स टु लाइट ] 'शब्दं प्रति प्रतिक्रिया' [ रेस्पान्स टु साउण्ड ] 'गन्धं प्रति प्रतिक्रिया' [ ओलफैक्टरी रेस्पान्स ] इत्येवमादीन् शब्दानसौ प्रयुङ्क्ते । अस्मिन् सम्प्रदाये मनोविज्ञाने नाडिमण्डलस्याध्ययनं मनोव्यापाराणामध्ययनस्य स्थानमधितिष्ठतीति मनोविज्ञानं वस्तुतः शरीरविज्ञानस्य कक्षामध्यास्ते ।

अचेतनमनोवादिनामपि मनोविज्ञानक्षेत्रे एकोऽभिनवः सम्प्रदाय

आविर्भूतोऽवलोक्यते। व्यक्तादपि मनसोऽव्यक्तमचेतनं वा मनो महत्त्वपूर्णं प्रबलतरं चेति तेषामभिमतम्। वयं यत्किमपि विचारयामः, कथयामः, कुर्मो वा तत्र प्रायशोऽचेतनमव्यक्तं वा मन एव प्रयोजकमिति केषाञ्चिदज्ञातनिमित्तानां कार्याणां विवेचनेन प्रतीयते। इदमकार्यमनुचितं च, नाहं पुनरेतत्करिष्यामि इति कृतनिश्चया अपि समुत्पन्ने प्रसङ्गेऽवशा इव पुनस्तदनुतिष्ठन्तीति प्रातिस्विकोऽनुभवः। तत्रेदमचेतनमव्यक्तं वा मन एव प्रयोजकम्। अचेतनमनोनिष्ठाः संस्काराः सप्रयत्नमर्जितानपि संस्कारानभिभूय पुण्ये पापे वा अवशमिव पुरुषं प्रवर्तयन्ति। निरामिषभोजिनां सद्वृत्तपरायणानां वंशे समुत्पन्नः कश्चिन्, सहवासिनां संसर्गादामिषभक्षणादिसमर्थकः सन्नपि समुपस्थिते तादृशे प्रसङ्गे न शक्नोति तदनुष्ठातुं, तीव्रमुद्वेगं चानुभवति। तत्राव्यक्तमनोनिष्ठाः संस्कारा एव मूलम्। ते हि द्रागेवार्जितान् संस्कारानभिभूय पुरुषमामिषभक्षणान्निवर्तयन्ति।

जानामि धर्मं न च मे प्रवृत्तिः, जानाम्यधर्मं न च मे निवृत्तिः।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥

इत्यत्र देवस्य यत् प्रयोजकत्वं प्रदर्शितं तदेवास्मिन्नव्यक्तमनोवादेऽव्यक्तस्य मनसः कार्यम्। मनोविज्ञानस्यायमेव सम्प्रदायो 'नूतनं मनोविज्ञानम्' इति नाम्ना व्यवह्रियते। अयमेव 'मनोविश्लेषणवादः' इत्यप्यभिधीयते। फ्रायड-महोदयो, युंग-महोदयः एडलर-महोदयश्चात्र प्रधानाचार्याः।

मनुष्याणां मनोविज्ञानमेवाभिलक्ष्य पूर्वोक्ताः सर्वेऽपि सम्प्रदायाः प्रवृत्ता आसन्। किन्तु पशूनामपि मनोविज्ञानमाधुनिकस्य मनोविज्ञानस्य विषयतामवगाहते। पशूनां मनोविज्ञानमपि मानवे मनोविज्ञाने महदुपकरोतीति तत्रापि नव्यानां मनोवैज्ञानिकानां साधीयसी सम्प्रवृत्तिः। तदयमत्र संग्रहः—

आदावध्यात्मविद्यैव मनोविज्ञान—शब्दतः।
गृह्यते स्म तदासीन्नो तत्तु शास्त्रान्तरं ततः॥५॥
सौक्ष्म्याद्विहाय चात्मानं मनसोऽध्ययनं ततः।
विषयत्वं प्रपेदेऽत्र मनोविज्ञान-शास्त्रके॥६॥
मनोऽप्यचेतनं सूक्ष्मं इति तुष्टिस्तदाश्रयात्।
नो जातेति विषयत्वं चेतनैव क्रमाद् गता॥७॥

चेतना चाप्यसामान्या भिद्यते व्यक्तिभेदतः ।
नो योग्येति व्यवहारो विषयोऽस्य ततोऽभवत् ॥८॥
व्यवहारेऽपि प्राधान्यं नाड़ितन्त्रे समागतम् ।
मनोविज्ञानमप्येवं गतं शारीर—शास्त्रताम् ॥९॥
ततोऽव्यक्तमनोवादो नूतनः पुनरुत्थितः ।
मनोविश्लेषवादोऽपि कथ्यतेऽत्र ततश्च सः ॥१०॥

## मनोविज्ञानस्य लक्षणम्--

मनोविज्ञानस्यैतेनेतिवृत्तविवेचनेन एतत्स्फुटी भवति यद् व्यवहार-वादिनां सम्प्रदायं विहाय प्रायः सर्वेऽपि सम्प्रदाया मनोव्यापाराणा-मध्ययनमेव मनोविज्ञानस्य प्रधानं विषयमाकलयन्ति । पशूनां मनो-विज्ञानेऽपि मनोव्यापारा एव अध्ययनस्य विषया भवन्ति । केवलं व्यवहारवादिनामेवात्र विप्रतिपत्तिः । ते हि व्यवहारमात्रमेवाध्ययनस्य विषयमभ्युपगच्छन्ति । व्यवहारो मनोविज्ञानस्याध्ययनेऽतीवसहायको भवति महदुपकारं च करोतीत्यत्र नापरेषां मनोवैज्ञानिकानां विप्रतिपत्तिः। किन्तु व्यवहारवादिनो व्यवहारमात्रमेव सर्वस्वं मन्यन्त इत्येतावन्मात्र-मनुचितं अयौक्तिकं च। मानवस्य व्यवहारा बहुविधा भवन्ति। न खलु ते सर्वेऽपि मनोविज्ञाने उपयुक्ता भवन्ति, न वा मनोवैज्ञानिकस्तेषां सर्वेषा-मध्ययनं करोति। मनः प्रेरितानां विशिष्टानां व्यवहाराणामेव मनोविज्ञान-स्याध्ययने विशिष्ट उपयोगः । इत्यनिच्छतामपि व्यवहारवादिनां मनो-व्यापारा एव मनोविज्ञानस्य विषयतामधिगच्छन्ति । अव्यक्तमनो-वादिनामव्यक्तमचेतनं वा मनोऽपि मनोविज्ञानस्य महदुपकारकं भवति अत एव आत्मवादिनां, मनोवादिनां, व्यवहारवादिनां, अव्यक्तमनो-वादिनां, पशुमनोविज्ञानवादिनां च सर्वेषामप्यभिमतं संगृह्य 'व्यक्ताव्यक्त-मनःप्रेरितानां मानवव्यवहाराणां वैज्ञानिकेन विधिनाध्ययनं मनोविज्ञान-मिति' परिनिष्ठितं मनोविज्ञानस्य लक्षणं संवृत्तम् । पशुमनोविज्ञानस्य मानवमनोविज्ञाने साधनमात्रत्वेनस्वातन्त्र्याभावान् मानवव्यवहारपदनिवेशे तत्राव्याप्तिरिति नाशङ्कनीयम् । तदिदं परिनिष्पन्नं मनोविज्ञानस्य लक्षणम्-

वैज्ञानिकमध्ययनं मनोव्यापारमात्रगम् ।
क्रियते यत्र तच्छास्त्रं मनोविज्ञानमुच्यते ॥११॥

## मनोविज्ञानस्याध्ययनविधिः—

मनोविज्ञानमपि विज्ञानस्यैकं प्रधानमङ्गमिति तत्राप्यध्ययनस्य वैज्ञानिक एव विधिराश्रयणीयो भवति। वैज्ञानिकस्य विधेः पञ्चाङ्गानि पूर्वमुपदर्शितानि। तानि सर्वाण्यत्राप्युपयुज्यन्ते। किन्तु विज्ञानान्तरापेक्षया मनोविज्ञाने किञ्चिद् वैशिष्ट्यं विद्यते, इत्यध्ययनविधावप्यत्र वैशिष्ट्यं लक्ष्यते। मनोविज्ञानं खलु चेतनस्य भाषाविदो मनुष्यस्य व्यवहाराणां वैज्ञानिकमध्ययनं करोति। विज्ञानान्तराणि तु भौतिकानामचेतनानां पदार्थानामेवाध्ययनं कुर्वन्तीति चेतनाचेतनविषयकत्वान् तेषां स्फुटो भेदः। मनोविज्ञानस्य चेतनसम्बन्धित्वात् तत्र अन्तर्दर्शनं मनोविश्लेषणं चेत्यङ्गद्वयं परमप्युपयुज्यते। पञ्चाङ्गादपि वैज्ञानिकस्याध्ययनविधेः निरीक्षणपरीक्षणात्मकं प्रधानमङ्गद्वयमुपयुज्यते इति निरीक्षणपरीक्षणे ऽन्तर्दर्शनं मनोविश्लेषणं चेति चत्वारि प्रमुखानि मनोविज्ञानेऽध्ययनस्याङ्गानि। केचित् तु तुलनामपि पञ्चममध्ययनाङ्गमिच्छन्ति!

निरीक्षणं अन्तर्दृष्टिः परीक्षा तुलना तथा।<br>
मनोविश्लेषणं चेति पञ्चात्र विषयो मताः॥१२॥

## १ निरीक्षणम्—

तत्र वैज्ञानिकान्तरवत् मनोवैज्ञानिकोऽपि निरीक्षणमेव प्रथममध्ययनाङ्गमवलम्बते। केचिदभिनवमपि विषयमनायासेनाञ्जसा गृह्णन्ति। परे तु महता प्रयासेनापि तमवबोद्धुमक्षमा एव तिष्ठन्ति। देशकालावस्थाद्यनवच्छिन्नोऽयं सार्वत्रिको भेदानुभव इति समवलोक्य,तत्र बुद्धिभेदं बीजमित्यनुमिनोति। सर्वेष्वपि मनुष्येषु आहारप्रवृत्तिं रचनाप्रवृत्तिं कामादिप्रवृत्तिं चानुगतां निरीक्ष्य मौलिकप्रवृत्तीनामवधारणं करोति। शिक्षणे कीदृशो व्यवहारः क्रियते, स्खलितस्य प्रयत्नस्य वा साफल्यस्यासाफल्यस्य वा भाविनि पुरुषव्यवहारे कीदृशः प्रभावो भवतीति निरीक्ष्य शिक्षणस्य सामान्यं नियममवधारयति। इत्येवं दैनिके जीवने परिस्थित्यादिभेदे, व्यवहारभेदं, परिस्थित्यादिसाम्ये च व्यवहारसाम्यं निरीक्ष्यानुरूपं परिणाममाकलयति। अयमेवात्र निरीक्षणविधिरित्यभिधीयते। तदुक्तम्—

वृत्तं नैसर्गिकं; वृत्तिं, वावलोक्य पुनः पुनः।<br>
फलमुन्नीयते यत्र कथ्यते तन्निरीक्षणम्॥१३॥<br>
सहजोऽयं विधिर्यस्मात् ततः पूर्वं प्रयुज्यते।<br>
तदभावे पुनर्विज्ञैः विधिरन्यः परीक्ष्यते॥१४॥

## २. परीक्षणम्—

स्वाभाविकस्य वस्तुवृत्तस्य निरीक्षणं भवति। अभीष्टस्य वस्तुवृत्तस्य स्वाभाविकी स्थितिः सर्वदा सुलभा न भवति। नापि निश्चिता भवति। अस्मदभीष्टं वस्तुवृत्तं झटित्येव निरीक्षणपथमागच्छेद् बहुना कालेनापि वा नागच्छेदिति तदनिश्चितमेव। अत एव वैज्ञानिकान्तरवन्मनोवैज्ञानिकोऽपि कृत्रिमं वातावरणं समुत्पाद्य स्वयमावश्यकतानुरूपां मनोवृत्तिमुपजनयति नियन्त्रयति च। अनेन कृत्रिमेणोपायेन समुत्पादितायां स्थितौ मनोवृत्तीनामध्ययनमेव परीक्षणमित्युच्यते। भौतिकेषु प्रयोगेषु परीक्षणं हि प्रश्नात्मकं भवति। जडा प्रकृतिस्तस्य प्रश्नस्य यथेष्टं यथार्थं चोत्तरं दातुं विवशेव प्रवर्तते। उद्रजनस्य परमाणुद्वयेन ओषजनस्य अणुमात्रस्य योजने किं भवतीति प्रयोगात्मकश्चेत् प्रश्नः समुपस्थाप्यते, जडा प्रकृतिर्विवशेव जलमित्युत्तरयति। कोऽपि कस्मिंश्चिदपि स्थाने तादृशं प्रयोगं कुर्यात्, तादृशं प्रश्नं समुपस्थापयेत्, जडा प्रकृतिर्यथार्थोत्तरदानाय स्वरहस्योद्घाटनाय वा बाधितेव भवति। किन्तु चेतनोऽयं मानवस्ततो भिद्यते। नायं सर्वत्र समाने प्रश्ने समानमुत्तरयति नापि स्वरहस्योद्घाटनाय बाधितो भवतीति मनोवैज्ञानिकानां पन्था अत्रापि विषम एव। तस्य परीक्षणमपि साफल्याय लोकानां सहयोगं, धैर्यं, परीक्षकस्य जागरूकतां चापेक्षते। अयमेव विधिः परीक्षणविधिरित्युच्यते। स्वाभाविकस्य वस्तुवृत्तस्य निरीक्षणं भवति परीक्षणन्तु कृत्रिमं वातावरणमपेक्षत इत्यनयो-र्निरीक्षणपरीक्षणविध्योर्भेदः।

मनोवैज्ञानिकस्य परीक्षणविधिरपि प्रतिबन्धसंकुलो विषमश्चेति प्रतिपदमनुभूयते। विषाक्तस्य पदार्थस्य मस्तिष्के कीदृशः प्रभावो भवतीति परीक्षणाय स कस्मैचिदपि मानवाय विषाक्तं भोजनं दातुं न प्रभवति। यत्रापि प्रयोगे स्वातन्त्र्यं भवति तत्रापि प्रकारान्तरेण काठिन्यं समुपस्थितं भवति। कस्यापि पुरुषस्य स्मरणशक्तिं परिमातुं प्रयोगमारभते मनोवैज्ञानिकः। कियन्ति निरर्थकान्यक्षराणि कियद्वा निरर्थकमक्षरसमुदायं नियतेन कालेनायं स्मर्तुं शक्नोति इत्यस्यावधारणमेव तत्राभ्युपायः। स्मृतानां वर्णानां संख्ययैव मे बुद्धे-र्निर्णयो भविष्यतीत्यवगम्य स परीक्ष्यः पुरुषो निखिलमपि स्वसामर्थ्यं तत्रैव केन्द्रितं करोति। मनोवैज्ञानिकस्तु तस्य केवलं स्मरणसामर्थ्यमेव परिमातुमिच्छति किन्तु परीक्ष्यपुरुषस्य कृते न केवलं स्मृतेः किन्तु अभिरुचेरवधानस्यात्मगौर-

वस्य चायं प्रश्नः संवृत्त इति परीक्षणीया स्मरणशक्तिरत्र शक्तीनां समूहे तथा संसृष्टा सञ्जाता यथा तेन परीक्षणेन तद्विषये न निर्भ्रान्तो निर्णयः सम्भवति। एवं च यदि परीक्ष्यपुरुषः श्रान्तोऽस्वस्थो वास्ति केनापि कारणान्तरेण वा सुसन्नद्धो नास्ति तदापि सामान्यं यथार्थं च फलं न भवति। एवमुत्साहातिरेकेऽप्यसाधारणमेव फलमुत्पद्यते। तस्मात् परीक्षणविधावपि मनोवैज्ञानिकस्य विषमः पन्थाः। तदयमत्र संग्रहः—

नैसर्गिकस्य वृत्तस्य सुलभत्वं न सर्वदा।
कृत्रिमं वृत्तमुत्पाद्य क्रियतेऽतो परीक्षणम् ॥१५॥
भौतिकेषु परीक्ष्येषु प्रकृतिस्तुल्यमुत्तरम्।
विदधातीति तत्रायं न मार्गो विषमो मतः ॥१६॥
मानवेषु परीक्ष्येषु न प्रायस्तुल्यमुत्तरम्।
लभ्यतेऽथ कदाचिच्च सर्वथापि न लभ्यते ॥१७॥
अयोगेनातियोगेन चित्तस्य कृत्रिमस्थितौ।
फलं विक्रियते तस्मात् मार्गोऽत्र विषमो मतः ॥१८॥

## ३ अन्तर्दर्शनम्—

अन्तर्दर्शनं खलु मनोविज्ञानस्य प्रधानमङ्गम्। सर्वतः प्रागन्तर्दर्शनमेव मनोविज्ञानस्य प्रमुखमेकमात्रं वा प्रमाणमासीत्। मनोवैज्ञानिकाः कामपि मनोदशामवलम्ब्य एकान्ते स्थित्वा विचारयन्ति स्म। स्वान्तर्दर्शनानुरूपं स्वविचारानुरूपं वा फलमाकलयन्ति स्म। किन्तु मनोव्यापारास्त्वसाधारणा एव भवन्ति। नान्यस्य मनोवृत्तिमन्यः प्रत्यक्षीकर्तुं प्रभवति। नापि सर्वेषां सामान्या विचारसरणिरिति तेषामन्तर्दर्शनानि भिन्नानि विप्रतीपान्यपि च भवन्ति स्म। इति भौतिकविज्ञानवादिभ्यो नातिरोचते स्म। तेन तैरन्तर्दर्शनस्यावैज्ञानिकत्वमुद्घोषितम्। किं च पशुमनोविज्ञानस्य, बालमनोविज्ञानस्य, अस्वस्थमनोविज्ञानस्य चाविर्भावेणापि अन्तर्दर्शनस्य वैयर्थ्यं प्रसक्तम्। न खलु पशवो नापि वा बाला अन्तर्दर्शनं कर्तुं क्षमन्ते। अस्वस्थमनस्काः प्रौढा अप्यन्तर्दर्शनानर्हा एवेति मनोव्यापाराणामल्पीयानेव भागोऽन्तर्दर्शनस्य विषयतामवगाहते।

परिमितेऽपि तस्मिन्नन्तर्दर्शनस्य क्षेत्रे प्रतिबन्धप्रचुर एव विषमो मार्गः। कचिदत्यद्भुतेऽति-मनोहरे वा दृश्ये समुपस्थिते मनोवृत्ति-

स्तदास्वादे तथा निमज्जति यथा नान्तर्दर्शनायावकाशमपि लभते। क्वचिद् विषयभूता मनःक्षोभा एव तादृशाः क्षणिका अस्थिराश्च भवन्ति येऽन्तर्दर्शनकालं नावतिष्ठन्ते। वस्तुतोऽन्तर्दर्शनं मनःक्षोभस्य विरोध्येव। यदैव कस्यापि मनःक्षोभस्य विषयेऽन्तर्दर्शनात्मको विचार आरभ्यते तत्क्षणमेव मनःक्षोभो विलीयते। न हि क्रोधस्य विवेचनाकाले स्थातुं प्रभवति क्रोधः। अत एव जेम्स-महोदयेन मनःक्षोभस्यान्तर्दर्शनविधिना परिज्ञानस्य प्रयासः प्रबलेन प्रकाशेन अन्धकारस्यावलोकनप्रयाससदृश एवेति प्रतिपादितम्। एवंविधेषु स्थलेष्वन्तर्दर्शनं वस्तुतो अनुप्रेक्षणमात्रं भवति नान्तर्दर्शनम्। तदा स्मृतिबलेन पूर्ववर्तिनीं मनःस्थितिमेवावगच्छामो न तु विद्यमानां मनोवृत्तिमन्तर्दर्शनेनावलोकयामः।

किं च यत्राप्यन्तर्दर्शनस्य प्रामाण्यं सम्भवति तत्रापि तदभिव्यञ्जनाय भाषाया माध्यममपेक्ष्यते। तच्च भावाभिव्यक्तौ नितान्तमक्षममपर्याप्तं चेत्यपरमपि काठिन्यम्। कस्यापि विशिष्टस्य रसस्य, सुन्दरस्य रूपस्य, मोहकस्य स्पर्शस्य मूकगुडायितेव भावाभिव्यञ्जनाक्षमा भवति वागिति, अन्तर्दर्शनस्य अवैज्ञानिकत्वमेव समुद्घोषितं भौतिकविज्ञानोपासकैः। किन्तु त्रुटिपूर्णमपर्याप्तमपि चान्तर्दर्शनं नैकान्तमुपेक्षणीयमेव। निरीक्षण-परीक्षणादिसहकारेण तस्य पर्याप्तं परिमार्जनं सम्भाव्यते। भौतिकविज्ञानेऽपि मधुराम्लादिरसानां निर्देशेऽन्तर्दर्शनमेव प्रमाणी-क्रियते। न च परेऽपि वैज्ञानिका विधयो नितान्तं निर्दोषाः, तत्र सत्यपि दोषसङ्करे यथा प्रमाण्यमभ्युपेयते तथात्रापि बहुशस्तत्वज्ञानाभ्युपायत्वादन्तर्दर्शनस्य प्रामाण्यमभ्युपेयमेव। तथा चोक्तम्—

> वृत्तिमन्तर्मुखीं कृत्वा स्व-भावानां विवेचनम्।
> क्रियतेऽयं विधिस्त्वत्र अन्तर्दर्शनको मतः ॥१९॥
>
> अयमेव विधिः पूर्वं मनोभाव-विवेचने।
> आसीत् समादृतो नूनं अधुनायमुपेक्षितः ॥२०॥
>
> यतो भिन्नं फलं लब्धं विधिनानेन सर्वदा।
> बालादयो न तद्योग्याः ततोऽवैज्ञानिकोऽधुना ॥२१॥
>
> किन्त्ववैज्ञानिकोऽप्येष नोपेक्ष्य एव सर्वथा।
> रसास्वादे स एवात्र भौतिकैरादृतो यतः ॥२२॥

## ४ मनोविश्लेषणम्—

मनोविश्लेषणवादिनां मते चेतनमचेतनं चेति द्विविधं मनः। व्यक्तसंस्कारमभिव्यक्तव्यापारं च मनश्चेतनम। इदमेव व्यक्तं मन इत्यप्युच्यते। किन्तु तदपेक्षयाप्यव्यक्तमचेतनं वा मनो महत्वपूर्णं भवति। पुरुषो बहूनि कार्याणि तथाभूतान्यपि करोति येषां कारणं न स्वतो जानाति नापि प्रतिपादयितुं शक्नोति। तत्राव्यक्तमनोनिष्ठाः संस्कारा एव प्रयोजका इति मनोविश्लेषणवादिभिर्निर्धारितम्। अस्मिन् विषये मनोविज्ञानग्रन्थेषु बहूनि शोभनानि निदर्शनानि समुपलभ्यन्ते। एकः पुरुषस्तर्जनीति नाम्ना प्रथितयांगुष्ठसमीपवर्तिन्यांगुल्या स्वांगुष्ठस्य प्रतिक्षणं मर्दनं करोति स्म। एष तस्य स्वभाव एव संवृतः। बहुशो जनैः पृच्छ्यमानोऽपि किमर्थमसौ प्रतिक्षणमंगुष्ठं मर्दयतीति स्पष्टीकर्तुं नापरयत्। न वा स्वयं जानाति स्म। तेन कदाचित् कस्मिंश्चिद्राजपत्रे राजनियमानुसारं तस्यांगुष्ठस्य चिन्हमङ्कितमासीत्। तेन महती तस्य क्षतिरभवत्। अस्या घटनायास्तस्याव्यक्ते ऽचेतने मनसि तादृशः संस्कारः सञ्जातो येन तदंगुष्ठगतां मर्सि प्रक्षालयितुमिव प्रतिक्षणमंगुष्ठमर्दनं तस्य स्वभाव एव संवृत्तः। कालपरिपाकवशात् तस्य चेतने मनसि विलीना, विलुप्ता, विस्मृतापि च सा घटना अचेतने अव्यक्ते मनसि बद्धमूला स्वतोऽदृश्यमानाज्ञायमानापि च पुरुषमंगुष्ठमर्दने प्रवर्तयति स्म। एवमचेतनमनोनिष्ठाः संस्कारा अदृश्यमाना अज्ञायमाना अपि च पुरुषस्य बाह्यं व्यापारं प्रभावयन्ति। तेषां परिज्ञाने मनोविश्लेषणविधिरेव शरणम्।

मनोविश्लेषणनिष्णाता मनोवैज्ञानिकाः पुरुषस्यातीतमितिवृत्तमनुसन्धाय तस्याचरणस्याध्ययनं च कृत्वा प्रकारान्तरतोऽज्ञायमाननिमित्तानामप्यसाधारणानां व्यवहाराणां मूलमनुसन्दधति। न केवल मितिवृत्तानुसन्धानेनैव किन्तु तस्य पुरुषस्यस्वानुभवैः, निरर्थिकाभिश्चेष्टाभिः, एकान्तकृतै-र्जल्पितैः, स्खलितैरुन्मादादिचेष्टितैरपि च ते निमित्तभेदानुन्नयन्ति, अचेतनमनोव्यापारांश्च प्रत्यभिजानन्ति। तेषां मते पुरुषस्य न कापि चेष्टा निरर्थिका अहेतुका वा। अचेतनमनोनिष्ठानामव्यक्तसंस्काराणामपरिज्ञानादेव तासां वैयर्थ्यं प्रतिभाति। कस्यचिद्रोगिणश्चिकित्साप्रसंगेनैव, मनोविश्लेषणसिद्धान्तोऽयं डाक्टर फ्रायडमहोदये-

नाविष्कृतः। तस्य प्रयोगोऽपि मानसिकरोगाणां शारीरिकरोगाणां वा चिकित्सायां बाहुल्येन क्रियते । अस्वस्थमानसानां बालकानां सुधारे चरित्रनिर्माणेऽपि चास्य विधेः पाश्चात्यै-र्विपश्चिद्भिः प्राचुर्येण प्रयोगो विधीयते। तदयमत्र संक्षेपः—

मनोविश्लेष-सिद्धान्तो नूतनैः फ्रायडादिभिः।
आविष्कृतोऽथ चाद्यत्वे मतः श्रेष्ठतमस्तु सः ॥२३॥
व्यक्तं मनोऽत्र चाव्यक्तं द्विविधं मन उच्यते।
तत्राव्यक्तं मनो व्यक्तादपि ज्येष्ठतरं मतम् ॥२४॥
तथाविधोऽपि व्यापारो यस्य हेतुर्न ज्ञायते।
दृश्यते बहुधा लोके स चाऽव्यक्त-मनोभवः ॥२५॥
निरर्थिकाभिश्चेष्टाभिः स्खलितैर्जल्पितैस्तथा।
तत्राव्यक्त - मनोनिष्ठं मूलं तेषां तु मृग्यते ॥२६॥
अविज्ञात-निदानानां रोगाणामपि कारणम्।
विधिनानेन विज्ञाय साफल्याय चिकित्सितम् ॥२७॥
तस्मादयं विधिर्नव्यैः मनोविज्ञान-वेत्तृभिः।
सर्वविधेऽपि व्यापारे सादरं तु समादृतः ॥२८॥

## ५ तुलना—

तुलनामपि केचिन्मनोविज्ञाने पञ्चममध्ययनविधिं मन्यन्ते। विषाक्तस्यान्नस्य कीदृशो मानसिकः प्रभावो भवतीति परीक्षणाय कस्मैचिदपि मनुष्याय विषाक्तं भोजनं दातुं मनोवैज्ञानिको नाधिकृतः। उन्मादावस्थाया मनोवृत्तीनामनुसन्धानाय निरीक्षणमेवाभ्युपायः। तदभावे कमपि पुरुषमुन्माददशायामानीय परीक्षणं कर्तुं न शक्यते, इत्येवमादयो ये परीक्षणविधौ दोषाः प्रदर्शितास्तेषामांशिकं परिमार्जनं पशुमनोविज्ञानस्यानुसन्धानेन सञ्जातम्। यानि परीक्षणानि मनुष्ये कर्तुं न शक्यन्ते तानि पश्वादिषु निर्बाधमनुष्ठीयन्ते। मनुष्याणां पशूनां च मूलप्रवृत्तीनां विषये बहुलं साम्यमुपलभ्यते । अत एव पशुषु कृतैः परीक्षणै-र्मानव-स्वभावस्य, मानवमनोवृत्तीनां च तत्साम्यात् तदध्ययनं सौकर्यं सञ्जायते। अयमेव विधिस्तुलनाविधिरित्युच्यते। अस्य विधेः प्रयोगेऽपि मनोवैज्ञानिकः सतर्कैः स्थातव्यम्। पशुमनुष्ययोः वृत्तिसाम्येऽपि न खलु तदैकान्तिकं साम्यं, तत्र भेदस्यापि विद्यमानत्वात्। पशूनां मूलप्रवृत्तयो न तथा क्षिप्रं परि-

वर्तनशीला यथा मनुष्याणाम्। नापि पशुषु मनुष्यवद् बुद्धियोगो नाप्युभयोः स्वभावे सर्वात्मकं साम्यमिति तुलनाविधिरपि सप्रतिबन्धो ऽनैकान्तिकश्चेति विशिष्टमवधानमपेक्षते। अयमत्र संग्रहः—

परीक्षार्थं विषं क्वापि मानवाय न दीयते।
न वाप्यत्याहितं किञ्चित् प्रयोक्तुं तत्र शक्यते ॥२९॥
तस्मात् प्रतिहतस्तत्र परीक्षाया विधिर्यतः।
परिहाराय तस्यायं तुलनाविधिराश्रितः ॥३०॥
मनुष्येषु प्रयोगो यो न कर्तुं शक्यते बुधैः।
स पश्वादौ विधायाथ मानवेष्वतिदिश्यते ॥३१॥
तुलनाविधिनाम्नायं विधिः प्रोक्तस्ततो बुधैः।
किन्तु स्वभावभेदादेः सदोषोऽयं विधिर्मतः ॥३२॥

## मनोविज्ञानस्य शाखाः—

पूर्वमध्यात्मविद्यान्तर्भूतमपि मनोविज्ञानं स्वातन्त्र्यमुपलभ्येदानीमनुदिनं प्रवर्धते। यावज्जीवनस्यापि विज्ञानं च संवृत्तम्। जीवनस्य नास्ति कोऽपि तादृशो भागो यत्र मनोविज्ञानस्य गतिरपेक्षा वा न भवेत्। अत एव मनोविज्ञानस्येदानीं प्रचुराः शाखाः प्रशाखाः समुत्पन्ना दृश्यन्ते। तत्र १ सामान्यमनोविज्ञानं, २ प्रयुक्तं मनोविज्ञानं, ३ विक्षिप्तमसाधारणं वा मनोविज्ञानमिति मुख्यास्तिस्रः शाखाः। तत्र च सामान्यं मनोविज्ञानमपि वैयक्तिकमनोविज्ञानं सामाजिकमनोविज्ञानं चेति द्विविधम्। द्वितीयं प्रयुक्तं मनोविज्ञानमपि शिक्षामनोविज्ञानं, बालमनोविज्ञानं व्यापारमनोविज्ञानं चेति त्रिविधम्। तृतीयं विक्षिप्तमनोविज्ञानमसाधारणमनोविज्ञानं वा पूर्वोक्तान्मनोविज्ञानपञ्चकाद् भिन्नमेव।

### १ वैयक्तिकं मनोविज्ञानम् [सामान्यमनोविज्ञानस्याद्यं रूपम्]:—

वैयक्तिकं मनोविज्ञानमेव मनोविज्ञानस्याद्यं रूपमस्ति। पूर्वं हि विद्वांसोऽन्तर्दर्शनात्मकेन प्रधानेन विधिना स्वमनोवृत्तीनामध्ययनं विश्लेषणं च कुर्वन्ति स्म। आत्मसाम्येन तुलनाविधिमवलम्ब्य परेषामपि वृत्तीनां वैयक्तिकमध्ययनं पूर्वत एवानुवृत्तं दृश्यते। तदेवेदानीं वैयक्तिकं मनोविज्ञानमिति विश्लेषणात्मकं मनोविज्ञानमिति च व्यवह्रियते। अत्रान्तर्दर्शनविधिरेव मुख्यः,तुलनाविधिरपि सहायकः। मनोविज्ञानस्यापरः सर्वोऽपि विस्तारोऽस्यैव बीजभूतस्य प्रपञ्चः।

## २—सामाजिकं मनोविज्ञानम् [सामान्यमनोविज्ञानस्य द्वितीयं रूपम्]—

सामाजिकं मनोविज्ञानं सामाजिकस्य मनसोऽध्ययनं करोति। व्यक्तिरूपेण समाजरूपेण च पुरुषस्य व्यवहारे भेदो दृश्यते। यः पुरुषो वैयक्तिरूपेणार्तो नम्रः शिष्टश्चास्ति स एव कदाचिदेकत्र समवेतानां विद्रोहिणामुपद्रवकारिणां समुदायेऽन्तर्भूतो नात्मनो विनम्रं स्वभावमनुवर्तते किन्तु लोकान्तरवदशिष्टमभद्रं च व्यवहरति। तत्र न वैयक्तिकं मनः किन्तु सामाजिकं मन एव प्रयोजकमिति वैयक्तिकान्मनसो भिन्नं सामाजिकं मनः। सामाजिके मनोविज्ञाने तस्यैव सामाजिकस्य मनसोऽध्ययनं भवति। मनुष्यस्य स्वभाव एव समाजस्याधार इति मनुष्यस्य समाजोपयोगिनीनां मनोवृत्तीनामध्ययनं तद्विकासोपायानामनुसन्धानं च सामाजिकमनोविज्ञानस्य कार्यम्। निरीक्षणमेव सामाजिकस्य मनोविज्ञानस्य प्रधानमध्ययनसाधनम्।

## ३—शिक्षामनोविज्ञानम् [प्रयुक्तमनोविज्ञानस्याद्यं रूपम्]—

शिक्षामनोविज्ञानं मनोविज्ञानस्याभिनवं महदुपयोगि चाङ्गम्। बालानां शिक्षणस्य भारो येषां स्कन्धेषु निहितस्ते शिक्षका यदि मनोवैज्ञानिकीं सरणिमवलम्ब्य स्वकार्ये प्रवर्तन्ते तदा तेषां कार्यं हृद्यतरं चारुत्वातिशययोगि च सम्पद्यते। अध्ययनात् पलायमाना अपि बालका मनोवैज्ञानिकीं सरणिमनुसरन्तीषु पाठशालासु बद्धस्पर्धा अहमहमिकया परापतन्ति स्वाभिमतस्य विषयस्याध्ययनाय स्पृहयन्ति च। इयं हि शाखा परीक्षणप्रधाना। यथा वैयक्तिके मनोविज्ञानेऽन्तर्दर्शनस्य, समाजिके मनोविज्ञाने च निरीक्षणस्य प्राधान्यं तथात्र शिक्षामनोविज्ञाने परीक्षणविधेः प्राधान्यम्। अत्र बालकानां बुद्धेः स्मरणशक्तेश्च मापने प्रयोगा अनुष्ठीयन्ते, विभिन्नविषयाणामध्यापनविधिः स्मरणविधिश्च परीक्ष्यते, श्रान्तेरभिरुचेरवधानस्य च नियमाः परीक्ष्यावधार्यन्ते।

## ४—बालमनोविज्ञानम् [प्रयुक्तमनोविज्ञानस्य द्वितीयं रूपम्]—

यथा शिक्षामनोविज्ञानं शिक्षकाणां कृते आवश्यकं तथैव बालानां लालन-पालनपरयोः पित्रोः कृते अपरिहार्यं बालमनोविज्ञानम्। हर्बर्ट-स्पेन्सर महोदयेन तु सर्वेषां कृतेऽस्य परिज्ञानमपरिहार्यमुद्घोषितम्। बालमनोविज्ञानं हि बालस्वभावस्याध्ययनं करोति। अस्माभिरपि बाल्य-

मतिवाहितं, इदानीमप्यभितो बालैः परिवृता अपि वयं न तेषां स्वभाव-स्यावधारणे पारयामः। इदानीं बालमनोविज्ञानस्य साहाय्येन बालस्व-भावस्यावधारणं सुकरं सञ्जातम्। अस्य यथावदुपयोगेन बालानां लालने पालने च महानुपकारो भवति।

**५—व्यापारमनोविज्ञानम् [प्रयुक्तमनोविज्ञानस्य तृतीयं रूपम्]—**

यथा हि नाम्ना प्रतीयते मनोविज्ञानस्येयं शाखा व्यापारिणां कृतेऽत्यन्तमुपयोगिनी। व्यापारमनोविज्ञानस्य यथावदुपयोगेन ग्राहकाणा-माकर्षणे प्रसादने च दाक्षिण्यमुपजायते। कर्मकराणां मनोवृत्तेः संपरि-ज्ञानेनोद्योगपतीनां कर्मकराणां च कलहप्रसङ्गा विरलतामापद्यन्ते। ये हि व्यापारिणो मनोवैज्ञानिकीं सरणिमनुसरन्तो व्यापारं परिचालयन्ति ते सर्वकार्ये प्रचुरं साफल्यमधिगच्छन्ति।

**६—असामान्यं मनोविज्ञानम्—**

यथा हि रोगिणो जनानवलोक्य स्वास्थ्यस्य मूल्यं स्फुटतरं भवति एवमसाधारणानां पुरुषाणां मनोवृत्तयो वैज्ञानिकेन विधिना विविच्य-मानाः सामान्यमनोवृत्तीनां परिज्ञाने महदुपकुर्वन्ति। अस्मिन् युगेऽस्य मनोविज्ञानभेदस्य प्राधान्यं विद्यते। मनोविश्लेषणविधिरपि अस्यैव अध्ययनविधेरङ्गभूतः। इदं विक्षिप्तमनोविज्ञानमित्यप्यभिधीयते। पुरुषेण स्वतोऽप्यज्ञायमानानां मनोव्यापाराणामत्राध्ययनं क्रियते। एवंविधेना-ध्ययनेन तस्य शारीरिकाणां मधुमेहादीनां मानसिकानां चोन्मादादीनां रोगाणामुपशमेऽपि महानुपकारो भवतीति महदुपयोगीदं मनोविज्ञानम्।

तदयमत्र संग्रहः—

सामान्यं विनियुक्तं च तथाऽसामान्यमेव च।
संविभक्तं त्रिधा विज्ञै-र्मनोविज्ञानमत्र च ॥३३॥
समाजव्यक्तिसम्बद्धं सामान्यं द्विविधं मतम्।
प्रयुक्तं च त्रिधा बालै-र्व्यापारैः शिक्षयान्वितम् ॥३४॥
अपरिज्ञायमानानां वृत्तीनां संविवेचकम्।
मनोविश्लेषमूलं चाऽसामान्यं तु तृतीयकम् ॥३५॥

**मनोवृत्तीनां भेदाः—**

व्यक्ताव्यक्तमनोव्यापाराणां वैज्ञानिकमध्ययनं मनोविज्ञाने

विधीयते इति प्रतिपादितचरम्। तत्र सामान्यतो व्यक्ता मनोव्यापारा एव मनोवृत्तिपदेनाभिधीयन्ते। मनोवृत्तिः सर्वा अपि सामान्यरूपेण ज्ञानात्मिका वेदनात्मिका क्रियात्मिकाचेति त्र्यंशा भवति। ज्ञानं, वेदना-क्रिया चेत्यंशत्रय सर्वासामपि मनोवृत्तीनां सामान्यमिति न पृथङ्निरूप-णीयं भवति। रात्रौ कदाचिन्मन्दान्धकारे पथि सर्पवत् परिपतिता रज्जुरपि सर्पवदवभासते। तदा ततः सर्पोऽयमिति, १ ज्ञानं, तन्मूलिका च भयस्य २ वेदनानुभूतिर्वा, तन्निमित्ता ३ पलायनक्रिया चेति त्रयमपि युगपदेवोत्पद्यते। अस्मिन्नुदाहरणे मनोवृत्तेस्त्रयोऽप्यंशाः स्फुटं प्रतीयन्ते। एवं सर्वासामपि वृत्तीनां कश्चिज्ज्ञानसम्बद्धो कश्चिद् वेदनासम्बद्धः, कश्चिच्च क्रियासम्बद्धोंऽशो भवति। अत एव सामान्यतोंऽशत्रयवती मनोवृत्तिर्भवति। तेषामपि त्रयाणामंशानां विशिष्टाध्ययनायान्येऽप्यवान्त-रभेदाः भवन्ति। ते च निम्नाङ्कितेन चित्रेण परिज्ञातुं शक्यन्ते।

## त्रिविधा मनोवृत्तिः

१ ज्ञानात्मिका    २ वेदनात्मिका    ३ क्रियात्मिका

## तदवान्तरभेदाः

१–ज्ञानात्मिकायाः पञ्च भेदाः

१ संवेदनम्
२ प्रत्यक्षीकरणम्
३ स्मरणम्
४ कल्पना
५ विचारः

२–वेदनात्मिकायाश्चत्वारो भेदाः

१ भावना
२ संवेगः
३ स्थायिभावः
४ भावनाग्रन्थिः

३–क्रियात्मिकायाः पञ्च भेदाः

१ सहजक्रिया
२ मूलप्रवृत्तिः
३ स्वभावः
४ इप्सिता क्रिया
५ चरित्रम्

तद्यमत्र संग्रहः—

मनो बुद्धिश्च चित्तं चान्तःकरणं त्रयात्मकम् ।
त्र्यंशा वृत्तिस्तदीया च ज्ञानं च वेदना क्रिया ॥३६॥

आद्या ज्ञानात्मिका वृत्ति र्द्वितीया वेदनात्मिका ।
क्रियात्मिका तृतीयेति मनोवृत्ति-स्त्रिधा मता ॥३७॥

संवेदनं च प्रत्यक्षं स्मरणं कल्पना तथा ।
विचारश्चेति ज्ञानाख्या मनोवृत्तिस्तु पञ्चधा ॥३८॥

भावना चैव संवेगो स्थायिभावोऽथ ग्रन्थयः ।
मनोवृत्ति-र्द्वितीया तु चतुर्धा वेदनात्मिका ॥३९॥

सहजा मूलवृत्तिश्च स्वभावश्चेप्सिता क्रिया ।
क्रियात्मिका मनोवृत्तिश्चरित्रं चेति पञ्चधा ॥४०॥

भयादौ युगपद् वृत्तिः, त्रिधाप्येषा तु दृश्यते ।
यत उत्प्लुत्य तत्स्थानात् झटित्येवापसर्पति ॥४१॥

त्र्यात्मकत्वे समानेऽपि सर्वास्वेतासु वृत्तिषु ।
तत्तदंशस्य प्राधान्यात् व्यपदेशस्त्रिविधः कृतः ॥४२॥

## प्रश्नाः

१ मनोविज्ञानस्याध्ययनेन को लाभः सोदाहरणं निरूपय ।
२ अध्ययनस्य को वैज्ञानिको विधिः । मनोविज्ञाने कथमस्योपयोगः ।
३ मनोविज्ञानस्य परिनिष्ठितं लक्षणं निरूपय ।
४ निरीक्षण-परीक्षणयोः को भेदः । अन्तर्दर्शननिरीक्षणयोश्च को भेदः ।
५ अन्तर्दर्शनस्य विषमः पन्थाः । कथमिति स्पष्टीकरणीयम् ।
६ मनोविज्ञानस्याध्ययनविधयः समासतो निरूपणीयाः ।
७ मनोविश्लेषणविधेः स्वरूपं मूल्यं च निरूपय ।
८ मनोविज्ञानस्येतिवृत्तं समासतो निरूपणीयम् ।

## द्वितीयः परिच्छेदः

# मनस्तत्त्वम्

### जडवादिनां यान्त्रिको मानवव्यवहारः—

विगतपरिच्छेदे मनोविज्ञानस्येतिवृत्तनिरूपणप्रसंगे पूर्वमात्मा, ततो मनः, ततश्चेतना, ततश्च व्यवहार इत्यनुक्रमेण मनोविज्ञानस्य विषयतामिमे सर्वेऽपि प्रपेदिर इत्यस्माभिरालोचितम्। तत्र च चरमो व्यवहारवादश्चेतनासम्बन्धं सर्वथैव परिहृत्य व्यवहारमात्रं मनोविज्ञानस्य विषयमभ्युपगच्छतीति जडवाद एवायम्। इमे जडवादिनो व्यवहारवादिनो वा आत्मनो मनसश्चेतनायाः सत्तामपि नाभ्युपगच्छन्ति। भौतिकानां प्रेरकनिमित्तानां प्रतिक्रियामात्रं प्राणिनां व्यवहारा अनुभवाश्चेति तेषामभिमतम्। प्रकाशं प्रति प्रतिक्रियामात्रं चाक्षुषं प्रत्यक्षं, शब्दं प्रति प्रतिक्रियामात्रं च श्रावणं ज्ञानं, गन्धं प्रति प्रतिक्रियात्मकश्च घ्राणजोऽनुभव इति नितान्तं चेतनसम्पर्कलेशमप्यसहमाना इमे जडवादिनो ब्रुवते। ते हि, भौतिकद्रव्याणां विशिष्टेनानुपातेन समवाये जीवनं, तस्य परिवृद्धौ च चैतन्यमनुभूयत इति मन्यन्ते। तेषां मते जटिलो यन्त्रविशेषात्मको मानवो न ततो भिद्यते। यथा हि प्रचलन्त्यां घटिकायां स्वत एव नियतावसरे घण्टानादः समुत्पद्यते। एवमचेतने प्रकृतिव्यापारे भौतिकद्रव्याणां विशिष्टेनानुपातेन समवाये सञ्जाते सति स्वयमेव जीवनं चैतन्यं वानुभूयते। इदानीं यावन्मानवशरीरस्य मानवयन्त्रस्य वा सर्वेषामवयवानां परिपूर्णं ज्ञानं वैज्ञानिकैर्नाधिगतमिति चैतन्योत्पादने अक्षमा अपि ते कालेन पूर्णतां प्राप्ते वैज्ञानिकेऽनुभवे स्वकीयासु प्रयोगशालासु चेतनस्य मानवस्यापि निर्माणं कर्तुं प्रभविष्यन्तीति आशास्यते।

### मानवव्यवहारस्य भौतिकप्रतिक्रियातोऽचेतनव्यापाराच्च भेदाः—

चैतन्यस्य जीवनस्य वा तात्त्विकविवेचनाय नायमुपयुक्तोऽवसरः। तथापि मानवानां व्यवहारा न यान्त्रिकव्यवहारसदृशा नापि भौतिकप्रतिक्रियामात्ररूपा इति निर्विवादं वक्तुं शक्यते। मनोविज्ञानस्य विषयभूता

मानवव्यवहारा भौतिकप्रतिक्रियातोऽचेतनव्यवहाराद्वा नितान्तं भिन्ना इति स्फुटमेवावलोक्यते। इमे च तत्र मुख्या भेदका धर्माः—

१ चेतनानां व्यवहारः सर्वोऽप्यात्मप्रेरितो भवति न परप्रेरितः। यत्रापि भवति परप्रेरणा तत्रापि सा केवलं तस्य व्यापारस्यौचित्यमात्रं कर्तु-र्मनसि व्यवस्थापयति न तु कर्मणि तं नियुङ्क्ते। अश्वो जलपर्यन्तं नेतुं शक्यते न जलं पाययितुमिति प्रथिता लोकोक्तिः। तथा च चेतनव्यापारो आत्ममात्रनियन्त्रितो भवति। अचेतनव्यापारस्तु चेतनप्रेरणा-निमित्तक एव। यन्त्राणामचेतनानां न स्वतः परिचालनं सम्भवति। तत्रत्या परिचालना चेतनव्यापारमूलिकैव भवति। एवं चेतनानां स्वव्यापारे स्वातन्त्र्यमचेतनानां च तत्र पारतन्त्र्यमिति तयोः प्रथमो भेदः।

२ अचेतनानां यन्त्राणां परिचालने चेतननिमित्ताद्या परिचालना भवति तस्या अभावे विनाशे वा यान्त्रिको व्यापारः स्वत एव निवर्तते। घटिकायन्त्रस्य सञ्चालनाय चेतननिमित्तको यः कीलनव्यापारो भवति तदभावे तत्प्रभावस्य परिक्षये वा न घटिकायन्त्रस्य गतिर्दृश्यते। किन्तु चेतनेषु नायं क्रमः। यत्र चेतनस्य परप्रेरितापि भवति क्रिया तत्रापि तन्निवृत्तिर्न प्रेरकनिवृत्तिमात्राधीना। किन्तु प्रयोज्यायत्ता। केनचित्सूत्रेण पुत्रस्य रुग्णतायाः समाचारमवाप्य पुरुषस्तदवसरानुकूलं प्रचुरं व्यापारं करोति। यथावसरं च स्वत एव तस्माद् व्यापाराद् विरतो भवति। ततश्च चेतनस्य प्रवृत्तिर्निवृत्तिश्च चेतनेच्छामात्राधीना। अचेतनानां यन्त्राणां प्रवृत्तिर्निवृत्तिश्च न तन्मात्राधीना किन्तु सापि चेतनाधीनैव। इति द्वितीयोऽपि चेतनाचेतनयोर्भेदः।

३ किञ्च चेतनानां नियतनिमित्तको नियतो व्यापारः। तुल्यावामवस्थायां तुल्येन निमित्तेन तुल्यैवाऽचेतनेषु प्रतिक्रिया। उद्रजन—ओषजनयो र्नियतपरिमाणेन सम्मिश्रणे जलमेवोत्पद्यते नान्यत्। तुल्य-शक्तीनां यन्त्राणां तुल्यरूपेण परिचालने तुल्यमेव फलम्। विभिन्ना-स्वपि दिक्षु तुल्यशक्त्या कन्दुकस्य प्रक्षेपणे तुल्यैव गतिरिति गणित प्रक्रिययापि सा पूर्वतो निर्देष्टुं शक्यते। मानवव्यापारास्तु समाना-यामपि परिस्थितौ भिन्ना दृश्यन्ते। न च सर्वथा पूर्वतो निर्देष्टुं शक्यन्ते। सन्तमसान्धकारे अभिमुखमापतितं सिंहं दृष्ट्वा पुरुषो मूर्च्छितोऽपि भवति, पलायितुमपि शक्नोति, तेन सह योद्धुमपि शक्नोति। इति तस्य प्रतिक्रिया न पूर्वतो निर्देष्टुं शक्या भवति। अयं तृतीयो भेदः।

४ चेतनो हि भाविनीं दशामवलोक्य पूर्वतोऽपि तदुचितं व्यवहारमारभते। न त्वचेतनानि तथानुष्ठातुं शक्नुवन्ति। वर्षाकाले शुष्कमिन्धनं दुष्प्रापं भविष्यतीति गृहस्थो ग्रीष्मकाल एव यथेष्टमिन्धनं संगृह्णाति। शीतकाले उष्णवस्त्रमुपयोक्ष्य इति कदाचिदत्सुलभमूर्णावस्त्रं ग्रीष्मकालेऽपि क्रीणाति। किन्तु मत्सञ्चालने इङ्गालानामावश्यकता भविष्यतीति कृत्वा वाष्पयानादिकं महायन्त्रं इङ्गालानां सञ्चयं न करोति। न वा वस्त्रधारणाय पुरुषा निष्पन्नानि वस्त्राण्यपेक्षिष्यन्त इति वस्त्रं स्वत एव निष्पन्नवस्त्राकारतया परिणमति एवमनागतविधातृत्वेनापि चेतनमचेतनाद् भिन्नं भवति।

५ चेतना हि स्वानुभवस्योत्तरभाविनि कार्यक्रमे यथोचितमुपयोगमपि कुर्वन्ति। स्वस्खलितैः शिक्षां गृह्णन्ति तदनुसारं चोत्तरवर्तिनि स्वव्यापारे संशोधनं परिमार्जनं च कुर्वन्ति। बालो हि यदा कमपि कार्यं प्रारभते तदा तत्कार्यं त्रुटिपूर्णमिव भवति। किन्तु यथाभ्यासं तत्र सुधारो जायते। एवमनुक्रमेण संशोधनं परिमार्जनं च कुर्वन् गच्छता कालेन तत्र नैपुण्यमर्जयति। न केवलं मानवः किन्तु मार्जारकुक्कुरादयोऽपि तथैव पूर्वानुभवापेक्षया उत्तरत्रावश्यकं संशोधनं परिमार्जनं च कुर्वन्ति। मार्जारमनुधावन् कुक्कुर एकत्र स्खलितमनुभूय पुनस्तेनैव पथा गमनाय न प्रयतते किन्तु यथोचितं मार्गान्तरमुपायान्तरं वावलम्बते। चेतनानामेवायं विशेषो नत्वचेतनानाम्। यन्त्राणां सञ्चालने शिक्षाग्रहणस्य, पूर्वव्यापारसापेक्षस्य सुधारस्य, यथोत्तरमुन्नतेश्च कश्चनावकाशो न भवति।

५ समानप्रसवात्मिका जातिरिति जातिलक्षणमनुसृत्य सन्तानोत्पादनद्वारा स्ववंशस्य वृद्धिरपि चेतनानां वैशिष्ट्यम्। न ह्यचेतनानि यन्त्राणि समानजातीयानां यन्त्रान्तराणामुत्पादने समर्थानि भवन्ति। अयमप्यपरो भेदः।

एवं जडानां प्राणिनां च व्यापारेषु भूयान् भेदः स्फुटं परिलक्ष्यते। अयमेव भेदः प्राणिनां चैतन्यं तद्व्यतिरिक्तानां च जडत्वं प्रयोजयति। तदिदं प्राणिवर्गेऽनुभूयमानं चैतन्यं प्रत्नैराचार्यैरात्मशब्देन व्यवह्रियते नव्यैश्च मनोवैज्ञानिकैस्तत्रैव मनःशब्दः प्रयुज्यते। ते हि नव्या मनो-

वैज्ञानिका मनोव्यतिरिक्तामात्मसत्तां नाभ्युपगच्छन्ति । आत्मस्थान एवाभिषिक्तं मनस्तत्त्वमेभिः । भारतीये तु दर्शने आत्मेन्द्रिययोरन्तरालवर्ति अन्तःकरणाख्यमात्मव्यतिरिक्तं मनस्तत्त्वम् । ये तु सांख्या अन्तःकरणमात्रे कर्तृत्वादिकं प्रतिजानते तेषामपि मतेऽन्तःकरणवृत्तीनां साक्षिभूतो हि पुरुषस्तद्व्यतिरिक्त एवाभ्युपगम्यते । किन्तु नव्यानां मनोवैज्ञानिकानां मते मन एवात्मस्थानीयं तत्त्वम् ।

तदयमत्र संक्षेपः—

चेतनव्यवहारस्तु भिद्यते जडवृत्ततः ।
तत्र चाधोऽङ्किता धर्मा मुख्यतो भेदका मताः ॥१॥

जडवृत्तं न स्वाधीनं परप्रेरितमेव हि ।
स्वतन्त्रश्चेतनस्तत्र परप्रेरणमन्तरा ॥२॥

तुल्यकारणसम्भूता तुल्यैवाचेतनक्रिया ।
चेतनानां पुनर्दृष्टा भिन्ना कालादिभेदतः ॥३॥

भूताञ्छिक्षां च गृह्णन्ति भाविनं चिन्तयन्ति च ।
वंशवृद्धिं च कुर्वन्ति चेतना न त्वचेतनाः ॥४॥

आत्मैव चेतनो नित्यः प्राच्यानां दर्शने मतः ।
पाश्चात्यानां पुनस्तत्र मनस्तत्त्वं प्रतिष्ठितम् ॥५॥

## मनःस्वरूपम्:—

अस्य मनसो अंशद्वयात्मकं स्वरूपमभ्युपगम्यते । मानसव्यापाररूपचेतनात्मकोऽनुभवरूपो वा प्रथमोंऽश आंगलभाषायां, 'कान्शैन्स' 'मैन्टल फंक्शन' इत्यादिभिः शब्दैर्व्यवह्रियते । द्वितीयो अचेतनात्मकोंऽशस्तस्य संगठनरूपो 'अनकान्शेन्स स्ट्रक्चर' इत्येवमादिभिः पदैर्व्यवह्रियते । एवं चेतनाचेतनरूपांशद्वयात्मकं मनः । तत्र ज्ञानेच्छामनोव्यापारादिका मनोवृत्तयोऽनुभवांशे समाविष्टाः । अयमनुभवो हि जडाजडयोर्मुख्यो भेदकः ।' जडाः पदार्था अनुभवविहीना भवन्ति चेतनाश्चानुभववन्त इत्यनयोर्भेदः । अहमस्मि इत्येवमात्मकोऽनुभव एवात्मसाधकः ।

अयमेवानुभवश्चेतना-पदेनापि व्यवह्रियते । किन्तु परमार्थविचारे तु चेतनानुभवयोर्न तादात्म्यं किन्तु व्याप्यव्यापक-भाव एव । चेतना हि व्याप्या अनुभवस्तु व्यापक एव । स्पष्टानुभूतिर्हि प्रायश्चेतनेति व्यवह्रियते । न चास्माकं सर्वेऽप्यनुभवा विस्पष्टा एव भवन्ति किन्त्ववि-

स्पष्टा अप्यनुभवा भवन्त्येव। पुस्तकस्य पठने व्यासक्ताः पुरुषा प्रतिपृष्ठ-मभितो अमुद्रितोऽपि पृष्ठभागोऽस्ति इति स्फुटं नानुभवन्ति। किन्तु तस्यास्फुटं परिज्ञानं भवत्येव। यद्ययममुद्रितः पृष्ठभागो नाभविष्यत्-तर्हि अस्माकमनुभवोऽप्यन्यादृश एवाभविष्यदिति प्रतीतिस्तस्याविस्प-ष्टस्यानुभवस्य साधिका। एवं स्वगृहे कार्यान्तरव्यापृते मानसे शनैःशनै-र्गीयमानस्य गानस्यापरिस्फुटोऽनुभवो भवत्येव। यद्यकस्मादेव गानध्व-निर्विरमति तदा कार्यान्तरव्यापृतोऽपि पुरुषस्तात्कालिके स्वानुभवे किंचिद् न्यूनत्वमनुभवति। एवं स्फुटानुभवव्यतिरिक्तोऽपि भवत्यनुभवः। स्फुटोऽनुभवश्चेतनापदवाच्यो भवति। तद्व्यतिरिक्तोऽपरिस्फुटोऽपि भवत्येव भूयाननुभव इति व्याप्यैव चेतना व्यापकश्चानुभव इति मनो-वैज्ञानिकानां मतम्। भारतीये तु दर्शने अनुभवाश्रयोऽनुभवाद् भिन्न इत्यनुभवरूपाया मनोवृत्तेः साक्षिभूतो चेतनो नित्यः। स एव मनो-वृत्तीनां ज्ञाता, मनोवृत्तयस्तस्य विषयभूता ज्ञेया इति।

## अनुभवस्य भेदाः—

अनुभवो हि मनोवृत्त्यात्मकः स च ज्ञान-वेदना-क्रियारूपांशत्रया-त्मकः। इन्द्रियार्थसन्निकर्षेण पदार्थस्य ज्ञानमुत्पद्यते। इयमेव ज्ञाना-त्मिका मनोवृत्तिः पदार्थस्य स्वरूपपरिचयानन्तरमनुकूले पदार्थे रागात्मकं, प्रतिकूले च द्वेषात्मकं सम्बन्धमवधारयति। अयमेव मनोवृत्तेः वेदा-नात्मको रागात्मको वांशः। ततश्च तत्र हानोपादानोपेक्षाबुद्धिरुपजायते। अयमेव मनोवृत्तेः क्रियात्मको भागः। त इमे त्रयोऽपि भागाः सर्वासा-मपि मनोवृत्तीनामविशिष्टा भवन्ति। सर्वासामपि मनोवृत्तीनां अंशत्र-यात्मकत्वे समानेऽपि प्राधान्येन व्यपदेशा भवन्तीति न्यायज्ज्ञानक्रिया-दिरूपो व्यवहारभेदः। घटादिके पदार्थे ज्ञायमाने ज्ञानसमकालमेव तत्र रागो द्वेषो वा तदनुरूपा हानोपादानबुद्धिश्च समुपजायत एव। किन्तु तत्र ज्ञानस्य प्राधान्याभिप्रायेण ज्ञानमिति व्यपदेशोऽन्यत्र च क्रियादिव्य-पदेशोऽपि तत्प्राधान्यादेव भवति। कस्यामपि क्रियायामत्यन्तमनुरक्तोऽपि पुरुषो न सर्वथा ज्ञानरहितो भवति। एवं सर्वासां मनोवृत्तीनां त्रया-त्मकत्वे समानेऽपि परिस्फुटोपलक्षणायैव पृथङ् निर्देशः। तद्वैशद्यायैव च तेषामपि त्रयाणामंशानामन्येऽप्यवान्तरभेदा विगतपरिच्छेदे मनोवृत्ति-भेदप्रसंगे निरूपिताः।

भारतीयै र्दार्शनिकैरपि चातुर्विध्यं त्रैविध्यं वान्तःकरणवृत्तीनां परिकल्प्य एकस्यैवान्तःकरणस्य मनो-बुद्धिश्चित्तमहङ्कारश्चेति चतुर्धा, क्वचिच्च मनो-बुद्धिरहङ्कारश्चेति त्रिविधो वा व्यपदेशः कृतः। तद्वत् पाश्चात्यैरपि दार्शनिकैरेकस्य मनसो त्रिविधा वृत्तयः परिकल्पिताः।

**मनः सङ्घटना—**

मनसः सङ्घटनं विवेचयता जेम्समहोदयेन नदीप्रवाहेण तस्य साम्यं प्रदर्शितम्। यथा हि जलस्यापरिमेया असंख्येयाश्च बिन्दवो परस्परं विभक्ता अपि प्रवाहस्याविच्छिन्नत्वात् सम्मिलिताः प्रवाहरूपेणावभासन्ते। एवं विविधा मनोवृत्तयो अविच्छिन्नप्रवाहरूपेणोत्पद्यमाना मनःपदव्यदेश्या भवन्ति किन्तु परमार्थतो जलबिन्दुव्यतिरिक्तो न नद्याः प्रवाहस्तथा वृत्तिव्यतिरिक्तं न मनोऽपि तत्त्वान्तरमिति जेम्समहोदयस्याभिप्रायः।

किन्तु यथा प्रवाहाविच्छेदरूपा भ्रान्तैव नद्याः प्रवाहस्य प्रतीतिः। तद्वद् भ्रमजन्यैव च मनसः स्थितिरिति जेम्समहोदयाभिमतमेव भ्रान्तमिति प्रतिभाति। भौतिका हि जलबिन्दवः सावकाशाश्च, तेषां प्रवाहाविच्छेदरूपा अलातचक्रवदेकत्वप्रतीतिः कदाचित् सम्भवेदपि। किन्तु मनस्त्वभौतिकमनवकाशं च। न तत्र जलबिन्दुनैरन्तर्यवन्नैरन्तर्यं सम्भवति। नद्यास्तडागस्य कूपस्य जलबिन्दूनामेकत्र सम्मिश्रणं सम्भवति। किं तद्वत् देवदत्त-यज्ञदत्त-हरिदत्त सम्बन्धिनीनां मनोवृत्तीनामेकत्र सम्मिश्रणं सम्भाव्यते? नो चेत् कथमिव जलबिन्दुसादृश्यं मनोवृत्तीनां सम्भवेत्। एवं मनोवृत्तीनामाधारभूतं मनः स्वीकार्यमेव। मनोवृत्तीनामाधारभूतं मन एवाचेतनं मनः संस्कारात्मकमस्त्येव। तदेव मनोगठनं, मनस आकारो वा (स्ट्रक्चर) इत्येवमादिभिः शब्दै-र्व्यवह्रियते। अत एव मनसो ज्ञानेच्छाक्रियात्मकमेकं रूपं अनुभवपदेन व्यवह्रियते। तद्भिन्नमपरं स्वरूपं तदाधारभूतं आकार-गठन-अचेतनमन-आदि पदैर्व्यपदेश्यमवश्यमेव स्वीकार्यं भवति। तथा च जलप्रवाहप्रतीतिवद् भ्रान्तैव मनःप्रतीतिरिति वादिनां जेम्सप्रभृतीनां महोदयानां मतमग्राह्यमसमीचीनं च।

**मनःशरीरयोः सम्बन्धः—**

मनः शरीरयोः सम्बन्धविषये पाश्चात्यदर्शने द्वैतवादो अद्वैतवादो द्वैताद्वैतवादश्चेति त्रयः पक्षाः समुपलभ्यन्त।

तत्र द्वैतवादिनामपि पारस्परिकप्रतिक्रियावादः, समानान्तरवादश्चेति द्वौ पक्षौ। अद्वैतवादिनामपि चेतनाद्वैतवादो जडाद्वैतवादश्चेति द्वौ पक्षौ। एवं द्वैतवादिनां अद्वैतवादिनां च मिलित्वा चत्वारः पक्षाः। द्वैताद्वैतवादिनां च पञ्चमः पक्ष इति मिलित्वा मनःशरीरयोः सम्बन्धविषयकाः पञ्च पक्षाः सञ्जायन्ते।

## १—पारस्परिकप्रतिक्रियावादः—

पारस्परिकप्रतिक्रियावादो हि द्वैतवादिनामन्यतरः सम्प्रदायः। अस्मिन् मते मनः शरीरं चेत्युभयमपि भिन्नं तत्त्वद्वयम्। किन्तु तयोः परस्परप्रतिक्रियात्मकः सम्बन्धो भवति। मनसः स्थितिः शरीरं प्रभावयति, शरीरस्य स्थित्या च मनः प्रभावितं भवति। मानसिके हर्षोद्रेके सति शरीरेऽभिनवा परिस्फूर्तिरभिलक्ष्यते। खिन्ने च मनसि शरीरमप्यलसं निर्वीर्यं मुषितमिव च प्रतिभाति। एवं 'स्वस्थे शरीरे स्वस्थं मनो निवसति' इति सुप्रसिद्धा लोकोक्तिर्मनसि शरीरस्य प्रभावं द्योतयति। अयमेव सिद्धान्तः 'पारस्परिकप्रतिक्रियावाद' इति नाम्ना व्यवह्रियते।

एवं मनःशरीरयोः समानेऽप्यन्योन्यप्रभावे, कस्य प्राधान्यं कस्य चाप्राधान्यमिति विवेको दुष्कर एव। शारीरशास्त्रिणां 'शरीरमाद्यं खलु धर्मसाधनम्' 'स्वस्थं मनः स्वस्थशरीर एव' इत्येवमाद्याः लोकोक्तयो हि शरीरस्यैव प्राधान्यं द्योतयन्ति। किन्तु मनोविज्ञानविदां मते मनोव्यापाराणामेव शारीरिके स्वास्थ्येऽपि प्रयोजकत्वात् मनस एव प्राधान्यम्। कुत्सितानां मनोव्यापाराणां विचाराणां च दीर्घकालं निरन्तरासेवनेन कुत्सितानां शारीरिकरोगाणां समुत्पत्तिर्जायत इति बहुशोऽनुभूयते। विगतमहायुद्धकाले बहुसंख्यकानां सैनिकानां पक्षाघातरोगो भयरूपमनोवृत्तिमात्रनिमित्तको मनोविश्लेषणविद्भिर्निर्धारितः। एवमस्माकं शुभानामशुभानां च विचाराणां प्रभावादेव शरीरस्य स्वास्थ्यं सौन्दर्यं च वर्धतेऽपक्षीयते वेति मन एव प्रधानम्। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इतीयमभियुक्तोक्तिरपि मनसः प्राधान्ये प्रमाणम्।

## २—समानान्तरवादः—

मनःशरीरयो-र्भेदमभ्युपगच्छतां द्वैतवादिनां द्वितीयः सिद्धान्तः 'समानान्तरवाद' इति नाम्ना व्यवह्रियते। अस्मिन् मते शरीरं

मनश्चेत्युभयं परस्परनिरपेक्षं स्वतन्त्रं च तत्त्वद्वयम्। न शरीरस्य मनसि कश्चन प्रभावो, नापि मनोव्यापाराणां शरीरे कश्चन प्रभावः। शरीर-व्यापाराणां मनोव्यापाराणां च परस्परं कार्यकारणभावो नास्ति। तथापि स्वतन्त्रतया समानान्तररूपेण सहगामिनस्तयोर्व्यापाराः। पुरुषो विचारयति वदति चेत्यत्र विचारो मानसिको व्यापारो, भाषणं च शारीरिकं कर्म। सामान्यतस्त्वनयोः कारणकार्यभाव एवाभ्युपगम्यते। 'यन्मनसा मनुते तद्वाचा वदति, यद्वाचा वदति तत् कर्मणा करोति' इतीयमभियुक्तोक्तिरपि वाचिकस्य शारीरिकस्य च कर्मणो मनोव्यापारमूलकत्वं द्योतयति। किन्तु समानान्तरवादिनां नये तयोः कारण-कार्यभावो न भवति। न विचारस्य भाषणे प्रयोजकत्वं, न वा भाषणस्य विचारे प्रयोजकत्वम्। विचारो हि मानसो व्यापारः। स च पूर्ववर्तिनां मनोव्या-व्यापाराणां परिणामो न तु भाषणादिरूपस्य कस्यापि शारीरिकव्यापारस्य। एवं भाषणं शारीरिकं कर्म तच्च पूर्ववर्तिनां शारीरिकव्यापाराणां फलं न तु विचारादिरूपस्य मनोव्यापारस्य तत्र प्रयोजकत्वम्।

अस्य मतस्य स्थापनं सप्तदश्यां शताब्द्यां हालैंडनिवासिना 'स्पाइनोजा' इति नाम्ना प्रथितेन विदुषा विहितम्। तस्य मते व्यापिनः सर्वगतस्यात्मतत्त्वस्य विचारो देशश्चेति द्वौ कल्पितौ गुणौ। विचारस्यैव रूपान्तरं मनः, देशस्य च रूपान्तरं शरीरम्। एवं मनःशरीरयोरुभयोरप्यात्मगुणत्वात् सत्यपि तयोर्भेदे गुणिन आत्मनोऽभेदान् तयोः सहगामित्वम्। एवमाश्रयभूतस्य गुणिन आत्मन ऐक्यान्मनोव्यापाराणां शरीरे, शारीरिकक्रियाणां च मानसिकः प्रकाशो दृश्यते।

समानान्तरवादेन शारीरिकक्रियातो मनोव्यापाराणां स्वतन्त्रमेवाध्ययनं प्रवर्तितम्। शरीरं देशस्य रूपान्तरमिति देशे परिमितं मूर्तं च। मनस्त्वभौतिकममूर्तं च, न देशे परिच्छिन्नम्। शरीरस्य भौतिकत्वाच्छारीरिकेषु परिवर्तनेषु भौतिक एव प्रभावो निमित्तम्, न त्वभौतिको मानसिको वा प्रभावः। एवं मानसिकेषु परिवर्तनेषु मानसिक एवाभौतिकः प्रभावो मूलं न तु भौतिकः शारीरिको वा कश्चन प्रभावस्तत्र प्रयोजकः।

एवं मनःशरीरयो-र्निरपेक्षताप्रतिपादकोऽयं सिद्धान्तः 'समानान्तरवाद' इति व्यवह्रियते। किन्तु नास्य निर्विवादं प्रामाण्यम्। समानान्तरवादिनो हि देशविचारयोरात्मगुणत्वं, तन्मूलकं च शारीरिकमानसिक-

व्यापारयोः सहगामित्वमामनन्ति। किन्तु कार्य-कारणभावं नाभ्युपगच्छन्ति। परस्परप्रतिक्रियावादिनश्च सहगामित्वेन, परस्परप्रतिक्रियारूपत्वं प्रतिजानत इत्येव विशेषः।

## ३–जडवादः—

परस्परप्रतिक्रियावादः समानान्तरवादश्चेत्युभावपि द्वैतवादिनां पक्षौ। तद्व्यतिरिक्तो अद्वैतवादिनामभेदवादिनां वा द्वितीयः पक्षः। अस्मिन्नपि पक्षे जडवादः, चैतन्यवादश्चेति द्वौ विकल्पौ। तत्र जडवादिनो मनःशरीरयोरभेदं जडात्मकत्वं च प्रतिजानते। जडवादिनां नये शरीरस्यैव भौतिको विकारश्चैतन्यं, न तु शरीरव्यतिरिक्तं किञ्चिच्चैतन्यं नाम। यथा हि घटिकायन्त्रस्य व्यापारेण कदाचित् स्वयमेव घण्टानादः समुत्पद्यते, एवं शारीरिकव्यापाराणां प्रभावादेव विशिष्टेष्वसरेषु चैतन्यमनुभूयते। भौतिकस्य मस्तिष्कस्य क्रियाविशेष एव विचारो न त्वभौतिकं मन आदिकं किञ्चित् तत्त्वान्तरं तत्र निमित्तम्। एवं मस्तिष्कस्य घटकानां [ सेल्स ] परिणाम एव विचारः। स च शरीरस्य व्यापारान्तराणां नियामकः प्रयोजकश्च भवति।

अस्यैव दार्शनिकस्य जडवादस्य मनोविज्ञाने 'व्यवहारवाद' रूपेण परिणतिः संवृत्ता। व्यवहारवादस्य प्रवर्तकानां वाटसनमहोदयानां मते जटिला अपि मनोव्यापाराः सहजायाः शारीरिक्याः क्रियाया एव परिवर्तनरूपा भवन्ति। यथा;हि नासिकायां धूलिकणानां प्रवेशेन छिक्कारूपा सहजा शरीरिकी क्रिया समुत्पद्यते, एवं जटिलतमा अपि मनोव्यापारा वातावरणस्य सङ्घर्षेण समुत्पद्यन्ते। अत्र च मते स्वतन्त्रेच्छाशक्तेरभाव एव पुरुषे। तस्य सर्वा अपि क्रिया नियता एव।

स्टाउट-महोदयेन मैगडूगल-महोदयेन चास्य जडवादस्य, बहुशः प्रत्याख्यानं कृतमस्ति। अस्माभिश्चास्य परिच्छेदस्य प्रारम्भे जडचेतनव्यवहारयो-र्ये भेदाः प्रदर्शितास्तेऽप्यस्य जडवादस्य निराकरणपरा एव।

## ४–चैतन्यवादः—

यथा जडाद्वैतिनो जडमात्रमेकं तत्त्वं मन्यन्ते तद्भिन्नं चेतनं तत्त्वंन स्वीकुर्वन्ति, तथैव चेतनाद्वैतिनश्चेतनमात्रमेकं पारमार्थिकं तत्त्व-

मामनन्ति तद्व्यतिरिक्तं जडतत्त्वमात्रं च प्रत्याचक्षते। जडाद्वैतवादिनां चेतनाद्वैतवादिनां चेमौ पक्षौ न केवलं पाश्चात्य-दर्शने किन्तु भारतीये दर्शनेऽपि समुपलभ्येते। उभयोश्चोभयत्र प्रचुरं प्रत्याख्यानमप्युपलभ्यते। यथा हि जडाद्वैतेऽभ्युपगम्यमाने लोके समुपलभ्यमाना चेतना कुत उत्पद्यते, अचेतनाद्वा कथं चेतनायाः सम्भव इति न सम्यक् समाधीयते। एवं चेतनाद्वैतवादेऽपि जडांशस्य कुत उत्पत्तिरिति न समाधातुं शक्यते। तथा चोक्तम्—

जडं वा चेतनं तत्त्वमेकमेव भवेद्यदि।
कथं नामावकल्पेत दृश्यमाना भिदाऽनयोः ॥६॥

अत एव जडाद्वैतवच्चेतनाद्वैतपक्षोऽप्यसमीचीनः। भेदाभेद-पक्षश्चापि विरोधग्रस्तत्वादनुपादेय एव।

तदयमत्र मनःशरीरसम्बन्धविषये पाश्चात्यमतसंग्रहः—

मनःशरीरयोर्भेदं अभेदं केऽपि वा परे।
भेदाभेदमथाप्यन्ये सम्बन्धं सम्प्रचक्षते ॥७॥

समानान्तरवादश्च तथान्योन्यप्रतिक्रिया।
भेदवादेऽपि संदृष्टमिदं तावन्मतद्वयम् ॥८॥

मनोवृत्त्या शरीरन्तु शरीरावस्थया मनः।
तत्र प्रतिक्रियावादे भवति संप्रभावितम् ॥९॥

समानान्तरवादे तु व्यापारा उभयोः पृथक्।
नैवान्योन्याश्रिताः किन्तु सजातीयैः प्रभाविताः ॥१०॥

जडाद्वैतं मतं कैश्चिच्चेतनाद्वैतमेव च।
दृष्टमभेदवादेऽपि तत्र तावन्मतद्वयम् ॥११॥

## मनसो मूलशक्तयः—

मनोव्यापाराणामचेतनव्यापाराद् भेदं विवेचयद्भिरस्माभिरिद-मवलोकितं यन्मनोवृत्तयो यान्त्रिकेभ्योऽचेतनव्यापारेभ्योऽत्यन्तं विभिन्नाः। चेतना हि स्वयं स्वोद्देश्यमवधार्य संप्रवर्तन्ते। पूर्वपूर्वतरानुभवाद्यथो-चितां शिक्षां गृहीत्वोत्तरोत्तरं दाक्षिण्यं प्रदर्शयन्ति स्वकार्ये। तदनयो-श्चेतनाचेतनयो-र्व्यतिरेकप्रयोजिका विविधाः शक्तयो मनसि सम्प्रधा-

र्यन्ते। तत्र सञ्चयः, सम्प्रयोजनता, सम्बद्धता चेति त्रिविधाः शक्तयो मुख्यतश्चेतनाचेतनव्यापारयो-र्विभेदिकाः।

## १—सञ्चयः—

चेतना हि पूर्वपूर्वतरात् स्वव्यापारात् शिक्षां गृहीत्वा उत्तरोत्तरं कार्यकौशलमधिगच्छन्तो दृश्यन्ते। तत्र मनसः सञ्चय-शक्तिरेव प्रयोजिका। पूर्वानुभवसंस्काराणां सञ्चयस्य मनसि स्वाभाविकी शक्ति-र्भवति। इयं हि शक्तिः पाश्चात्यदर्शने 'नेमे' नाम्ना भारतीये दर्शने च भावनाख्य-संस्कार—नाम्ना व्यवह्रियते। बुद्धिरूपोऽनुभवस्तु क्षणिकोऽस्थिरश्चेति द्रुतमेव विलीयते। किन्तु मनसि तस्य स्थिरः संस्कारो जायते येन कालान्तरे पुनरपि तस्य स्मृतिः समुपजायते। संस्कार-सञ्चयस्येयं शक्ति-,रेव सञ्चयशक्तिरित्यभिधीयते। इयं हि सञ्चयरूपा शक्तिः स्मृतिरूपात् स्वकार्यादपि विभिन्ना। स्मृतिसमनन्तरं 'अहं स्मरामि' इति स्मृतेरनुव्यवसा-यात्मकं ज्ञानं भवति। सञ्चयशक्तिस्त्वविज्ञातरूपेणैव संस्काराणां सञ्चयं करोति। स्मृतिरपि संस्कारसञ्चयस्य कार्यभूता भवति। संस्कारसञ्चयस्तु स्मृतिविषयादप्यतिरिच्यते। न हि संस्काररूपेण मनसि निहितस्य सर्वस्य स्मृतिः सर्वदा भवति। किन्तु प्रायशः संस्कार उत्तरवर्तिनि कार्ये साहाय्यं करोति। आदौ स्तनन्धयो बालः किमपि वस्तु हस्ते गृहीतुं चेष्टते न च सम्यक्तया तद् गृहीतुं प्रभवति। तद् वस्तु तस्य हस्तान्निपतति। पुनरादातुं प्रयतते पुनरपि निपतति। कतिपयदिवसानन्तरं स्वकीयं क्रीडनकं हस्ते गृहीत्वा यथेच्छं क्रीडने समर्थो जायते। तत्र पूर्वपूर्वानु-भवजन्यः संस्कारोऽविज्ञायमानतयैवोत्तरोत्तरमुपकरोति। भवनस्य निर्माणकाले एकस्या इष्टिकाया उपरि द्वितीयेष्टिका निधीयते। तत्रेष्टिकान्त-रसमवधानकाले यदि पूर्वेष्टिकायाः स्थिति-र्न स्यात्तर्हि भवननिर्माणे कापि प्रगति-र्न सम्भवेत्। एकैकस्या इष्टिकायाः सञ्चयेनैव भवनं निर्मी-यते। एवं यदि पूर्वपूर्वानुभवः संस्काररूपेण मनसि न सञ्चीयेत, न तर्हि मानवस्य शिक्षणे प्रगतिः कापि सम्भवेत्। तदियं मनसः सञ्चयशक्ति-रेवाविज्ञायमानरूपेणापि स्मृतिमात्रप्रयोजिका पुरुषस्य प्रगतौ निमि-त्तमुपकारिणी च भवति।

## २—सम्प्रयोजनता—

यथा सञ्चयशक्ति-र्मनस आद्या शक्तिरस्ति तथैवापरा सम्प्रयोजनता-

रूपापि शक्तिरत्राभ्युपगम्यते । 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तेत' इत्यभियुक्तोक्तिश्चेतनव्यापारमात्रस्य सप्रयोजनतां प्रतिपादयति । न हि प्रयोजनमन्तरा क्वापि पुरुषस्य प्रवृत्तिर्दृश्यते । एवमचेतनानां यन्त्रादीनामपि व्यापाराः सप्रयोजनाः सोद्देश्या एव च भवन्ति, न तु निरुद्देश्या निष्प्रयोजना वा । किन्तु यान्त्रिकव्यापाराणां प्रयोजनस्य पुरुषा एव ज्ञातारो न तु यन्त्रादयः । पुरुषाश्च स्वव्यापारप्रयोजनस्य स्वयमेव ज्ञातारो भवन्तीति तयोर्भेदः । अचेतना यन्त्रादयो न स्वव्यापारस्य प्रयोजनमवगच्छन्ति । न वा तस्य फलाफलेन तस्य सम्पदमनुनन्दन्ति तस्य व्यापादमनुशोचन्ति वा ते ।

मनसः सप्रयोजनताख्या शक्तिरियमाङ्लभाषायां 'होर्मे' इति सम्नाऽभिधीयते । इदं च प्रयोजनं कदाचिज्ज्ञायमानं कदाचिद् वाज्ञायमानमिति द्विविधं भवति । जीवनव्यापाराणां श्वासप्रश्वासादिकानां प्रयोजनं प्रायोऽविज्ञातकल्पं भवति । एवमाकस्मिकेन प्रकाशातिशयेन नेत्रनिमीलने सञ्ज्ञायमानेऽप्यतिलाघवादविज्ञातकल्पमेव भवति प्रयोजनम् । एवं क्षतस्य परिपूरणे, भोजनस्य परिपाचने च जायमानस्य व्यापारस्यापि प्रयोजनज्ञानविषये सैव व्यवस्था । इदं चेतनस्तरस्य प्रयोजनं भवति । यथा चेतनस्तरीयः सञ्चयः संस्कारो वा चेतनस्तरे स्मृतिरूपेण परिणमति तथैवाचेतनस्तरीयं प्रयोजनमचेतनस्तरे इच्छां प्रयोजयति । यथा च तत्र सञ्चयो व्यापको, व्याप्या च स्मृतिः,एवमत्र सप्रयोजनता व्यापिका व्याप्या चेच्छेति ।

## ३—सम्बद्धता—

सञ्चयशक्तिवत् 'सम्बद्धता'-शक्तिरपि मनसो विशिष्टा शक्तिः । सा हि चतुरेव गृहिणी सर्वमपि सञ्चितं संस्कारजातं समुपजातेऽवसरे यथोचितस्थाने विनियोजयति । कस्याञ्चिद् भाषण-प्रतियोगितायां कस्यचिच्छात्रस्य प्रभावोत्पादकं हृदयङ्गमं धाराप्रवाहि च भाषणं निशम्य तीव्रः संस्कारस्तस्यास्मन्मनसि जायते । वर्षद्वयानन्तरमपरस्मिन् स्थाने कस्याञ्चित् क्रीडाप्रतियोगितायां तस्यैव छात्रस्यापूर्वं क्रीडा-कौशलं दृष्ट्वा 'स एवायं छात्र' इति दूरव्यवहितोऽपि संस्कारो द्रागेवागत्य तस्य प्रत्यभिज्ञाने साहाय्यं करोति । अत्र सा सम्बद्धताशक्तिरेव प्रयोजिका । यथा हि पत्रालयानामधिकारिणः कर्मकरा एकस्य नगरस्य पत्राणि संवि-

भङ्क्त्यैकत्रावस्थापयन्ति तथैव मनसः सम्बद्धताशक्ति-र्मनसि जायमानान् संस्कारान् सम्यग् व्यवस्थापयति यथावसरं संयोजयति च। एवं सञ्चय-सप्रयोजनता-सम्बद्धता-शक्तिभि-र्मानवस्य प्रगतिः समीचीना सुकरा च सम्पद्यते।

तदयमत्र संक्षेपः—

सुसम्बद्धा च सोद्देश्या सक्रमा शिक्षणक्षमा।
प्रवृत्तिश्चेतनानान्तु जडवृत्तेर्विभिद्यते ॥१२॥
ततः सम्बद्धता चैव सप्रयोजनता तथा।
सञ्चयश्चेति संक्लृप्ता त्रिधा शक्तिस्तु मानसी ॥१३॥
सर्वज्ञानसमुत्पन्नाः संस्कारा मनसि स्थिराः।
सञ्चीयन्ते यथा शक्त्या सा शक्तिः सञ्चयाह्वया ॥१४॥
यथा शक्यं न निर्माणमिष्टिका-सञ्चयादृते।
संस्कारासञ्चये चैवं जीवने प्रगतिः कुतः ॥१५॥
तस्मान्मनसि संस्काराः सञ्चीयन्तेऽनयाऽनिशम्।
व्यक्ताः स्मृतिं तथाऽव्यक्ता-स्ते जनयन्ति शिक्षणम् ॥१६॥
चेतनस्य क्रिया सर्वा सोद्देश्या सप्रयोजना।
तत्तु क्वचिदविज्ञातं विज्ञातं वा प्रयोजनम् ॥१७॥
अतिपरिचयेऽवज्ञा ऽतोऽविज्ञातप्रयोजनः।
श्वासोन्मेषादिव्यापारो जीवनार्थोऽपि सन्निह ॥१८॥
चेतनस्तरसम्प्राप्ता सप्रयोजनता त्वियम्।
इच्छेति लभते नाम सञ्चयं नाम च स्मृतिः ॥१९॥
देशकालादिभिर्दूर-वर्तिनः प्रत्यया अपि।
सम्बध्यन्ते यया सैव शक्तिः सम्बद्धताह्वया ॥२०॥

## प्रश्नाः

१ मानवव्यवहाराणां भौतिकप्रतिक्रियातो ऽचेतनव्यापाराच्चको भेदः।
२ चेतनाचेतनरूपांशद्वयात्मकं मन इति विवेचनीयम्।
३ अनुभवस्य वेदना-ज्ञान-क्रियात्मकास्त्रयो भेदा निरूपणीयाः।
४ मनःशरीरयोः सम्बन्धे मुख्या वादाः प्रतिपादनीयाः।
५ सञ्चय-सप्रयोजनता-सम्बद्धताख्यं शक्तित्रयं विवेचनीयम्।

तृतीयः परिच्छेदः

# नाडितन्त्रम्

## नाडितन्त्रस्य प्रयोजनं स्वरूपं च--

मनोवृत्तीनां शरीरेण सह घनिष्ठः सम्बन्धोऽस्ति। बाह्यानामर्थाना-मिन्द्रियद्वारेण शरीरसम्बन्धे सति मनसा ग्रहणं भवति न शरीरसम्बन्ध-मन्तरेति बाह्यार्थपरिज्ञाने शरीरं निमित्तभूतं विद्यते। एवं क्रियाणामप्यनु-ष्ठानं शरीरमन्तरा नोपपद्यत इति तत्रापि शरीरमेव मुख्यं साधनम्। मनो हि प्रायशो अणु एकदेशस्थितं च स्वीक्रियते। तत्र केचन हृदयमपरे च मस्तिष्कं मनोवृत्तीनां केन्द्रं मन्यन्ते। प्रत्नाः केचन मनसो विभुत्व-वादिनोऽपि सन्तीति योगदर्शनस्य व्यासभाष्ये प्रदर्शितम्। ततो मनसः स्थानं स्वरूपं वा निर्विवादं प्रतिपादयितुं न शक्यते। विशेषतो व्यवहार-वादिनः पाश्चात्या देहव्यतिरिक्तं मनसोऽस्तित्वमेव नाभ्युपगच्छन्ति। ज्ञानं, तस्य प्रतिक्रियादिकं च सर्वमपि शरीरसाध्यमेव भवति। तत्र शरीरे कथं ज्ञानं, कथं च प्रतिक्रियादिकं भवतीति शरीरविच्छेदन-निपुणैः शारीरशास्त्रे सम्यक् निरूपितं भवति। तत्र नाडितन्त्रस्य व्यवस्थैव ज्ञानस्य क्रियायाश्च मुख्यं निमित्तमितीहापि मनोविज्ञानशास्त्रे नाडितन्त्रव्यवस्थायाः परिज्ञानमावश्यकमितरथा ज्ञानस्य क्रियायाश्च कथं समुत्पत्तिरिति सम्यक् परिज्ञातुं न शक्यते।

सर्वेषामपि प्राणिनामखिलमपि शरीरं नाडीनां जालेन व्याप्तमस्ति। यथा हि आधुनिकेषु नगरेषु विद्युद्धारासञ्चालनाय विद्युत्ताराणां जालं प्रसारितं भवति एवमस्माकं शरीरेषु नाडीनां जालं प्रसारितमस्ति। इदं नाडिजालं संवादवाहिना तारतन्त्रेणोपमीयते। यथा हि तारतन्त्रस्य सञ्चालनाय प्रधानं केन्द्रमेकं भवति। तेनैव केन्द्रेण संवादवाहिन्या व्यवस्थाया नियन्त्रणं भवति। एवमस्माकं शरीरेऽपि मनोव्यापाराणां क्रियाणां च नियामकं प्रधानं केन्द्रं मस्तिष्काख्यं विद्यते। बाह्यानामुत्तेज-नानां मस्तिष्कपर्यन्तं नयनाय तत्प्रतिक्रियात्मिकायाश्च गतेः प्रत्यानयनाय तारतन्त्रमिव नाडिजालतन्त्रं समुपयुज्यते। यथा च कदाचित् तारतन्त्रस्य केन्द्रस्थाने केनापि कारणेन दूषणे विघटने वा सञ्जाते तारतन्त्रस्य

सर्वापि व्यवस्था व्याकुलीभवति एवमस्माकं मस्तिष्काख्ये केन्द्रस्थाने दूषिते विघटिते वा ज्ञानस्य क्रियायाश्च सर्वमपि तन्त्रमाकुलीभवति।

## नाडितन्त्रस्य विभागाः—

तदिदमखिलदेहव्यापि नाडितन्त्रं सामान्यतस्त्रिधा संविभज्यते—

१ त्वङ्नाडिमण्डलम्। [ पेरीफिरल नर्वस सिस्टम ]
२ केन्द्रीयं नाड़िमण्डलम्। [ सेन्ट्रल नर्वस सिस्टम ]
३ स्वतन्त्रं नाडिमण्डलम् [ आटोनोमिक नर्वस सिस्टम् ]

## त्वङ्नाडिमण्डलम्—

बाह्योत्तेजनानां मस्तिष्क पर्यन्तं नयनाय प्रतिक्रियाणां च प्रत्यानुयनाय त्वङ्नाडिमण्डलं सामान्यतोऽन्तर्गामि बहिर्गामि चेति भेदेन द्विधा संविभक्तं विद्यते। अन्तर्गामि मण्डलमेव मुख्यं ज्ञानसाधनमिति ज्ञानवाहि [सेन्सरी] मण्डलमित्युच्यते। बहिर्गामि च नाडिमण्डलं प्रतिक्रियाया निर्गमायोपयुज्यत इति गतिवाहि [एफेरेन्ट] नाडिमण्डलमिति व्यवह्रियते। उभयविधस्यापि नाडिमण्डलस्य एकतस्त्वचा मांसपेशिभिश्च [ मसल्स ] परत्र सुषुम्नायां [ स्पाइनल कार्ड ] च सम्बन्धो भवति। इदं त्वङ्नाडिमण्डलमेव बाह्यामुत्तेजनां गृह्णाति, शरीरव्यापारसाधनभूतानां च पेशीनां नियन्त्रणं करोति। सर्वमपि नाडिमण्डलं सूक्ष्माभिर्नाडिभिरेव निर्मितं भवति। तासु कश्चिद्ह्रस्वाः काश्चिच्च दीर्घतरा नाड्यो भवन्ति। सर्वासामपि च तासां नाडीनां मुख्यतस्त्रयो विभागा भवन्ति। तैरेव बाह्योत्तेजनानां ग्रहणं तदनुरूपाणां प्रतिक्रियाणां च सम्पादनं भवति।

१ तत्र नाड्या मध्यमः केन्द्रभागो नाडिकोषाणु [नर्व सेल] इत्युच्यते। स चाग्रिमे चित्रे ह्रस्वतरो वामभागे दृश्यते।
२ नाडया आन्तरोऽन्तभागो अक्षतन्तुः [ एक्शन ] इत्युच्यते। स च गतिवाही भागोऽग्रिम चित्रे दक्षिणतो दृश्यते।
३ नाड्या बाह्यः प्रान्तभागो अपरो वान्तो ग्राहितन्तुः [ डेंड्रान ] इत्युच्यते। स चाग्रिमचित्रे मध्यस्थाने दृश्यते ज्ञानवाही च भवति।

निम्नाङ्कित चित्रे तेषां त्रयाणामपि भागानां स्वरूपं स्थितिश्च सम्यग ज्ञातुं शक्यत इति तेषां चित्राणि सहैव दीयन्ते।

नाडिकोषाणुचित्रम् ग्राहितन्तुचित्रम् अक्षतन्तुचित्रम्
[ नर्वसेल ] [ डेन्ड्रान ] [ एक्शन ]

शरीरस्य कस्मिन्नपि भागे यदा कस्यापि पदार्थस्य स्पर्शादिकं भवति, उत्तेजना वा कापि केनापि प्रकारेण समुद्भवति तदा तत्स्थानवर्तिन्या नाड्या ग्राहिणस्तन्तवस्तामुत्तेजनां झटित्येवोपाददते। सा चानुक्षणमेव नाड्याः कोषाणुं, ततो अक्षतन्तुं ततश्चापरस्यां नाड्यां तेनैव क्रमेणोपसंक्रान्ता भवति। एवमनुक्रमेण नाडिजालेनोपादीयमाना सैव मस्तिष्कप्रदेशमुपयाति। ततश्च मस्तिष्कस्य प्रतिक्रियां बहिर्गामि गतिवाहि नाडिमण्डलं तेनैव क्रमेण यथोचितं त्वक्प्रदेशं नयति। तत्र च तत्क्षणमेव क्रियानुरूपा प्रतिक्रिया संदृश्यते।

सर्वासामप्युत्तेजनानां ग्रहणं ज्ञानवाहिनोऽन्तर्गामिनश्च ग्राहिणस्तन्तव [डेन्ड्रान] एव कुर्वन्ति। ते च गतिवाहिनां बहिर्गामिनां चाक्षतन्तूनामपेक्षया लघवो वृक्षाग्रभागसन्निभाश्च भवन्ति। तेषु पुच्छभूतानां सूक्ष्मांशानां बाहुल्यं भवति। गतिवाहिनो बहिर्गामिनश्च अक्षतन्तवः [एक्शन] तदपेक्षया लम्बायमानाः स्वल्पशाखाग्राश्च भवन्ति। चित्रस्य मध्यस्थाने दृश्यमानं ग्राहिणस्तन्तोः [ डेन्ड्रान ], दक्षिणतो दृश्यमानं दीर्घतरं अक्षतन्तोः [ एक्शन ], वामतश्च दृश्यमानं ह्रस्वतरं नाडिकोषाणोश्चित्रं [नर्वसेल] विद्यते।

जालवद्विस्तीर्णेऽस्मिन्नाडितन्त्रे यत्रैका नाड्यपरया नाड्या संयुज्यते तत्सङ्गमस्थानं 'साइनाप्स' इत्युच्यते । वाष्पयानतन्त्रे जंक्शनाख्यस्य सङ्गमस्थानस्य यादृक् कार्यं मूल्यं च भवति तादृगेव मूल्यं कार्यं चात्र नाडितन्त्रे 'साइनाप्स' नाम्ना प्रथितस्य सङ्गमस्य भवति। यथा हि वाष्पयानसङ्गमेषु यथोचितं यानपरिवर्तनं विधाय जना यथेष्टं स्थानं गन्तुं पारयन्ति एवं नाडितन्त्रसङ्गमेषु समायाता उत्तेजना एकस्या नाड्याः सकाशात् नाड्यन्तरमुपसंक्रामति । एकस्या नाड्या ग्राहिभिस्तन्तुभि-र्या-उत्तेजना पूर्वं गृहीता सैव तस्या बहिर्गामिना अन्ततन्तुना विनिर्गत्यापरस्या नाड्या ग्राहिभिस्तन्त्वग्रैः पुनर्गृहीता सङ्गमस्थलेषु नाड्यन्तरमुपसंक्रामति । एते नाडिसङ्गमा उत्तेजनामभिमतायां दिशि प्रवाहयन्ति, मार्गान्तरसंक्रमणे च प्रतिबन्धका भवन्ति । मस्तिष्के सुषुम्नायां च नाडिसङ्गमानां स्थानानि प्राधान्येन भवन्ति । तत्र पाण्डुवर्णा नाडीना ये सूक्ष्मा अंशाः समवलोक्यन्ते तत्रैवान्तर्हिता इमे सङ्गमा भवन्ति । ते च वहिर्गामिनां अन्ततन्तूनां, अन्तर्गामिनां ग्राहितन्तूनां चान्तराले सूक्ष्मैस्तन्त्वंशैराच्छादितास्तिष्ठन्ति ।

एकविधा काचिदुत्तेजना प्रथमं येन मार्गेण गच्छति तदनन्तरमुत्पद्यमाना तादृश्युत्तेजना जलधारेव प्रायशस्तेनैव मार्गेण पुनः पुनरपि गच्छति । तस्या मार्गान्तरणमभीष्टं यदि भवेत्तर्हि प्रयत्नेनैव सम्पादनीयं भवति, न तु सारल्येन । अत एवाभ्यस्तानां विषयाणां परिज्ञाने कार्याणां चानुष्ठाने महत् सौकर्यं, नूतनस्य विषयस्य ग्रहणे कार्यस्य चानुष्ठाने महत् काठिन्यं सञ्जायते ।

तदयमत्र त्वङ्नाडिमण्डलविषये संग्रहः—

त्वङ्नाडिमण्डलं चैव केन्द्रीयं मण्डलं तथा ।<br>स्वतन्त्रं मण्डलं चेति त्रिविधं नाडिमण्डलम् ॥१॥

ज्ञानवाहि गतेर्वाहि तत्र त्वङ्नाडिमण्डलम् ।<br>अन्तर्गामि बहिर्गामि तद्यथाक्रममीरितम् ॥२॥

एकतस्त्वचि सम्बद्धं सुषुम्नायां परत्र च ।<br>नयत्युत्तेजनामन्त-र्बहिश्चैव गतिं तथा ॥३॥

नाड्या मध्यमभागस्तु नाडिकोषाणुरुच्यते ।<br>अन्ततन्तुरिहैकोऽन्तो ग्राहितन्तुस्तथेतरः ॥४॥

कोषो नर्व-सेल प्रोक्तोऽन्नतन्तुः ऐक्शनाख्यया ।
अथ डेन्ड्रान शब्देन ग्राहितन्तुरिहोदितः ॥५॥

ग्राहिणस्तन्तवो ह्रस्वा वृक्षाग्रभागसन्निभाः ।
दीर्घास्तु स्वल्पशाखाग्राः दृश्यन्ते चान्नतन्तवः ॥६॥

एकस्या ग्राहितन्तुस्तु परस्या अन्नतन्तुना ।
सङ्गमे युज्यते यत्र स 'साइनाप्स' उच्यते ॥७॥

गृहीता ग्राहिणा पूर्वं अन्नेन च बहिष्कृता ।
क्रमेणोत्तेजना याति नाड्या नाड्यन्तरं श्रिता ॥८॥

उत्तेजनाप्रवाहस्तु सकृद् येनापि गच्छति ।
तेनैव पथा भूयोऽप्य-नुधावति जलौघवत् ॥९॥

तस्मादेव कृते कार्ये ज्ञाते च विषये सकृत् ।
सौकर्यं दृश्यते भूयः काठिन्यं च नवे तथा ॥१०॥

सुषुम्नायां च मस्तिष्के नाड्यंशाः सूक्ष्मपाण्डुराः ।
सङ्गमास्ते तु तत्रैव सन्तिष्ठन्ति तदावृताः ॥११॥

उत्तेजना तु मस्तिष्कं नीयते ज्ञानतन्तुभिः ।
तत्र सा गृह्यतेऽन्येन तन्तुना गतिवाहिना ॥१२॥

अनुक्रमाद् बहिर्याता पेशीरुत्तेजयत्यथ ।
प्रतिक्रियास्वरूपेण जायते सहजा क्रिया ॥१३॥

सहजानां क्रियाणान्तु छिक्कादीनां स्वरूपतः ।
त्वङ्नाडिमण्डलं ह्येतत् सन्नियामकमिष्यते ॥१४॥

## केन्द्रीयं नाडिमण्डलम्—

केन्द्रीयं नाडिमण्डलं हि नाडिमण्डलस्य द्वितीयः प्रमुखो भागः। अस्मिंश्च भागे मेरुदण्डस्था सुषुम्नाख्या नाडी, शिरःकपालस्थं लघुमस्तिष्कं बृहन्मस्तिष्कं चेति मस्तिष्कद्वयं तद्योजकःसेतुश्चेति चत्वारो विभागाःसन्ति।

## १—सुषुम्ना—

तत्र सुषुम्नाख्या नाडी मेरुदण्डस्य मध्यवर्तिनी, नाडीनां मुख्यतमा चास्ति। अन्तर्गामिनीनां ज्ञानवाहिनीनां, बहिर्गामिनीनां गतिवाहिनीनां च नाडीनामेकत्रिंशद् युग्मानि सुषुम्नायां संयुज्यन्ते।

पुरोऽवस्थिते चित्रे य उपरितनोऽण्डाकारो भागो दृश्यते स शिरःकपालस्याभ्यन्तरो भागोऽस्ति। बृहन्मस्तिष्कं, लघुमस्तिष्कं सेतुश्चेति मस्तिष्कस्य त्रयोऽपि भागा अस्मिन्नेव खण्डे स्थिता भवन्ति। सुषुम्णाशीर्षकं चाप्यत्रैव तिष्ठति। तदधोवर्ती यो लम्बायमानो भागोऽस्ति स मेरुदण्ड उच्यते। सुषुम्णाख्या नाडी अस्यैव मेरुदण्डस्याभ्यान्तरभागे अधोभागादारभ्य शिरोभागपर्यन्तं प्रसृता भवति। सुषुम्णाया वामपार्श्वे नाडिसूत्राणामेका लम्बायमाना मालेव दृश्यते। एवंविधा माला दक्षिणपार्श्वेऽपि भवति, किन्तु सास्मिश्चित्रे न दर्शिता। सुषुम्णामभितो विद्यमानेयं नाडिसूत्राणां माला पिङ्गलवर्णत्वात् 'पिङ्गला' इत्यभिधीयते। पिङ्गला समीपे च 'इडा' स्थिता भवति, साप्यत्र चित्रे न दर्शिता। सुषुम्णायां गतिवाहिनीनां ज्ञानवाहिनीनां च नाडीनां एकत्रिंशद् युग्मानि उभयतः संसृज्यन्ते।

प्रतियुग्मं चैकागतिवाहिनी नाडी परां ज्ञानवाहिनीं व्यतिक्रामति। एतेषु युग्मकेषु ज्ञानवाहिन्यो नाड्यः सुषुम्णाद्वारेण वाह्योत्तेजनानां प्रवाहं मस्तिष्कपर्यन्तं नयन्ति। गतिवाहिन्यश्च नाड्यः प्रतिक्रियाप्रवाहं त्वक्पर्यन्तं प्रापयन्ति। सुषुम्णायां ज्ञानवाहिनीनां गतिवाहिनीनां च नाडीनां कश्चन तादृशः सम्बन्धो भवति येन वाह्योत्तेजनायाः प्रवाहो मस्तिष्कपर्यन्तं गन्तुमपि प्रभवति, तत्स्थानादेव प्रतिक्रियास्वरूपेण गतिरूपतां प्राप्तुमपि शक्नोति। मस्तिष्कपर्यन्तं परिधावने विलम्बो भवतीति कासुचिदुत्तेजनासु सुषुम्णैव प्रतिक्रियां प्रेषयति। यथा मशकेन पादे दष्टे हस्तस्तत्क्षणमेव कण्डूयने प्रवर्तते। हस्तस्येयं क्रिया सुषुम्णाप्रेरितैव भवति न मस्तिष्कप्रेरिता। सहजक्रियासु प्रायः सर्वा अपि प्रतिक्रियाः सुषुम्णाप्रेरिता एव भवन्ति। यथा हि श्वासयन्त्रे कस्मिन्नपि प्रदेशविशेषे जायमानाया घटनायास्तात्कालिकं प्रतिविधानं स्थानीयेनैवाधिकारिणा विधीयते। ततश्चोच्चतरा अधिकारिणः सूचनां लब्ध्वा यथोचितमनु-

तिष्ठन्ति। तेषां चानुष्ठानं सामान्यतः स्थानीयेनाधिकारिणा कृतस्य प्रतिविधानस्य सम्पोषणात्मकमेव भवति। एवं नाडितन्त्रेऽपि यदा स्थानीयाधिकारिस्वरूपिणी सुषुम्णा काञ्चिदुत्तेजनामधिगच्छति तदा यदि किञ्चित् तात्कालिकमावश्यकं कर्तव्यजातं भवति तत्र सुषुम्णैव गतिवाहिनी-र्नाडीः प्रेरयति। ततश्च यदा सा उत्तेजना मस्तिष्केन लभ्यते तदा मस्तिष्कमपि तत्र यथोचितं प्रतिविधानं करोति। तस्य प्रतिविधानमपि सामान्यतः सुषुम्णाकृतस्य प्रतिविधानस्य समर्थनात्मकमेव भवति। किन्तु कदाचित् तद्विरोध्यपि सम्भवति।

तथा हि यदि कस्यचिद् बालकस्य पुरुषस्य वा हस्ते वृश्चिकेन दष्टं भवेत् तदा मशकदंशनिदर्शनात् सुषुम्णा झटित्येव हस्तविधूननाय गतिवाहिनी-र्नाडीराज्ञापयति। पुरुषश्च हस्तं विधुनोति। किन्तु तावता तस्य दुखं न निवर्तते, उत्तेजना च न प्रशाम्यति। ततोऽयं हस्तं हस्तान्तरेण बलाद् गृहीत्वा रक्तसञ्चारमवरोद्धुं प्रयतते पीडावेगान्नृत्यति, उच्चैराक्रोशति रुदति च। हस्तविधूननोत्तरं जायमान एष सर्वोऽपि व्यापारो मस्तिष्कप्रेरितो भवति। सुषुम्णामनुप्रविश्य ज्ञानवाहिन्यो गतिवाहिन्यश्च नाड्यो द्विधा विभज्यन्ते। तयोरंशयोरेकस्तत्र सुषुम्णायामेव निलीयते द्वितीयश्च भागो मस्तिष्कपर्यन्तं गच्छति। तत्र यो भागः सुषुम्णायां निलीयते तेनैव बाह्योत्तेजनामुपलभ्य सहजक्रियात्मकं तात्कालिकं प्रतिविधानं सुषुम्णा गतिवाहिनी-र्नाडीः समादिशति। यश्च भागो मस्तिष्कं परिधावति, तन्मुखेन मस्तिष्के बाह्योत्तेजनाया उपलब्धिस्तस्याः प्रतिविधानं च भवति।

एवं सुषुम्णा एकतः सहजाः क्रिया नियमयति परतश्च बाह्यशरीरभागेन सह मस्तिष्कस्य सम्बन्धमवस्थापयति, बाह्योत्तेजनानां मस्तिष्कपर्यन्तं नयने,तत्र सञ्जायमानायाः प्रतिक्रियाया बहिरानयने,तदनुरूपं च प्रतिविधाने द्वारीभवति। सुषुम्णायां स्थिता ज्ञानवाहिन्यो गतिवाहिन्यश्च नाड्यः सेत्वाख्ये मस्तिष्कभागे व्यत्यासमवाप्य मस्तिष्के तथा संयुज्यन्ते येन शरीरस्य वामभागो मस्तिष्कस्य दक्षिणार्द्धेन, शरीरस्य दक्षिणभागश्च मस्तिष्कस्य वामार्द्धेन नियन्त्र्यते। सुषुम्णाया उन्नतमो भागः, 'सुषुम्णाशीर्षकम्' इत्युच्यते। तदुपरि मस्तिष्कस्य सेत्वाख्यो भागोऽस्ति। अत्रैव दक्षिणतो वामतश्च समागतानां नाडीनां व्यत्यासो भवति। दक्षिणतः समागता नाड्यो मस्तिष्कस्य वामभागं, वामभागतश्च

समागता नाड्यो मस्तिष्कस्य दक्षिणभागं प्रविशन्ति। अनेनैव व्यत्यासेन शरीरस्य दक्षिणो भागो मस्तिष्कस्य वामभागेन, वामभागश्च दक्षिणभागेन नियन्त्रितो भवति। नाडीनामयं व्यत्यासोऽत्र चित्रे दृश्यते—

स्वभावरूपतां प्रतिपन्नानां व्यापाराणां सहजक्रियाणां च सर्वासा-
मपि नियन्त्रणं सुषुम्णैव करोति। विचारपूर्वकमनुष्ठीयमानानां मस्तिष्क-

प्रेरितानां च क्रियाणां बाह्येन देहभागेन सह सम्बन्धस्य स्थापने सुषुम्णैव द्वारीभवति। अभ्यासजन्या अपि व्यापाराः सुषुम्णानियन्त्रिता एव भवन्ति। एवमस्माकं दैनिकेषु व्यापारेषु विचारिता अविचारिताश्च सर्वेऽपि व्यापाराः साक्षादसाक्षाद्वा सुषुम्णयैव नियम्यन्ते।

**सुषुम्णाशीर्षकम्--**

सुषुम्णाया ऊर्ध्वतमो भागः सुषुम्णाशीर्षकम्। अधोदेशादागता नाड्योऽत्रैव मस्तिष्केन समं योगं लभन्ते। रक्तप्रवाहः श्वासप्रश्वासादयश्च स्वतो जायमाना व्यापारा अनेनैव नियम्यन्ते।

इयमत्रसंग्रहः—

केन्द्रीयं नाडितन्त्रं च भागद्वयविनिर्मितम्।
अधोभागः सुषुम्णाख्यो मस्तिष्काख्यस्तथा परः ॥१५॥

मेरुदण्डस्थिता नाडी सुषुम्णेत्यभिधीयते।
शीर्षभागश्च तस्यास्तु सुषुम्णाशीर्षमुच्यते ॥१६॥

एकत्रिंशद्विधं युग्मं पार्श्वयोरुभयोरपि।
सुषुम्णायान्तु नाडीनां संयोगं लभते शुभम् ॥१७॥

तत्रैकतो गतेस्तन्तुः परतो ज्ञानतन्तुकः।
प्रतियुग्मं तु संयुक्तौ ज्ञानगत्योर्नियामकौ ॥१८॥

साक्षाद् द्वादशयुग्मं च मस्तिष्कं परिधावति।
शीर्षण्यं तत्तु विज्ञेयं संस्थितं चाधिकन्धरम् ॥१९॥

सुषुम्णायां प्रविश्यैव विभक्ता नाडिका द्विधा।
एकोंऽशस्तत्र सम्मग्नः परो मस्तिष्कसञ्चरः ॥२०॥

सुषुम्णामात्रसम्प्राप्ता काचिदुत्तेजना यदा।
प्रतिक्रियेत तत्रैव तदैषा सहजा क्रिया ॥२१॥

सहजक्रियया जाता, गता वापि स्वभावताम्।
व्यापारा ये तु तत्रैषा सुषुम्णैव नियामिका ॥२२॥

**२ मस्तिष्कम्—**

मस्तिष्कमेव चेतनव्यापाराणां नियामकं मुख्यं तत्वम्। शिरः-कपाले त्रिधा संविभक्तस्य मस्तिष्कस्य संस्थितिर्भवति। बृहन्मस्तिष्कं,

लघुमस्तिष्कं सेतुश्चेति मस्तिष्कस्य त्रयो भागाः दृश्यन्ते । ते च विभिन्न-व्यापाराणां नियामका भवन्ति । तत्र ज्ञानक्रिययोरुत्पत्तिस्थानं बृहन्मस्तिष्कम् । लघुमस्तिष्कं च विभिन्नानामुत्तेजनानां संयोजकं शरीर-सन्धारकं च भवति । मस्तिष्कस्य त्रयोऽपि भागा अत्र चित्रे दृश्यन्ते—

**बृहन्मस्तिष्कम्—**

मस्तिष्कस्योर्ध्वतमो भागो बृहन्मस्तिष्कनाम्ना व्यवह्रियते। शिरःकपालस्याधस्तादुच्चावचो नाडितन्तूनां पाण्डुवर्णेन तन्तुजालेन समाच्छन्नो भाग उपलभ्यते तत्रैव बृहन्मस्तिष्क-पदस्य प्रयोगः। तस्यापि द्वौ भागौ, दक्षिणगोलार्द्धः वामगोलार्द्धश्च । मस्तिष्कस्य विभिन्नेषु

भागेषु विभिन्नानां ज्ञानानां केन्द्रस्थानानि भवन्ति । एवं शरीरस्य विभिन्नस्थलीयानां क्रियाणामपि मस्तिष्कस्य विभिन्नस्थानेषु सम्बन्धा

भवन्ति । प्रत्येकस्मिन् गोलार्द्धे प्रणालिकाकारं 'रोलैन्डो' 'सिलह्विस' नामकं चेति फलकद्वयं भवति । तत्र 'रोलैन्डो' नाम्ना प्रसिद्धस्य फलकस्य [ फिशर ] समीपे यथाक्रमं पाद-पृष्ठ-हस्त-ओष्ठ-शिरो-नेत्र-वागादीनां क्रियाणां सञ्चालकानि केन्द्राणि, 'सिलह्विस' फलकस्याधस्ताच्च श्रवण-भाषण-केन्द्रे भवतः । दृष्टिकेन्द्रं च 'रोलैन्डो' केन्द्रात् किञ्चिद्दूरे भवति । ४१ पृष्ठाङ्किते चित्रे केन्द्राणामेषां प्रदर्शनं क्रियते ।

मानवशरीरे समुत्पन्नानां सर्वासां क्रियाणां सञ्चालनं तत्सम्बद्धेन मस्तिष्कस्य केन्द्रेणैव क्रियते । कस्मिन्नपि केन्द्रस्थले विकृतिश्चेन् कापि समुपजायते तर्हि तत्सम्बद्धानां क्रियाणामपि सम्यक् सञ्चालनं न सम्भवति विकृतिश्च तत्र स्फुटमनुभूयते । तथाहि यदि वाक्केन्द्रे विकृतिरुपजायते तदा परेषां वचनं शृण्वन्, अवगच्छन्नपि च, वाचा स्व-भावान् सम्यक् प्रकटयितुं न क्षमते । असम्बद्धं प्रलापमिव किञ्चिद् वचनं तस्य मुखान्निः-सरति । तत् स्वयमप्यवगच्छति किन्तु वाचा तत्प्रतिविधातुं न शक्नोति । स पुरुषो लेखेन सङ्केतेन वा स्वाभिप्रायं प्रकटयितुं क्षमते किन्तु वाचा यथावद् व्यवहर्तुं न पारयति । इयं स्थितिराङ्गलभाषायां 'मोटर एफेजिया' इत्याख्येन रोगनाम्ना व्यवह्रियते । रूसदेशस्याधिनायकः सुगृहीतनामा श्री लेनिन-महोदयो मृत्योः पूर्वमनेनैव रोगेण ग्रस्तोऽभवत् । यथा वाक्केन्द्रे विकृते 'मोटर एफेजिया-रूपो' वाग्गतिरोधो जायते । एवं लेखकेन्द्रे विकृते लेखनगतिरोधोऽपि जायते । स च लेखनगतिरोधो 'एग्राफिया' नामको रोग आख्यायते ।

यथा च क्रियाकेन्द्रेषु विकृतेषु क्रियासु व्याघातो भवत्येवं ज्ञानकेन्द्रेषु विकृतेषु ज्ञानमपि प्रतिहतं भवति । यदा मस्तिष्कस्य दृष्टि-केन्द्रे काचित् क्षतिः सञ्जायते तदा कस्यापि वस्तुनो यथार्थं दर्शनं न सञ्जायते । एवं श्रावण-केन्द्रे विकृते सति सम्यक् श्रावणं ज्ञानं न सम्भवति । एकस्मिन् केन्द्रे विकृते कदाचित् केन्द्रान्तरेष्वपि तस्य प्रतिकूलः प्रभावो दृश्यते । निदर्शनार्थं क्वचिद् दृष्टिकेन्द्रे विकृते भाषणकाठिन्यम-प्यनुभूयते । तेन सर्वेषां केन्द्राणां कश्चन सम्बन्धोऽप्यनुमीयते । अतएव मस्तिष्कस्य एकस्मिन् भागे व्याप्रियमाणे अन्येऽपि भागास्तत्साहाय्यं कुर्वन्ति । तथाहि श्रवणं मुख्यतः श्रोत्रस्य कार्यं भवति, इति कस्यचिद् भाषणस्य श्रवणकाले श्रोत्रस्यैव मुख्यो व्यापारो भवति, तथापि नेत्रे तत्र सहायके भवतः । नेत्रे निमील्य, नेत्रे समुद्घाट्य च भाषणस्य श्रवणे

किञ्चिद्वैशिष्ट्यं भवति। तत्र नेत्रे समुद्घाट्य श्रवणे यद् वैशिष्ट्यं जायते तत्र नेत्रयोः साहाय्यमेव प्रयोजकम्।

## लघुमस्तिष्कम्—

बृहतो मस्तिष्कस्याधो भागे लघुमस्तिष्कं विद्यते। तदपि बृहन्मस्तिष्कवद् भागद्वये संविभक्तं भवति। यथा च बृहतो मस्तिष्कस्य भागद्वयमपि नाडितन्तुभिः परस्परसम्बद्धं भवति, एवं लघुमस्तिष्कस्यापि उभौ भागौ नाडितन्तूनां गुच्छकैः परस्परं सम्बद्धौ भवतः। इदं लघुमस्तिष्कमेकतो नाडितन्तुभिः सुषुम्णाशीर्षकेण सह परतश्च सेतुद्वारेण बृहता मस्तिष्केण सह संयुक्तं भवति। उत्तेजनानां समन्वयः शरीरसन्धारणं चास्य लघुमस्तिष्कस्य मुख्यं कार्यम्। शरीरे यदा कापि गतिर्भवति तदा कासाञ्चिन्मांसपेशीनां सङ्कोचः, कासाञ्चिच्च विस्तारो अपरिहार्यः। तयोः सङ्कोचविकासयो-र्नियमनं लघुमस्तिष्केणैव क्रियते। लघुमस्तिष्कस्य सुषुम्णाशीर्षकद्वारेण शरीरस्य नाडितन्तुभिर्यः संयोगो भवति सोऽनुलोम-सम्बन्ध एव भवति। सेतुद्वारेण बृहन्मस्तिष्केण सह चास्य व्यत्यस्तः प्रतिलोमसम्बन्धो भवति। अनुमोल-प्रतिलोम-सम्बन्धयोरयमभिप्रायो यद् दक्षिणशरीरभागस्य नाडीनां लघुमस्तिष्कस्य दक्षिणभागे, वामशरीर-भागस्य नाडीनां च लघुमस्तिष्कस्य वामभाग एव यः सम्बन्धो भवति, स एव सम्बन्धोऽत्रानुलोमसम्बन्धोऽभिप्रेतः। किन्तु लघुमस्तिष्कात् सेतुद्वारेण यदा ज्ञाननाड्यो बृहन्मस्तिष्कमभिसंक्रामन्ति तदा सेतुभागे तासां व्यत्यासो जायते। लघुमस्तिष्कस्य दक्षिणभागादायाता ज्ञाननाड्यो बृहन्मस्तिष्कस्य वामभागे, लघुमस्तिष्कस्य वामभागादायाताश्च नाड्यो बृहन्मस्तिष्कस्य दक्षिणभागे सम्बध्यन्ते। एवं बृहन्मस्तिष्कस्य वामभागा-दायाता गतिनाड्यः सेतौ व्यत्यासं प्राप्य लघुमस्तिष्कस्य दक्षिणभागे, दक्षिणभागाच्चागता गतिनाड्यो लघुमस्तिष्कस्य वामभागे सम्बद्धा भवन्ति। स एव प्रतिलोमसम्बन्धो भवति। तस्मादेव च सम्बन्धाद् बृहतो मस्तिष्कस्य वामभागेन शरीरस्य दक्षिणभागे जायमानाः क्रियाः, दक्षिण भागेन च शरीरस्य वामभागे जायमानाः क्रिया नियम्यन्ते। तदिदं ३६ संख्यके पृष्ठे मुद्रितेन परावर्तितक्रियाणां प्रदर्शकेण चित्रेण स्फुटीभवति।

उत्तेजनानां समन्वयः, शरीरसन्धारणं च लघुमस्तिष्कस्य मुख्ये कार्ये भवतः। केषुचिद्रोगेषु लघुमस्तिष्के विकृतिरुपजायते। कदाचित्

तत्र विद्रधिरप्युत्पद्यते । एवं लघुमस्तिष्के विकृते सति शरीरस्य सन्धारणं क्रियाणां च साम्यस्थिति-र्न सम्भवति । तदानीं गतिकाले स्खलतस्तच्चरणौ, कन्धरा चैकतो विनिपततीव भवति । उत्थापितं हस्तं पादं वा न सम्यक् सन्धारयितुं पारयति । मद्यादिसेवनेन विषभक्षणादिना उन्मत्तकुक्कुरादिना दृष्टे वा सति लघुमस्तिष्के तादृशी विकृतिरुत्पद्यते । तत एव मद्यपानां मद्यपानोत्तरं तादृशी विषमा दशावलोक्यते ।

## ३ सेतुः—

मस्तिष्कस्य तृतीयो भागः सेतुरित्युच्यते । सेतुर्यथा स्थलस्य भागद्वयं संयोजयति तद्वदेव बृहल्लघुमस्तिष्कयो-र्मध्ये संयोजकरूपोऽयं भागः सेतुसादृश्यात्सेतुरुच्यते । अत्रैव ज्ञानवाहिनीनां गतिवाहिनीनां च नाडीनां मार्गव्यत्यासो भवति । दक्षिणभागादायाता नाड्यो वामभागं वामभागादायाताश्च नाड्यो दक्षिणभागमभिसंक्रामन्ति । ततश्च मस्तिष्कस्य वामभागेन शरीरस्य दक्षिणभागे जायमानानां व्यापाराणां नियमनं सञ्चालनादिकं च भवति ।

तथा चायमत्र संग्रहः—

मस्तिष्कस्य त्रयो भागाः लघुः सेतुः बृहत् तथा ।
सुषुम्णाशीर्षकादूर्ध्वे भवत्येषां च संस्थितिः ॥२३॥
ज्ञानक्रिययो-र्निष्पत्तिः बृहतः कार्यमिष्यते ।
देहसन्धारणं चैव लघोरुत्तेजनान्वयः ॥२४॥
वामदक्षिणभागाभ्यां संविभक्तं बृहद् द्विधा ।
गुच्छैस्तौ नाडितन्तूनां सम्बद्धौ च परस्परम् ॥२५॥
सर्वेषां तत्र ज्ञानानां क्रियाणां चापि सर्वशः ।
केन्द्रस्थानानि विद्यन्ते भागयोरुभयोरपि ॥२६॥
मस्तिष्कस्य क्वचिद् भागे विकृति-र्जायते यदा ।
तत्सम्बद्धेऽथ कार्येऽपि क्षति-र्नित्यं प्रजायते ॥२७॥
वाक्केन्द्रे विकृते श्रोता ज्ञातापि वक्तुमक्षमः ।
यथा एफेजिया-ग्रस्तो लेनिनो रूसनायकः ॥२८॥
दृष्टिकेन्द्रविकारेऽपि वैक्लव्यं भाषयो क्वचित् ।
दृश्यते तेन केन्द्राणां सम्बन्धस्तत्र मीयते ॥२९॥
सुषुम्णा - शीर्षकादूर्ध्वेऽअधस्ताद् बृहतस्तथा ।
एकतो लघु मस्तिष्कं धम्मिलाख्यं तु संस्थितम् ॥३०॥

वादने चित्रणे वापि कोमले क्वापि कर्मणि ।
सम्प्रधारणमङ्गानां उत्तेजनसमन्वयः ॥३१॥

कार्यमस्य विकारश्च यदा मद्यादिनास्य तु ।
प्रस्खलन्ति तदाङ्गानि देहः सन्धार्यते न च ॥३२॥

मस्तिष्कस्य लघो-र्भागौ सेतुतुल्येन सेतुना ।
अन्वितौ वृहता चैव सम्बद्धौ च परस्परम् ॥३३॥

दक्षिणाद् भागतो वामं वामभागाच्च दक्षिणम् ।
अत्रैव व्यतिक्रामन्ति वृहतोः नाडितन्तवः ॥३४॥

दक्षिणांशविकारेऽतो विकृति-र्वामदेहगा ।
विकृते वाम-मस्तिष्के विकारो दक्षिणाङ्गके ॥३५॥

## ३ स्वतन्त्रं नाडिमण्डलम्—

स्वतन्त्रं नाडिमण्डलं देहव्यापिनो नाडिमण्डलस्य तृतीयो मुख्यो भागः । केन्द्रीयस्य नाडिमण्डलस्य यथा सुषुम्णा प्रधानं केन्द्रं तथा स्वतन्त्रस्य नाडिमण्डलस्य प्रधानं केन्द्रं 'पिङ्गला' इत्यभिधीयते । मेरुदण्डस्यान्तःस्थिता नाडी सुषुम्णा नाम भवति । मेरुदण्डस्य वामभागे नाडिसूत्रानुप्रोता चतुर्विंशतिसंख्यकानां पञ्चविंशतिसंख्यकानां वा ग्रन्थीनां - आकण्ठात्-आत्रिकमेका परिस्फुटा मालेव देहेऽवलोक्यते । अस्या ग्रन्थि-मालाया वर्णः पिङ्गल इव भवतीति सा पिङ्गलेति नाम्ना व्यवह्रियते । सुषुम्णावदस्या अपि त्रयो भागाः । उपरि स्थितो भागः शीर्षणी-नाम्ना, मध्यमो भागो मध्यमानाम्ना, अधस्तनश्च भागः अनुत्रिकमिति नाम्ना व्यवह्रियते । अस्यां मालायां ये चतुर्विंशतिसंख्यकाः पञ्चविंशतिसंख्यका वा ग्रन्थयो भवन्ति तेषां मध्ये त्रयो ग्रन्थयो गण्डा वा ग्रीवायां तिष्ठन्ति त एव शीर्षणी-भागेऽन्तर्गता भवन्ति । द्वादश ग्रन्थयो वक्षसि, चत्वारः पञ्च वा वस्तिगह्वरे इति मिलित्वा षोडश सप्तदश वा ग्रन्थयो मध्यभागान्तर्गता भवन्ति । कटिदेशे चत्वारो गुदास्थिसम्मुखे चैक इति मिलित्वा पञ्च ग्रन्थयो अनुत्रिकान्तर्गता भवन्ति । एते सर्वेऽपि ग्रन्थय आकण्ठा-दात्रिकं एकस्मिन् नाडिसूत्रेऽनुप्रोता मुक्तामालावत् प्रतिभान्ति । तेभ्यो ग्रन्थिभ्योऽन्येऽपि नाडितन्तवो निर्गच्छन्ति शरीरस्य विभिन्नेषु भागेषु संयुज्यन्ते च । तत्र शीर्षणीभागान्निर्गतास्तन्तवो मुखमण्डले चक्षुरादौ

च संयुज्यन्ते । त एव च नेत्रकनीनिकयोः सङ्कोचविकासं, मुखे लालायाः ष्ठीवनादिकस्य च नियमनं कुर्वन्ति । अन्धकारे मनुष्यस्य कनीनिकयो-विस्तारः, प्रकाशाधिक्ये चाकचिक्यवशान्नेत्रकनीनिकयोः सङ्कोचश्च भवति । इमौ कनीनिकयोः सङ्कोचविकासौ पिङ्गलायाः शीर्षभागान्निर्गतैस्तन्तुभिरेव नियम्येते ! एवं कस्यचिदम्लपदार्थस्य दर्शने स्मरणे वा सञ्जाते मुखे लालायाः सञ्चारो भवति सोऽपि पिङ्गलाया निर्गतानां तन्तूनामेव प्रभावेण भवति । न केवलमम्लपदार्थसम्बन्धेनैव किन्तु सामान्यरूपेणापि लालायाः सञ्चारः प्रतिक्षणं भवत्येव । भोजनस्य सम्यक् परिपाचनायायं लालाद्रवोऽपरिहार्य एव भवति । स सर्वोऽपि लालासञ्चारो, थूत्कस्य ष्ठीवानादीनां च नियमनं, सर्वमप्येतत् पिङ्गलायाः शीर्षभागान्निर्गतैस्तन्तुभिरेव क्रियते ।

एवं पिङ्गलाया मध्यमभागे द्वादश ग्रन्थयो वक्षसि, चतस्रः पञ्च वा वस्तिगह्वरे भवन्ति । तेभ्यो निर्गतास्तन्तव हृदयस्य श्वास-संस्थानस्य अन्नपरिपाकादिपरस्य आमाशयादिव्यापारस्य नियमनं कुर्वन्ति । तत्रान्नपरिपाकादिसम्पादको नाडिभागो विशेषत 'इडा' नाम्नापि व्यवह्रियते ।

कटिदेशस्थाश्चत्वारः पञ्च वा, गुदास्थिसम्मुखस्थश्चैक इति ग्रन्थि-पञ्चकं षट्कं वा पिङ्गलायास्त्रिकाख्येऽधोभागेऽन्तर्गतं, मलमूत्रापान-वायुकामव्यापाराणां च नियमने निमित्तं भवति ।

इदमंशत्रयोपेतं पैङ्गलं नाडिमण्डलं जीवनसञ्चालकानां प्रधानत-मानां श्वासप्रश्वासादीनां अन्नपरिपाकादीनां मलमूत्रादीनां च व्यापाराणां नियामकं भवतीति जीवनसंस्थानमप्युच्यते । सौषुम्णं नाडिमण्डलं मुख्यतो ज्ञानक्रिययो-र्नियामकं भवति, पैङ्गलं नाडिमण्डलं च मुख्यतो जीवन-व्यापाराणां नियामकं भवतीति विशेषः । सुषुम्णा मेरुदण्डस्य मध्ये आभ्यन्तरभागेऽवस्थिता भवति । तस्य बाह्यभागे पिङ्गला, तत्समीपे च इडा भवति । एतत्त्रितयान्वितो मेरुदण्ड एवास्माकं शरीरस्य सन्धार कोऽस्ति ।

तदयमत्र संग्रहः—

आकण्ठादात्रिकं तत्र परितो मेरुदण्डकम् ।
पञ्चविंशतिगण्डानां [ग्रन्थीनां] मालेव परिलम्बते ॥३६॥

सैषा पिङ्गलवर्णत्वात् पिङ्गलेत्यभिधीयते ।
शीर्षं मध्यं त्रिकं चेति संविभक्ता तु सा त्रिधा ॥३७॥

सङ्कोचादि स्वयं नेत्रे मुखे लालादिकं तथा ।
थूत्कं निष्ठीवनं चैव शीर्षभागान्नियम्यते ॥३८॥

हृद्गति: श्वासप्रश्वासौ, परिपाकोऽन्नपानयो: ।
पिंगलायास्तु मध्येन सर्वमेतन्नियम्यते ॥३९॥

पिंगलाया अधो भागो त्रिकमित्यभिधीयते ।
कामवेगो मलं मूत्रं सर्वं तेन नियम्यते ॥४०॥

**ग्रन्थय:—**

स्वतन्त्रेण नाडिमण्डलेन सम्बद्धा: केचन ग्रन्थयोऽपि भवन्ति ते अस्य नाडिमण्डलस्य कार्यसञ्चालने उपयुज्यन्ते । तेषु केचित् सप्रणालय: केचिच्चाप्रणालय इति द्विविधा ग्रन्थयो भवन्ति । तत्र येषु ग्रन्थिषु समुत्पन्नो रस: कयाचित् प्रणाल्या स्थानान्तरं प्रवहति ते सप्रणालयो ग्रन्थय इति व्यवह्रियन्ते । आमाशये पक्वाशये च ग्रन्थिविशेषसमुत्पन्नो रसो न प्रणालीमन्तरा नेतुं शक्यते इति तस्य रसस्योत्पादका ग्रन्थय: प्रणालि-सहिता एव भवन्तीति सप्रणालय उच्यन्ते । यकृत आमाशये, क्लोम्न: पक्वाशये, वृक्काच्च मूत्राशये प्रणाल्यैव रसा नीयन्ते । एवंविधा नैका: सप्रणालयो ग्रन्थयो देहे सन्ति तेषां कार्यमपि शरीरशास्त्रे आयुर्वेदे च सुविदितचरमेवेति न किञ्चित् तत्र नूतनं वैशिष्ट्यम् । किन्तु प्रणालि-विरहितानां ग्रन्थीनामनुसन्धानं कार्यादिनिर्धारणं च नव्यानां व्यवच्छेद-कानां शारीरशास्त्रिणां नूतनं कार्यमिव प्रतिभाति । विशेषतो,मनोविज्ञान-दृष्ट्या तेषां विशिष्टं महत्वं मूल्यं च विद्यते । मानसिकानामुद्वेगाना-मुत्पादने संवर्द्धने परिच्चये वा प्रणालिविरहितानां ग्रन्थीनां विशिष्ट उपयोगो मनोवैज्ञानिकै: सम्प्रदर्शित: । सप्रणालिभि• ग्रन्थिभिरुत्पादितो रस: प्रणालिकामुखेनान्यत्र नीयते किन्त्वप्रणालिभि ग्रन्थिभिरुत्पादितो रसस्तत्रैव साक्षाद् रक्ते विलीयते । क्लोमनाम्ना प्रसिद्धो ग्रन्थिस्तु द्विविधं रसमुत्पादयति तत्रैको रस: प्रणालिकामुखेनान्यत्र नीयते अपरस्तु तत्रैव रक्ते विलीयते इति सोयऽमुभयात्मको ग्रन्थि: । प्रणालिकाविरहितेषु ग्रन्थिषु निम्नाङ्किता प्रमुखा ग्रन्थयो विद्यन्ते । प्लीहापि प्रणालिकाविरहितो,

ग्रन्थिरस्ति किन्तु नात्र मनोविज्ञाने तदुपयोगोऽस्तीति न प्रदर्श्यते । तद्व्यतिरिक्ताइमे प्रमुखाः प्रणालिकाविरहिता ग्रन्थयः-सन्ति-

१ पिटइट्री  २ पिनियल  ३ चुल्हिका  ४ उपचुल्हिका
५ एडीनल्स  ६ थाइमस  ७ क्लोमा  ८ डिम्ब-अण्डौ

ग्रन्थि प्रदर्शकं चित्रम्

१—पिटुइटरीग्रन्थिः—

गोलाकारोऽयं ग्रन्थि-र्मस्तिष्कस्याधो भागेऽवलम्बमानो दृश्यते। अस्य भागद्वयं भवति। उभाभ्यामपि भागाभ्यां रसद्वयमुत्पद्यते। तत्र सन्मुखभागाज्जायमानो रस शरीरस्य वर्धन उपयुज्यते। पाश्चात्यभागजश्च रसो गर्भाशयस्य मूत्राशयस्य बृहदन्त्रस्य अनैच्छिकमांसानां च सङ्कोचने विशेषत उपयुज्यते। 'पिटुइट्रीन' इत्याख्यमौषधमपि अस्य रसेन निर्मीयते प्रसवकाले चोपयुज्यते। शर्कराविरहिते बहुमूत्रेऽपि चात्यन्तं लाभप्रदं तद् भवति। अस्य ग्रन्थेः कार्याधिक्ये गर्भावस्थायां बालकस्यास्थीनि प्राचुर्येण वर्धन्ते तदभावे चास्थिविकासो न भवतीति वामनत्वं जायते। अस्य विकारेण असाधारणं स्थौल्यमपि जायते।

२—पीनियलग्रन्थिः—

ग्रन्थिरयं मस्तिष्कस्य नलिकायां स्थितो भवति अत एव सोऽत्र चित्रे न दृश्यते। फ्रांसदेशस्य डेकार्टे-नाम्ना प्रसिद्धस्तत्त्ववेत्ता इममेव ग्रन्थिं जीवात्मनो निवासस्थानं मन्यते स्म। तन्मते शरीरस्य सर्वासां क्रियाणां सञ्चालनमयमेव करोति। किन्तु नव्यानां शारीरशास्त्रिणां मते तत् तथ्यं नास्ति। तथापि शरीरे अस्य महत्वपूर्णं कार्यं भवति। बालके कन्यायां च यौवनावस्थायां यौवनचिन्हानां य उद्भवो भवति स सर्वोऽप्यस्यैव प्रभावाद् भवति।

चुल्हिकाग्रन्थिः—

यथा हि उपरितने चित्रे दृश्यते चुल्हिकोपचुल्हिकाख्यौ ग्रन्थि-विशेषौ कण्ठदेशे स्थितौ भवतः। चुल्हिकाया आकारश्चुल्हिकासदृशो भवतीति आकारसाम्यमूलकैवास्या चुल्हिकेति संज्ञा भवति। अस्यां चुल्हिकायामवस्थितं गोलाकारं यद् बिन्दुयुगलं दृश्यते तदेव चुल्हिकायां चुल्हिकासमीपे वा स्थितत्वादुपचुल्हिकेत्यभिधीयते। तत्र चुल्हिकायां थाइरॉक्सिन नाम्ना प्रसिद्धोऽतीवमहत्वपूर्णो रस उत्पद्यते। शरीरस्याभिवर्द्धने-पोषणे चायं रसोऽत्यन्तमुपकरोति। बाल्यावस्थायां ग्रन्थिरयं यदि सम्यक्तया रसोत्पादनं न करोति तदा शरीरस्य दौर्बल्यं वामनत्वं बुद्धिमान्द्यं च जायते। चुल्हिकायाः परिवृद्धौ च गलगण्डाख्यो रोगः सञ्जायते। भये क्रोधे च यथा मुखे लालारसस्योत्पादका लसीकाग्रन्थयो न यथावत् स्वकार्यं कुर्वन्ति

तत्प्रभावाच्च लालारसस्यानुत्पत्तौ मुखं परिशुष्यति। एवं भये क्रोधे चायं चुल्हिकाख्यो ग्रन्थिरपि स्वकार्यं यथावत् कर्तुं न शक्नोति। तस्मात् सामान्यावस्थायां यावान् थाइरैक्सिन रस उत्पद्यते भये क्रोधे च तावान् रसो नोत्पद्यते। अत एवास्य रसस्य परिक्षीणतया शरीरक्षयो भवति। थाइरैक्सिनाख्योऽयं रसः शरीरस्य परिपोषणायामृतकल्प इति तदभावे तस्य न्यूनतायां वा शिरःपीडा, हृत्कम्पोऽग्निमान्द्यमित्येवमादयो भूयांसो रोगाः सञ्जायन्ते। एवं चित्तप्रसादे, स्नेहे, उत्साहे च प्राचुर्येणायं रस उत्पद्यत इति तास्ववस्थासु शरीरस्य परिपुष्टिरभिवृद्धिश्च भवति। तथा चास्यामृतरसस्य प्रतिरोधकत्वादेव भयक्रोधौ स्वास्थ्यविनाशकौ रोगोत्पादकौ च भवतः।

अस्यामृतरसस्य पूर्तिराधुनिकैश्चिकित्सकैः कृत्रिमैरुपायैः पशूनामिमं रसमुपादाय सूचीवेधादिना शरीरे संप्रवेश्य च क्रियते। एतेन तात्कालिको लाभस्तु भवत्येव किन्तु द्रुतमेव तस्य प्रभावो विलीयते। यावज्जीवनं पौनःपुन्येन तत्प्रवेशो दुःसम्पाद एव भवति। उत्तेजनावस्थायां यथा मानवोऽधिकं कार्यं कर्तुं शक्नोति एवं सर्वेऽपि ग्रन्थय उत्तेजनावस्थायामधिकं रसमुत्पादयन्तीति ग्रन्थीनामुत्तेजनाय विविधा व्यायामप्रकारा अपि निर्दिष्टाः सन्ति। तेषां व्यायामानामभ्यासेनापि चुल्हिकायाः समुत्तेजनां विधायास्यामृतरसस्य प्राचुर्यं सम्पादयितुं शक्यं भवति। योगशास्त्रस्य शीर्षासनं, हलासनं, मत्स्यासनं, पश्चिमोत्तानासनं च चुल्हिकायाः समुत्तेजने अमृतरसस्योत्पादने च विशेषतः उपयुज्यन्ते।

**४–उपचुल्हिकाग्रन्थिः—**

चुल्हिकायां चणकाकारं यद् बिन्दुयुगलं दृश्यते तदेव चुल्हिकासामीप्याच्चुल्हिकान्तर्गतत्वाद् वा उपचुल्हिकेत्यभिधीयते। अनयोर्बिन्द्वोः कार्याक्षमत्वे निष्कासने वा 'टेटिनी' इत्याख्यो रोग उत्पद्यते।

**५–थाइमसग्रन्थिः—**

वक्षसः पृष्ठदेशे चुल्हिकायाश्चाधो देशे ग्रन्थिरयं स्थितो दृश्यते। आपञ्चदशवर्षमयं वर्धते तदनु च यथाक्रमं क्षीयते। अस्य किं विशिष्टं कार्यं भवतीति नाद्यापि शारीरशास्त्रिभिः सम्यङ् निर्णीतं, किन्तु तद्विकारे शरीरस्य वृद्धिः प्रतिहन्यते तद्वृद्धौ च बालानां मृत्युरपि दृश्यते। ततश्च बालानां जीवने अस्य विशिष्टं किञ्चिन्मूल्यं विद्यत एव।

## ६—[एड्रीनल्स] उपवृक्काख्यं ग्रन्थिद्वयम्—

एड्रीनल्स-नामकं उपवृक्क-ग्रन्थिद्वयं वृक्कयोरुपरिभागे स्थितं दृश्यते। ताभ्यां तन्नामक एव रसविशेष उत्पद्यते। शरीरे या परिस्फूर्तिरुत्साहश्चावलोक्यते स सर्वोऽस्यैव रसस्य प्रभावः। रसोऽयं सद्य एव रक्ते विलीयते। उत्साहाधिक्ये पुरुषोऽसाधारणमपि कार्यं कर्तुं प्रभवति तज्जातां श्रान्तिं वेदनादिकं च नानुभवति।

## ७—क्लोमग्रन्थिः—

उपवृक्कयोरधस्तात् क्लोमग्रन्थि-र्भवति। अत्र 'इन्स्यूलीन' नामकं द्रव्यमुत्पद्यते। तेन मूत्रे शर्करार्जनमवरुध्यते। यदात्र किञ्चिद् दूषणं सञ्जायते तदा मूत्रे शर्करावाहुल्यं भवति, मधुमेहरोगश्च सञ्जायते।

## ८—डिम्ब-अण्डग्रन्थयः—

स्त्रीषु डिम्बग्रन्थी, पुरुषाणां अण्डग्रन्थी च जननग्रन्थयो भण्यन्ते। इमे ग्रन्थयः शरीरे खटिक-द्रव्याणां सञ्चयं विरलतामापाद्य अस्थि-कङ्कालस्य वृद्धयतिशयं निवारयन्ति। यदि वाल्यावस्थायामेव इमे ग्रन्थयः शल्यक्रियया देहान्निःसारिता भवेयुस्तदा मानवस्यास्थिकङ्कालो अतीव लम्बायमानो भवेत्।

क्लोम-डिम्ब-अण्डग्रन्थिषु रसप्रवाहिकाः प्रणाल्योऽपि भवन्ति। किन्तु तत्र तादृशोऽपि रस उत्पद्यते यः प्रणालिकामार्गेण बहि-र्न गच्छति किन्तु साक्षादेव रक्ते विलीयते।

तदयमत्र ग्रन्थिविषयकः संग्रहः—

प्रणालिसहिताः केचित् केचित् तद्रहितास्तथा।
दृश्यन्ते द्विविधा देहे रसोत्पादन-ग्रन्थयः॥ ४१॥
प्रणालि—सहितास्तत्र रसानुत्पाद्य तन्मुखात्।
प्रेषयन्ति यथास्थानं जीवनं तेन धार्यते॥ ४२॥
आमाशये च लघ्वन्त्रे तथा पक्वाशये रसम्।
प्रणाल्या ते क्षमा नेतुं तथा मूत्रप्रवाहणे॥ ४३॥
तद्रहितो रसं देहे ग्रन्थिर्यं जनयेच्छुभम्।
साक्षाद्रक्ते रसः सोऽयं तत्रैव संविलीयते॥ ४४॥
प्रणालिकाहीनास्तत्र प्रायः षड् ग्रन्थयो मताः।
चुल्लिकादीनि ज्ञेयानि तेषां नामानि शास्त्रतः॥ ४५॥

कण्ठस्थश्चुल्हिकाकारो चुल्हिकेत्यभिधीयते ।
तज्जन्यस्तु रसस्तावत् 'थाइरेक्सिन' उच्यते ॥ ४६ ॥
तस्य रसस्य सञ्चारः शरीरे चामृतायते ।
तदभावे शिरःपीडा हृदः कम्पोऽपचादयः ॥ ४७ ॥
चुल्हिकाग्रन्थिवृद्धौ च गलगण्डः प्रजायते ।
तस्य रसस्य न्यूनत्वे वामनो जायते जनः ॥ ४८ ॥
पश्वादिभ्यो रसस्यास्य प्रवेशात् कृत्रिमात् तथा ।
वामनत्वं क्षयं याति बुद्धिमान्द्यं चिकित्स्यते ॥ ४९ ॥
भये क्रोधे रसस्यास्य समुत्पत्ति-र्न सम्भवेत् ।
ततः स्वास्थ्यक्षयस्ताभ्यां रोगोत्पत्तिश्च जायते ॥ ५० ॥

## प्रश्नाः

१. नाडितन्त्रस्य परिज्ञानेन मनोविज्ञानस्याध्ययने कश्चिदुपकारः सम्भाव्यते न वेति सोपपत्तिकं दर्शय ।
२. त्वङ्नाडिमण्डलस्य किंस्वरूपम् । अन्तर्गामिन्यो बहिर्गामिन्यश्च नाड्यः कथमत्रोपयुज्यन्ते ।
३. सहजा क्रिया कथं सञ्जायते सचित्रं प्रदर्शयत ।
४. सुषुम्णायाः कानि मुख्यानि कार्याणि । मस्तिष्केण च सह तस्याः सम्बन्धः प्रदर्शनीयः ।
५. मस्तिष्कस्य प्रधानभागानां सचित्रं निरूपणं कार्यम् । सेतुमस्तिष्कयोः कः सम्बन्धः ।
६. दक्षिणवामाङ्गयोरुत्तेजनाया मस्तिष्के व्यत्यासेन ग्रहणं भवतीति तत्र किं बीजमिति सचित्रमुपपादनीयम् ।
७. स्वतन्त्रस्य नाडिमण्डलस्य किं स्वरूपम् । तस्य के भागाः । शरीरे तस्य किं महत्वमुपयोगो वा ।
८. के प्रणालिकाविहीना ग्रन्थयः । कथं ते कार्यं कुर्वन्ति । तेषां कार्यं च प्रतिपादनीयम् ।
९. मशकादिना पादे दष्टे सति का प्रतिक्रिया कथं च जायत इति सविस्तरं निरूपणीयम् ।
१०. चुल्हिकायाः स्वरूपं, स्थानं प्रयोजनं च विशदं निरूपणीयम् ।

## चतुर्थः परिच्छेदः

# प्रतिक्रियाः

### मनोव्यापाराणामध्ययनक्रमः—

अस्माकं शरीरे ज्ञानवाहि क्रियावाहि च द्विविधं नाडितन्त्रं, तदनुबद्धानि च मस्तिष्के ज्ञानकेन्द्राणि क्रियाकेन्द्राणि चेति द्विविधानि सर्वव्यापारसञ्चालकानि केन्द्रस्थानानि विद्यन्त इति विगतपरिच्छेदेऽस्माभिः प्रतिपादितम् । तदनुरोधादस्माकं मनोव्यापाराणामपि द्वैविध्यमस्ति । तत्र केचन मनोव्यापारा ज्ञानात्मकाः, केचन क्रियात्मकाश्च । मनोविज्ञानस्य अध्ययने द्विविधस्यापि मनोव्यापारस्याध्ययनं विवेचनं चोपयुज्यते । नैकस्य पक्षस्याध्ययनेनात्र कार्यं निर्वहतीति सर्वेऽपि मनोवैज्ञानिका द्विविधस्यापि मनोव्यापारस्य विवेचनं स्वग्रन्थेषु कुर्वन्ति । तथापि केचन ज्ञानात्मकं पक्षमवलम्ब्य विवेचनमारभन्ते, पश्चाच्च क्रियापक्षं विवेचयन्ति । परे क्रियापक्षादेव मनोव्यापाराणां विवेचनमारभन्ते ज्ञानपक्षं च पश्चाद्विवेचयन्ति । अयं पद्धतिभेदः प्रायो देशभेदेन विभक्त इव प्रतीयते । योरोपदेशस्य मनोविज्ञानशास्त्रिणः ज्ञानपक्षप्राधान्येन मनोव्यापाराणां विवेचनं कुर्वन्ति । अमेरिकादेशस्य मनोविज्ञानशास्त्रिणश्च क्रियापक्षप्राधान्येन मनोव्यापारान् विवेचयन्ति । भारतीये दर्शनशास्त्रेऽपि पूर्वोत्तरमीमांसयोरुपलभ्यमानो ज्ञानकर्मप्राधान्यविवादो मनोवृत्तिद्वैविध्यमूलक एव । वस्तुतस्तु उभयोः समन्वयेनैव सर्वत्रेष्टसिद्धिरिति नैकतरः पक्षः फलाय कल्पते । तस्मान्मनोविज्ञानस्य विवेचने उभाभ्यामपि ज्ञानक्रियापक्षाभ्यां मनोव्यापाराणां विवेचनमपरिहार्यमेव । तथापि ज्ञानपक्षात् क्रियापक्षः स्थूलतरः क्रियापक्षाच्च ज्ञानपक्षः सूक्ष्मतर इति विषयावबोधसौकर्याय पूर्वं क्रियापक्षविवेचनमेव समीचीनतरं प्रतिभातीति तत एवारभ्यतेऽस्माभिरत्र ।

### प्रतिक्रियाणां द्वैविध्यम्—

बाह्यविषयाणामनुभवात् सम्पर्काद्वा सर्वेषामपि प्राणिनामनुकूला प्रतिकूला वा काचित् प्रतिक्रिया भवत्येव । तासां प्रतिक्रियाणामपि

प्रायो द्वैविध्यं दृश्यते । काचिद्विचारानपेक्षिणी काचिच्च विचारापेक्षिणी । तत्र या विचारानपेक्षिणी प्रतिक्रिया भवति सा 'सहजा प्रतिक्रिया' इति नाम्ना व्यवह्रियते । या च विचारापेक्षिणी प्रतिक्रिया भवति सा जटिला सङ्कीर्णा, हेतुपूर्विका प्रतिक्रिया वेति उच्यते । तत्र विचारानपेक्षिणी प्रतिक्रिया सर्वेष्वपि प्राणिषु दृश्यते । विचारापेक्षिणी च प्रतिक्रिया प्राणिनां बुद्धिविकासानुसारिणी यथाबुद्धिविकासमेवोपलभ्यते । कीटाद्यपेक्षया पक्षिणां, तदपेक्षया चतुष्पदानां, तदपेक्षया च मानवानां विचारापेक्षिणी प्रतिक्रिया स्फुटा भवति । मानवेष्वपि यथाबुद्धिविकासं विचारापेक्षिणीनां प्रतिक्रियाणां तारतम्यं दरीदृश्यते ।

## १—सहजा प्रतिक्रिया—

तत्र या विचारानपेक्षिणी सहजा प्रतिक्रिया भवति सा जन्मजातेव स्वाभाविकी समरूपा अपरिवर्तनीया च भवति । कस्मिंश्चिदपि गात्रावयवे कीटादिसंस्पर्शे जाते सति प्रतिकूलानुभवाद् यद् गात्रविधूननं सञ्जायते तत् सहजप्रतिक्रियायाः सुगममुदाहरणम् । यदा कश्चित् कीटः कस्यापि जनस्य पादे प्रसर्पणमारभते दंशादिकं वा करोति तदा झटित्येव जनः पादप्रक्षेपं गात्रविधूननं वा करोति । ईदृशे व्यापारे विचारस्यावसरो न भवतीति विचारानपेक्षिणी सा सहजा प्रतिक्रिया भवति । अत्र विचारानपेक्षित्वं मण्डूकादौ परीक्षणानन्तरं वैज्ञानिकैरवधारितम् । मण्डूकस्य गात्रविच्छेदं विधाय ज्ञान-क्रियावाहिनोरुभयो-र्नाडितन्त्रयो-र्मस्तिष्कात् सम्बन्धविच्छेदे विहितेऽपि यदा मण्डूकस्य पादतले सूचीवेधनं विधीयते तदा मस्तिष्कसम्बन्धमन्तरापि तत्र पादप्रक्षेपात्मिका सहजा प्रतिक्रिया भवत्येवेति वैज्ञानिकै-र्बहुशोऽनुभूतम् । ततश्च इयं पादप्रक्षेपात्मिका सहजा प्रतिक्रिया विचारानपेक्षिणीत्यावधारितम् ।

न केवलं गात्रविधूननमात्रमेव विचारानपेक्षं यावत् नेत्रयोः कनीनिकायाः सङ्कोचविकासौ, निमेषप्रक्रिया, अश्रुप्रवाहः, लालासंस्रावः छिक्कादयश्चान्येऽपि व्यापारा विचारानपेक्षिणीषु सहजप्रतिक्रियासु गण्यन्ते । वैशेषिके दर्शने जीवनपूर्वक इच्छादिपूर्वकश्चेति द्विविधो यत्न इति व्याख्यातमस्ति । तत्र यो जीवनपूर्वको यत्नः स इच्छादिकमन्तरैव भवतीति विचारानपेक्षिणी प्रतिक्रिया तत्राप्यङ्गीकृता । श्वासप्रश्वासादिवद्वृत्ते छिक्का-निमेषादयो व्यापारा विचारमन्तरा, सति प्रयोजने स्वयमेव

प्रवर्तन्ते । यदि मक्षिका कदाचित् कस्यचिन्मुखे प्रविशति, अबाधरूपेण कण्ठदेशादधोऽवतरति च तर्हि तस्य जीवनं सङ्कटापन्नं भवतीति जीवनपूर्वको वमनरूपः प्रयत्नः विचारावसरमलब्ध्वापि हठान्मक्षिकां बहिर्निस्सारयति । एवं यदि कश्चिदनिष्टः पदार्थो नासिकामनुप्रविशति तदा स एव जीवनपूर्वकः प्रयत्नश्छिक्कारूपेण तमनिष्टं तत्त्वं हठाद्बहिः प्रक्षिपति । अयमेव वैशेषिकाणां जीवनपूर्वको व्यापारो मनोवैज्ञानिकैः सहज-प्रतिक्रियाशब्देन व्यवह्रियते । जीवनपूर्वकात् प्रयत्नाद् भिन्न इच्छादि-पूर्वकः प्रयत्नः । स चात्र नव्यैर्मनोवैज्ञानिकै-र्विचारापेक्षिणी प्रतिक्रिया हेतुपूर्विका वा प्रतिक्रियेति व्यवह्रियते ।

सहजप्रतिक्रियाया इदं वैशिष्टयं यदियं सदा समरूपैव भवति । कण्ठदेशादधोदेशे मक्षिकाप्रवेशे वमनमेव, नासिकायामनिष्टपदार्थस्य प्रवेशे छिक्कैव, नेत्रयोरनिष्टपदार्थस्य प्रवेशेऽश्रुप्रवाह एव, नेत्रयोः समीप-मुपगते कस्मिंश्चिदनिष्टे भयेन निमेषसञ्चार एव भवतीति सर्वा एताः सहजाः प्रतिक्रियाः सदा समरूपा एव भवन्ति । अभ्यासादपि तासां परिवर्तनं न संभवति । ततश्च सहजाः प्रतिक्रिया न परिवर्तं सहन्ते न विचारमपेक्षन्ते । इति विचारानपेक्षिणीयं सहजा प्रतिक्रिया भवति ।

तथा चोक्तम्—

प्रतिकूलेऽनुकूले वा जाते विक्षेपकारणे ।
या चेष्टा दृश्यते देहे उच्यते सा प्रतिक्रिया ॥१॥
विचारापेक्षिणी चैव तथा तस्यानपेक्षिणी ।
दृष्टा कीटादिसम्पर्के द्विविधा सा प्रतिक्रिया ॥२॥
जीवनपूर्वको यत्नः तथा चेच्छादिपूर्वकः ।
प्रयत्नोऽयं द्विधा पूर्वैः प्रोक्तो वैशेषिकेऽपि च ॥३॥
जीवनपूर्वकस्तत्र न विचारमपेक्षते ।
स्वत एव प्रवर्तन्ते ततः श्वासादयो जने ॥४॥
पादक्षेपश्च छिक्का च निमेषो वमिरेव च ।
लालासेकोऽक्षिसङ्कोचो जृम्भा चाश्रुगतिस्तथा ॥५॥
जीवरक्षा-विधानाय प्रवर्तन्ते स्वतो हठात् ।
न विचारमपेक्षन्ते कालक्षेपे तु सङ्कटात् ॥६॥
जीवनपूर्वको यत्नः किन्तु वैशेषिके तु यः ।
सोऽप्यात्मगुण एवोक्तो मतश्चाप्यात्महेतुकः ॥७॥

## २—उद्वेगात्मिका प्रतिक्रिया—

यथा सहजा प्रतिक्रिया विचारानपेक्षिणी भवति तद्वदेव उद्वेगात्मिका प्रतिक्रियापि विचारानपेक्षिणीषु प्रतिक्रियासु गण्यते। किन्तु तयोरयं भेदोऽस्ति यत् सहजा प्रतिक्रिया नियता भवति। एकस्मिन् पुरुषे समानासु परिस्थितिषु समानाकारैव प्रतिक्रिया जायते। एवं सजातीये प्राणिवर्गेऽपि सहजा प्रतिक्रिया प्रायः समानाकारैव जायते। किन्तु उद्वेगात्मिकाः प्रतिक्रियाः सहजप्रतिक्रियावत् समानाकारा न भवन्ति। तुल्येऽपि निमित्ते कालभेदेनैकस्मिन्नपि पुरुषे, सजातीये वा व्यक्त्यन्तरे उद्वेगात्मिका प्रतिक्रिया भिन्नरूपापि दृश्यते। इति विचारानपेक्षित्वांशेऽभयोः साम्येऽपि समरूपत्वासमरूपत्वदर्शनात् तयोर्भेद आस्थीयते।

कदाचिदसह्यायां वेदनायामुपजातायां मानसिके वा कस्मिंश्चिदसह्ये उद्वेगकारणे समुपस्थिते सति जनोऽनिश्चितरूपेण गात्रविधूननं, उद्वेल्लनं, विलुण्ठनं वा समारभते। तस्य सैवानिश्चितरूपा क्रिया मनोवैज्ञानिकैः 'उद्वेगात्मिका प्रतिक्रिया' इति नाम्ना व्यवह्रियते। तस्याः स्वरूपमनिश्चितमननुरूपं च भवतीति सा सहजप्रतिक्रियातो भिद्यते। सहजा प्रतिक्रिया सर्वदैकरूपैव भवति उद्वेगात्मिका प्रतिक्रिया तु निमित्तसाम्येऽपि विभिद्यते। अनयोरयं भेदो निम्नाङ्किताभ्यां चित्राभ्यां सम्यक् प्रदर्श्यते—

सहजा प्रतिक्रिया

अत्र उ इति उत्तेजनायाः, प्र इति च प्रतिक्रियायाः संकेतः। रेखायाः सारल्यं तुल्यायामुत्तेजनायां प्रतिक्रियायाः समानाकारतां सूचयति।

उद्वेगात्मिका प्रतिक्रिया

प्र०

उ० ——————————　——————— प्र०

प्र०

अत्रापि उ इति उत्तेजनायाः, प्र इति च प्रतिक्रियायाः संकेतः। तयोरेकत्वं बहुत्वं च उत्तेजनाया अभेदेऽपि प्रतिक्रियाणां भेदस्यावबोधकमस्ति। एकैवोत्तेजना व्यक्तिभेदेन भिन्नां प्रतिक्रियां जनयतीति चित्रे प्रतिक्रियात्रैविध्येन दर्शितं भवति।

**सहजप्रतिक्रियाणामौपाधिकी परिवृत्तिः—**

सहजाः प्रतिक्रियाः सामान्यतः सदा समरूपा अपरिवर्तनीयाश्च भवन्ति। तथापि कदाचित् कृत्रिमैरुपायैर्वैज्ञानिकैस्तासामौपाधिकी स्वरूपपरिवृत्तिरपि विधीयते। किन्तु सा कादाचित्की।औपाधिकी अपवादरूपैव च भवति। सा च १—कदाचित् प्रभावहीनायामुत्तेजनायां प्रभावयोगात् २—कदाचिच्च जन्मजातप्रतिक्रियातो भिन्नया प्रतिक्रियया सह उत्तेजनायाः सम्बन्धाद्वा भवतीति द्विविधाभिधीयते। तत्र कुक्कुरमुखे कृत्रिमैरुपायै-र्लालासञ्चारप्रयोगे आद्यायाः, शाश्वतिकविरोधवतामपि कृत्रिमविनयाधानप्रयोगे चापरस्याः परिवृत्ते-र्निदर्शनमुपस्थापितं भवति।

प्रभावहीनायामुत्तेजनायां प्रभावाधानाय कुक्कुरेषु परीक्षणं कृतं वैज्ञानिकैः। कुक्कुरस्यान्यस्य वा कस्यचित् प्राणिनः समक्षं यदा-भोजनमुपस्थाप्यते तदा तस्य मुखे लालासंस्रावो भवतीति भोजनं लालासंस्रावस्य साक्षात् कारणं, नापरं किञ्चिदपि तत्र साक्षात् प्रयोजकम्। किङ्किणीविरावो वेणुध्वनिर्वा लालारसोत्पादने प्रभावहीन एव भवति। किन्त्वभ्यासात् प्रयोगाच्चायमेव प्रभावहीनः किङ्किणीविरावो वेणुध्वनिर्वा कुक्कुरमुखे लालासञ्चारे प्रभवति। कुक्कुराय यदा-यदा भोजनं दीयते तदा-तदा भोजनदानात् पूर्वं यदि नियमतः कश्चिच्छब्दः क्रियते तदा चिरकालाभ्यासात् भोजनस्थाने स एव शब्दविशेषस्तस्य लालासंस्रावे निमित्ततामुपयाति। किन्तु शब्दविशेषे सा शक्ति-र्न स्वाभाविकी किन्त्वौपाधिक्येव, उपाधे-र्विद्यमानत्वात्। उप स्वसमीपवर्तिनि, स्वधर्ममादधातीति उपाधिः, इति उपाधिशब्दस्य निर्वचनम्। शुभ्रस्य दर्पणस्य सम्मुखे यदा रक्तं पुष्पं निधीयते तदा सर्वाङ्गशुभ्रोऽपि दर्पणस्तत्प्रतिबिम्बदेशे लोहितः प्रतिभाति। दर्पणस्येयं लौहित्यप्रतीतिर्न स्वाभाविकी किन्तु पुष्पसन्निधानकृतैव भवति। पुष्पेण स्वधर्मभूतं लौहित्यं स्वसमीपवर्तिनि दर्पण आधीयत इति पुष्पं तत्रोपाधिः। एवमस्मिन् प्रयोगे भोजनेन लालासञ्चारजनकत्वरूपः स्वधर्मः स्वसमीपवर्तिनि शब्दविशेषे आधीयत इति भोजनं तत्रोपाधिः। एवं दीर्घकालनैरन्तर्यसेवितादभ्यासवशात् लालासञ्चारे

प्रभावहीनापि शब्दविशेषश्रुतिरूपा समुत्तेजना उपाधियोगात् तत्र प्रभाव-युक्ता सञ्जायते । इति सहजप्रतिक्रियायामौपाधिकपरिवृत्तेरिदमाद्य-मुदाहरणम् ।

उत्तेजनायाः प्रतिक्रियान्तरयोगात् परिवृत्तिर्द्वितीया । शाश्वतिक-विरोधवतामपि जन्तूनां विनयाधानात् सहवासस्तत्रोदाहरणम् । सिंह-मृगयोः, कुक्कुरमार्जारयोः, शुकबिडालयोश्च शाश्वतिको विरोधः । सिंहो दर्शनसमकालमेव मृगं व्यापादयति । कुक्कुरो दर्शं दर्शं मार्जार-मभिधावति । बिडालश्च दृष्टमात्रमपि शुकमाक्रमते । इयं हि तेषां नैस-र्गिकी प्रतिक्रिया । किन्तु तपस्विनामाश्रमेषु मृगोऽपि तत्प्रभाववशात् सिंहस्य सहवाससुखमनुभवति । गृहेषु शुक-बिडाल-कुक्कुरा अपि सह वसन्ति न चान्योन्योपघाताय प्रभवन्ति । शाश्वतिकविरोधवतामपि योऽयं विरोधाभावः स न स्वाभाविकः किन्तूपाधेर्जायमानत्वादौपा-धिक एव ।

एवं सहजप्रतिक्रियायामुपाधियोगाद् द्विविधा रूपपरिवृत्तिः सम्भाव्यते । तत्राद्यायां लालारससञ्चारे प्रभावहीना शब्दविशेषश्रुतिरूपा उत्तेजना दीर्घकालाभ्यासवशात् सप्रभावा सञ्जाता । उत्तरत्र च व्यापा-दनप्रवर्तनक्षमापि दर्शनात्मिका उत्तेजना दीर्घकाल-सहवासवशात् नैसर्गिकीं व्यापादनप्रवर्तनां विहाय सहवासप्रवृत्तिमुद्भावयतीति प्रति-क्रियान्तरसंसर्गादौपाधिकी स्वरूपपरिवृत्तिः सहजप्रतिक्रियायाः ।

## ३ मूलप्रवृत्तिरूपा प्रतिक्रिया--

यथा सहजा, उद्वेगात्मिका च प्रतिक्रिया जन्मजाता अहेतुका विचारानपेक्षिणी च भवति तद्वदेव मूलप्रवृत्तिरूपा तृतीयापि प्रतिक्रिया जन्मजाता अहेतुका प्रायो विचारानपेक्षिणी च स्वीक्रियते । मूलप्रवृत्तीनां वर्णनमग्रिमपरिच्छेदे विस्तरतो विधास्यत इति नेह वितन्यते ।

एतास्तिस्रः अर्जिताः प्रतिक्रियाः जन्मजाता अहेतुका विचारानपेक्षिण्यश्च भवन्ति । तद्-व्यतिरिक्ता १ इच्छाधीनाः प्रतिक्रियाः, २ प्रकृतिः [आदत] ३ चरित्रं चेति तिस्रः विचारापेक्षिण्योऽर्जिताश्च प्रति-क्रियाः कथ्यन्ते । तदेवं तिस्रो विचारानपेक्षिण्यः, तिस्रश्च विचारापेक्षि-ण्य इति मिलित्वा क्रियापक्षोदिताः षड्विधाः प्रतिक्रियाः स्वीक्रियन्ते ।

## अर्जितानां प्रतिक्रियाणामनुपातः—

तदेवं क्रियापक्षोदितासु षड्विधासु प्रतिक्रियासु आद्यास्तिस्रो जन्मजाता अन्त्याश्च तिस्रो अर्जिता आहार्या वा भवन्तीति द्विविधोऽत्र परोऽपि विभागो भवति। अयं द्विविधो विभागः प्रायः सर्वेषामपि प्राणिनां प्रतिक्रियासु दृश्यते। किन्तु प्राणिनां विकासभेदात् तत्र मात्रा-तारतम्यमनुभूयते। शैशवे प्रायः सर्वेष्वपि प्राणिषु जन्मजातानामेव प्रति-क्रियाणां प्राधान्यं भवति। किन्तु यथा-यथा प्राणिनामायुरभिवर्धते तथा-तथा तत्रार्जितसंस्कारानुरोधादर्जितप्रतिक्रियाणामप्यभिवृद्धिर्भवति। तथापि पश्वादौ अर्जितानां संस्काराणामाधानमतिकाठिन्येन स्वल्पमात्रायां च भवति। तदपेक्षया मानवेषु सारल्येन प्राचुर्येण चार्जितानां संस्काराणा-माधानं भवतीति तत्राहार्याः प्रतिक्रिया अपि प्राचुर्येण प्रौढावस्थायामुप-लभ्यन्ते। मानवानां पश्वादीनां च जन्मजातानामर्जितानां च संस्का-राणां प्रतिक्रियाणां वानुपातो निम्नाङ्कितेन चित्रेण प्रदर्श्यते—

शैशवे जन्मजाः प्रतिक्रियाः    यौवने जन्मजाः प्रतिक्रियाः

तदेव यौवने
एवं स्वल्पतरं जायते

पशुषु

शैशवे जन्मजातानां, प्रतिक्रियाणां
इयत् परिमाणं भवति

जन्मजा

अर्जिता

मानवेषु

शैशवे
अर्जितानां प्रतिक्रियाणां
इयती स्वल्पतरा मात्रा भवति।

यौवने तासां इयत्
परिमाणं सञ्जायते।

शैशवे अर्जिताः प्रतिक्रियाः    यौवने अर्जिताः प्रतिक्रियाः

अस्मिन् रेखाचित्रे स्फुटं प्रतीयते यन्मानवस्य शैशवावस्थायामर्जितानां जन्मजानां च प्रतिक्रियाणां योऽनुपातो भवति स प्रौढावस्थायां विपरिवर्तते ।

## प्रतिक्रियाणां त्रिविधो विभागः—

अस्मिन् प्रकरणे प्रतिपादितानां षण्णां प्रतिक्रियाणां प्रायस्त्रिविधो विभागो दृश्यते । तत्र विचारापेक्षित्वानपेक्षित्वकृतः प्रथमो विभागः । जन्मजातत्वार्जितत्वकृतो द्वितीयो विभागः । अहेतुकत्व–सहेतुकत्वकृतस्तृतीयो विभागः । त्रिष्वपि विभागेषु प्रथमास्तिस्रः प्रतिक्रियाः प्रथमे कल्पे अन्त्यास्तिस्रश्चान्त्ये कल्पेऽन्तर्भवन्ति ।

तद्यथा—१ सहजा प्रतिक्रिया, २ उद्वेगात्मिका प्रतिक्रिया, ३ मूलप्रवृत्तिरुपा प्रतिक्रिया चेति तिस्रः प्रतिक्रियाः अ–विचारानपेक्षिण्यः ब–जन्मजाताः, स–अहेतुकाश्च प्रतिक्रिया भवन्ति ।

एवं १ इच्छिता क्रिया, २ प्रकृतिः, ३ चरित्रं चेति तिस्रः प्रतिक्रिया विचारापेक्षिण्यः, ब–अर्जिताः, सहेतुकाश्च भवन्तीति तद्विधासु प्रतिक्रियासु गण्यन्ते ।

तथा चोक्तम्—

सहजोद्वेगरूपा च तथा मूलप्रवृत्तयः ।
जन्मजाऽहेतुका चैव त्रिधाप्येषा प्रतिक्रिया ॥८॥
प्रकृतिश्च चरित्रं च इच्छिता च क्रिया तथा ।
अर्जिता हैतुकी चैव त्रिविधैषा प्रतिक्रिया ॥९॥

### प्रश्नाः

१. प्रतिक्रियाः कतिविधा भवन्ति । तासां विभागश्च कथं क्रियते ।

२. सहजप्रतिक्रियायाः स्वरूपं सोदाहरणं प्रदर्शनीयम् ।

३. मनुष्याणामन्येषां च प्राणिनां जन्मजानामर्जितानां च प्रतिक्रियाणामनुपातः प्रदर्शनीयः ।

४. सहजप्रतिक्रियायामौपाधिकं परिवर्तनं कथं भवतीति सोदाहरणं प्रतिपादनीयम् ।

५. कतिविधा मनोव्यापारा मनोविज्ञानोपयोगिनः केन क्रमेण च तेषामध्ययनं विधेयम् ।

---

पञ्चमः परिच्छेदः

# मूलप्रवृत्तयः

पूर्वसङ्गतिः—

ज्ञानात्मकाः, क्रियात्मका भावात्मकाश्चेति त्रिविधा मनोव्यापाराः पूर्वं प्रतिपादिताः। भारतीये न्यायेऽपि 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गानि' [न्यायदर्शने १, १, १०] इति गोतमोक्ते सूत्रे इच्छाद्वेषप्रयत्नशब्दैः क्रियात्मकः, ज्ञानशब्देन ज्ञानात्मकः, सुखदुःखशब्दाभ्यां च भावात्मको व्यापारः प्रतिपादितोऽस्ति। एषां त्रिविधानां मनोव्यापाराणां मध्ये क्रियापक्षस्य ज्ञानापेक्षया स्थूलतरत्वात् सुग्राह्यतेति क्रियापक्षादेवात्र विवेचनं प्रारब्धम्। तत्र प्रतिक्रियाणां त्रयो जन्मजा, त्रयश्चार्जिता भेदा इति षड्विधाः प्रतिक्रियाः पूर्वमुपवर्णिताः। तत्रार्जितासु त्रिविधासु प्रतिक्रियासु सहजा प्रतिक्रिया, उद्वेगात्मिका च प्रतिक्रिया पूर्वस्मिन् परिच्छेदे प्रदर्शिता। तृतीया मूलप्रवृत्तिरूपा जन्मजा प्रतिक्रिया अत्रोपक्रम्यते।

मूलप्रवृत्तिलक्षणम्—

पाश्चात्येषु मनोवैज्ञानिकेषु सर्वेष्वपि ग्रन्थेषु मूलवृत्तीनां वर्णनं दृश्यते किन्तु मैगडूगल-महोदयेन तासां विशेषरूपेण सविस्तरं वर्णनं विहितम्। तन्निरूपणेन एतत् प्रतीयते यन्मूलप्रवृत्तिषु ज्ञानात्मका क्रियात्मका भावात्मकाश्च त्रयोऽपि मनोव्यापारांशाः सम्मिलिता भवन्ति। मूलप्रवृत्तीनां स्वरूपं निरूपयता मैगडूगल-महोदयेन तल्लक्षणमेवं व्यधायि—

यस्याः प्रभावाज्जन्तवः कमपि वस्तुविशेषं पश्यन्तस्तत्रावहिता भवन्ति, तदुपस्थितौ कमपि भावविशेषमनुभवन्ति तद्वशाच्च तत्सम्बद्धायां कस्याञ्चित् क्रियायां प्रवर्तन्ते सा प्राकृतिकी जन्मजा शक्ति-र्मूलप्रवृत्ति-रित्युच्यते[1]।

---

१ एन इंस्टिंक्ट इज एन इननेट डिस्पोजीशन व्हिच डिटर्मिन्स द आर्गेनिज्म टु पर्सीव आर पे अटैन्शन टु एनी आब्जैक्ट आफ़ सर्टेन क्लास एण्ड

अनेन लक्षणेन ज्ञायते यन्मूलप्रवृत्तिर्जन्मजा भवति। तेनेयं सजातीयेषु सर्वेष्वपि प्राणिषु समानाकारैव भवतीति फलितं भवति। मूलप्रवृत्तीनामभिव्यक्तौ पदार्थविशेषस्योपस्थितिः प्रयोजिका भवतीति तत्र ज्ञानात्मकोंऽशः। तदभिव्यक्तौ च जनः सुखदुःखात्मकं कमपि भावविशेषमनुभवतीति तत्र भावात्मकोंऽशः। तद्वशाच्च तत्सम्बद्धे कस्मिंश्चित् कर्मणि प्रवर्तते इति तत्र क्रियात्मकोंऽशः। एवं ज्ञानात्मकः, क्रियात्मको भावात्मकश्चेति मनोव्यापारस्य त्रयोऽप्यंशाः मूलप्रवृत्तीनां लक्षणे समाविष्टा दृश्यन्ते।

तन्निदर्शनार्थं भीत्यात्मक-भावसंवालिता पलायनप्रवृत्तिर्विवेचनीया। भीतिर्जन्तूना मनोनिहिता जन्मजा वृत्तिरस्ति। सन्तमसान्धकारे यदा जनो भुवि निपतितां सर्पभ्रान्तिप्रयोजिकां रज्जुं पश्यति तदा सा वृत्तिरभिव्यक्तिमासादयति। ततो जनो दुःखप्रयोजकं भयात्मकं भावमनुभवति झटित्येव च तत्स्थानादुत्प्लुत्य दूरं पलायते। अत्र मूलप्रवृत्तिलक्षणस्य चत्वारोऽप्यंशाः स्फुटं प्रतीयन्ते। तस्मादियं भीत्यात्मकसंवेगसंवलिता पलायनप्रवृत्तिः, मूलप्रवृत्तिरित्युच्यते।

सांख्यतत्वकौमुदीकारेण वाचस्पतिमिश्रेण अन्तःकरणचतुष्टयस्य युगपद् वृत्तिं दर्शयता तत्सदृशमेवोदाहरणान्तरमेवं प्रदत्तमस्ति—

यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद् व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्य आलोचन-संकल्प-अभिमान-अध्यवसायाः [चत्वारोऽप्यन्तःकरणव्यापाराः] युगपदेव प्रादुर्भवन्ति। यतस्तत उत्प्लुत्य तत्स्थानादेकपदे अपसरति। [सांख्यतत्वकौमुद्यां कारिका ३०।]

## मूलप्रवृत्तीनां नामानि—

यथेयं भीत्यात्मक-सवेगसंवलिता पलायनप्रवृत्तिर्मूलप्रवृत्तिरभिधीयते एवं क्रोधात्मकसंवेगसवलिता युयुत्सा, वात्सल्यादिसंवेगयुताः शिशुरक्षादयश्चतुर्दश मूलप्रवृत्तयः मैगडूगल-महोदयेन प्रतिपादिताः।

---

टु एक्सपीरियन्स इन इट्स प्रजेन्स ए सर्टेन इमोशनल एक्साइटमेन्ट एण्ड इम्पल्स टु एक्शन व्हिच फ़ाइण्डस एक्सप्रेशन इन ए स्पैसिफ़िक मोड आफ़ बिहैवियर इन रिलेशन टु दैट ऑब्जैक्ट।

मूलप्रवृत्तिभिः सह कस्यचिद् भावस्य सम्बन्धो अपरिहार्य एव भवति। भावसम्बन्धविरहिता वृत्तयो मूलप्रवृत्तिपदेन नाभिधीयन्ते। मैगडूगल-महोदयेन चतुर्दश मूलप्रवृत्तयस्तत्सम्बद्धा भावाश्चाधोऽङ्कितेन रूपेण प्रदर्शिताः सन्ति—

| | मूलप्रवृत्तयः | सम्बद्धा भावाः |
|---|---|---|
| १ | भोजनान्वेषणम् | बुभुक्षा |
| २ | पलायनम् | भयम् |
| ३ | युयुत्सा | क्रोधः |
| ४ | उत्सुकता | विस्मयः |
| ५ | रचना | रचनात्मक आनन्दः |
| ६ | संग्रहः | संग्रहभावः |
| ७ | विकर्षणम् | घृणा |
| ८ | शरणागतिः | करुणा |
| ९ | कामवासना | कामः रतिर्वा |
| १० | शिशुरक्षा | स्नेहः |
| ११ | परस्पृहा | एकाकिता |
| २१ | आत्मख्यापनम् | उत्साहः |
| १३ | विनयः | आत्महीनता |
| १४ | हास्यम् | प्रसादः |

एवं मैगडूगल-महोदयेन चतुर्दशधा मूलप्रवृत्तयः, तत्सम्बद्धा भावाश्च प्रदर्शिताः सन्ति। एतासु चतुर्दशसु मूलप्रवृत्तिषु हास्यात्मिका चरमा मूलप्रवृत्तिः केवलं मानवेष्वेव लभ्यते नान्येषु प्राणिषु। शिष्टास्त्रयोदश प्रवृत्तयो मनुष्येषु पशुषु च तुल्या एव।

अयमत्र संग्रहः—

भोजनान्वेषणं चैव युयुत्सा च पलायनम्।
औत्सुक्यं रचना चैव संग्रहोऽथ विकर्षणम् ॥१॥

शरणं कामवृत्तिश्च शिशुरक्षा परस्पृहा।
आत्मप्रकाशनं चैव विनयो हास्यमेव च ॥२॥

मूलप्रवृत्तयो ह्येताः [१४] मैगडूगल-मतोदिताः।
हास्यं पुरुष एवास्ति शेषाः सर्वेषु प्राणिषु ॥३॥

एवं मैगडूगल-निरूपिताश्चतुर्दश मूलप्रवृत्तयः संगृहीताः। तत्सम्बद्धा भावाश्चपि निम्नाङ्किताभ्यां श्लोकाभ्यां संगृहीताः—

बुभुत्सामर्षो भीतिश्च विस्मयो रचनामुत्सम्।
संग्रहेच्छा घृणा चैव कृपा कामुकता तथा ॥४॥

स्नेह एकाकितोत्साहः प्रसादश्चात्महीनता।
मूलप्रवृत्तिसम्बद्धाः [१४] संवेगाश्च यथाक्रमम् ॥५॥

## मूलप्रवृत्तिविषये विप्रतिपत्तयः—

मूलप्रवृत्तिविषयकोऽयं सिद्धान्तो मुख्यतो मैगडूगल-महोदयेन प्रतिपादित इति पूर्वमुक्तम्। अन्येषां बहूनां विदुषां तद्विषये विप्रतिपत्तयः सन्ति। मनोविज्ञानस्येतिवृत्तपर्यालोचनया प्रतीयते यत् षोडशशताब्द्यां समुद्भूतो टामसहाब्स-महोदयः [१५८८-१६७९] सर्वेषामपि प्राणिनां सर्वेऽपि व्यवहारा यन्त्रवत स्वत एव प्रवर्तन्ते इति प्रतिपादयति। तत्समानकालीनो डेकार्टेमहोदयोऽपि [१५९६–१६५०] पशुव्यवहाराणां यान्त्रिकत्वं प्रतिपादयति। उभाभ्यामपि दार्शनिकाभ्यामात्मविचारप्रक्रिया मनोविज्ञानक्षेत्राद्बहिष्कृता। आत्मचिन्ता मनोविज्ञानव्यतिरिक्ताया अध्यात्मविद्याया विषयः। तामात्मचिन्तां विहाय देहे दृश्यमानानां व्यापाराणां विश्लेषणमेव मनोविज्ञानस्य विषय इति तेषां समुद्घोषः। एवं हाब्स-महोदयस्य मते सर्वेऽपि व्यवहारा यान्त्रिका एवेति न तन्मते मूलप्रवृत्तीनां किमपि प्रयोजनम्।

'वाटसन' [१८७८] प्रभृतयो व्यवहारवादिनोऽपि मूलप्रवृत्तीनां सत्तां नाङ्गीकुर्वन्ति। ते हि सहजक्रियानिमित्तकमेव सर्वं व्यवहारं प्रतिपादयन्ति। हर्बर्ट-स्पेन्सर-महोदयोऽपि सहजक्रिया-व्यतिरिक्तां मूलप्रवृत्तिं नानुजानाति। तेन समा विषमा चेति सहजा क्रिया द्विधा विभक्ता। विषमा सहजक्रियैव तन्मते सर्वव्यवहारसाधिका। न च मूलप्रवृत्तिस्ततो भिद्यते। एवं मूलप्रवृत्तिविषये बहुविधा विप्रतिपत्तयो दृश्यन्ते।

तदयमत्र संग्रहः—

यान्त्रिका एव सर्वेऽपि व्यवहारा नृणां यतः।
न हाब्समते सहजा नवा मूलप्रवृत्तयः ॥६॥

मूलप्रवृत्तयः सर्वाः सहजैव प्रतिक्रिया ।
ततो भिन्ना मता ह्येता न व्यवहारवादिनाम् ॥७॥
समा च विषमा चैव सहजैव प्रतिक्रिया ।
न स्पेन्सरमतेऽप्येवं भिन्ना मूलप्रवृत्तयः ॥८॥
एवं विरोधिपक्षेषु मैग्डूगल-महोदयः ।
तासां विभेदमाख्यातुं भेदबीजं न्यरूपयत् ॥९॥

## यान्त्रिकक्रिया–सहजक्रिया–मूलप्रवृत्तीनां भेदः --

एवं बहुविधासु विप्रतिपत्तिषु मुख्यतो व्यवहारवादिनां मतं प्रत्याख्याय मैगडूगल-महोदयः [१८७१] मूलप्रवृत्तिसिद्धान्तं स्थापयामास । यान्त्रिकक्रियातो सहजक्रियातश्च मूलप्रवृत्तिः सर्वथैव भिन्नास्तीति तस्य मतम् । स्वमतस्योपोद्बलनार्थं तेन तासां निम्नाङ्कितानि भेदबीजानि प्रदर्शितानि—

१ सर्वासामपि क्रियाणां किमपि प्रयोजनं तु भवत्येव किन्तु प्रयोजनप्रकारभेदादेव तासां भेदोऽनुमीयते । तत्र परार्थसाधनमेव यान्त्रिकक्रियाया मुख्यं प्रयोजनम् । परेण सञ्चाल्यमानमचेतनं यन्त्रं न स्वार्थसाधनाय कल्पते । केवलं तत्प्रयोक्तुरेव प्रयोजनं साधयति । तस्मात् यान्त्रिकी क्रिया परार्थैव न स्वार्था । किञ्च तत्र बाह्य एव प्रयोजको नान्तरः । एवं पारार्थ्यं बाह्यसाधनप्रयोज्यत्वं च यान्त्रिकक्रियाया द्विविधं मुख्यं वैशिष्ट्यम् । तदेव च सहजक्रियातस्तस्या विभेदकम् ।

२ जीवनपूर्वकः प्रयत्न एव सहजक्रियेति पूर्वं प्रतिपादितम् । तस्मात् जीवनरक्षैव सहजक्रियाया मुख्यं प्रयोजनम् । यद्यपि यान्त्रिकक्रियावत् तत्प्रयोजनं बाह्यं न भवति किन्त्वान्तरमेव भवति । तथापि प्रयोजनज्ञानमन्तरा विचारपेक्षां चान्तरैव जायते सहजा क्रियेति सा मूलप्रवृत्तितो विभिद्यते । मूलप्रवृत्तिप्रयुक्तो व्यवहारः सहजक्रियाप्रयुक्तव्यवहारवत् आन्तरोपायसाध्यो जीवनरक्षाफलोऽपि सन् प्रायेण प्रयोजनज्ञानपूर्वको भवतीति स सहजक्रियाव्यवहाराद् भिद्यते । छिक्कादयः सहजक्रियासु परिगणिताः । आहारानुसन्धानादयः मूलप्रवृत्तिषु चाम्नाताः। बाह्योत्तेजनासम्बन्धात् प्रयोजनज्ञानमन्तरैव सहसा छिक्कादीनां प्रवृत्तिः । आहारानुसन्धानादीनां प्रायः प्रयोजनज्ञानपूर्विका प्रवृत्तिरित्युभयोर्भेदः ।

३ किञ्च सहजक्रियायाः कार्यं सजातीयेषु सदा तुल्यरूपमेव भवति। मूलप्रवृत्तिकार्यन्तु सजातीयेष्वपि व्यक्तिभेदाद् भिद्यते। एकस्मिन्नपि च पुरुषे कालभेदाद् देशभेदाद्वा विपरिवर्तते।

४ मूलप्रवृत्तिकार्यं च क्रियासमभिहारात् पौनः-पुन्येनानुष्ठीयमानमुत्तरोत्तरमुत्कर्षं प्राप्नोति। सहजक्रियायाः कार्यन्तु क्रियासमभिहारेणानुष्ठीयमानमपि न कमप्युत्कर्षमवाप्नोति कूटस्थवत् तथैवावतिष्ठते।

५ मूलप्रवृत्तिकार्याणां बुद्धिर्नियामिका। सहजक्रियाकार्याणि तु देहकेन्द्रैरेव नियम्यन्ते।

६ मूलप्रवृत्तिकार्याणामभिव्यक्तिः कालभेदमपेक्षते। आहारानुसन्धानस्य प्रवृत्ति-र्जन्मकालादेवाभिव्यक्ता भवति। कामवृत्तिस्तु यौवनेऽभिव्यक्तिं लभते। सहजा क्रिया सर्वापि जन्मजातैव भवति न कालभेदादभिव्यक्तिमासादयति।

एवं सहजक्रियाकार्येषु मूलप्रवृत्तिकार्येषु च भूयान् भेद उपलभ्यते। तस्मात् सहजक्रियातो मूलप्रवृत्तिर्भिन्नैव इति मैगडूगल-महोदयस्याभिप्रायः।

तदयमत्र संग्रहः—

यन्त्रक्रिया परार्थैव तथा बाह्यप्रयोजना।
बाह्यप्रेरणया जाता करोत्यन्यप्रयोजनम् ॥१०॥

जीवरक्षानिमित्तैव सहजाऽज्ञातहेतुका।
नाभ्यन्तरनिमित्ता सा न विचारमपेक्षते ॥११॥

देहैकदेशसम्बद्धा सहजाल्पप्रयोजना।
दूरप्रयोजना मूल-प्रवृत्तिः सर्वदेहगा ॥१२॥

सहजा तुल्यरूपैव व्यक्तिभेदान्न भिद्यते।
भिद्यन्ते देशकालादिभेदान्मूलप्रवृत्तयः ॥१३॥

मूलप्रवृत्तिकार्यं चाभ्यस्यमानं पुनः पुनः।
उत्तरोत्तरमुत्कृष्टं जायते नापरं मनाक् ॥१४॥

मूलप्रवृत्तिकार्याणां बुद्धिरेव नियामिका।
सहजायाः पुनः कार्यं देहकेन्द्रै-र्नियम्यते ॥१५॥

कालभेदेन व्यज्यन्ते शैशवे यौवनेऽथवा ।
मूलप्रवृत्तयः प्रौढाः, सहजा न प्रतिक्रियाः ॥१६॥
सहजायां क्रियायान्तु स्वतो लोकः प्रवर्तते ।
जृम्भा छिक्का निमेषोऽथ हासः कासो निदर्शनम ॥१७॥
बाह्योत्तेजनसापेक्षं यान्त्रिकं न विचारितम् ।
सहजक्रियायाः कार्यं सततं तुल्यमेव च ॥१८॥
मूलप्रवृत्तिकार्ये च सोद्देश्यं बुद्धिपूर्वकम् ।
न बाह्योत्तेजनापेक्षमभ्यासात् परिवर्तते ॥१९॥

## एकप्रवृत्तिवादः—

एवं यान्त्रिकक्रियातः सहजक्रियायाः सहजक्रियातश्च मूलप्रवृत्तीनां भेदबीजं दर्शयित्वा मैगडूगल-महोदयेन तासां पार्थक्यं स्थापितम् । तन्मते मूलप्रवृत्तयः सहजक्रियाभ्यो यान्त्रिकक्रियाभ्यश्च भिन्ना मनसो विशिष्टाः प्रवृत्तयः । ताश्च परस्परमपि तथैव भिद्यन्ते यथा तासामपरत्रान्तर्भावो न सम्भवति । किन्तु ततो भिन्ना नव्यतराः फ्रायड-[ १८५६–१९३९ ] प्रभृतयो मनोविश्लेषणवादिनो मनोवैज्ञानिका मैगडूगल-महोदयस्य मतं न स्वीकुर्वन्ति । तेषां मते प्राणिनां सर्वा अपि शक्तयो मूलत एकाकारा एव । यथा ब्रह्मवादिनामेकमेव ब्रह्म नानाप्रपञ्चात्मकतया भासते तथैकैव मूलशक्तिः नानाप्रवृत्तिरूपेण भासते ! वस्तुतो न स्वरूपतो भिन्ना मूलप्रवृत्तयः किन्त्वभिन्ना एव । एकैव मूलशक्ति-र्नानाकारेण भासते। यथा एकस्मादेव मृत्पिण्डाद्धेमपिण्डाद्वा घटमुकुटादयो विकाराः समुद्भवन्ति तत्रैव तिरोभवन्ति च तथा एकैव मूलशक्तिरुद्भवाभिभवाभ्यां भिन्नाकारतया भासते । एकैव रतिः कामप्रवृत्तिर्वा पत्निविषयिणी कामवासनात्मकतया भासते । सैव पुत्रगता वात्सल्यभावं भजते । गुरु-विषयगता पितृविषयिणी वा भक्तिनाम्ना व्यवह्रियते। एवं दृश्यमानाःसर्वा अपि मूलप्रवृत्तय एकस्या एव मूलशक्तेः परिणामभेदाः न तु परस्परमत्यन्तं विभिन्नाः शक्तय इति मनोविश्लेषणवादिनां फ्रायड-प्रभृतीनां विदुषां मतम् ।

इयं मूलशक्तिश्च तैर्भिन्नै-र्विद्वद्भि-र्भिन्नैरभिधानैर्व्यवह्रियते । फ्रायड-महोदय एतां मूलशक्तिं कामशक्ति-नाम्ना व्यवहरति । तन्मते सर्वोऽप्ययं लोकव्यवहारः कामशक्तेरेव परिणामभेदः । युङ्गमहोदयेन

सा शक्ति-र्जीवनशक्तिरिति [ लिबिडो ] नाम्ना व्यवह्रियते । शोपनहारस्तां [ विल टु लिव ] जिजीविषा-पदेनाभिधत्ते । जिजीविषैव शोपनहारमते सर्वस्य लोकव्यवहारस्य प्रवर्तिका । सैव च क्वचित् कामवासनात्मकतया, क्वचित् पलायनात्मकतया, क्वचिद् युयुत्सारूपेण च भासते । संग्रहो, रचना, शिशुरक्षा परस्पृहादयः सर्वा अपि शक्तयो जिजीविषाया एव रूपान्तरभूताः सन्ति । वर्गसन महोदयश्च तामेव [ इलास वाइटल ] प्राणशक्तिरिति नाम्नाभिधत्ते ।

तदयमत्र संग्रहः—

फ्रायडः शोपनहारो युङ्गो वर्गसनस्तथा ।
एकप्रवृत्तिवादं तु व्याचष्टे नामभेदतः ॥२०॥
एकं ब्रह्म प्रधानं वा नानारूपतया यथा ।
भासते शक्तिरेकापि तथा नानास्वरूपिणी ॥२१॥
कामो, जिजीविषा, जीवशक्तिः प्राणस्तथैव च ।
यथाक्रमं च तैरस्याः शक्तेर्नाम प्रकीर्त्यते ॥२२॥

## मूलप्रवृत्तीनां विभागाः—

मैगडूगल-महोदयेन या एताश्चतुर्दश मूलप्रवृत्तयः प्रतिपादिताः सन्ति तासां विभिन्नै-र्विद्वद्भि-र्विभिन्नरूपेण विभागाः कृताः सन्ति । तत्र कर्कपैट्रिक-महोदयेन एता मूलप्रवृत्तयः पञ्चस्ववान्तरेषु वर्गेषु वर्गीकृताः । तन्मते मूलप्रवृत्तीनामधोऽङ्किताः पञ्च प्रमुखा भेदा सन्ति । एतेष्वेव पञ्चसु भेदेषु सर्वासामपि मूलप्रवृत्तीनां संग्रहो भवति ।

१ आत्मरक्षा ।
२ सन्तानोत्पत्तिः ।
३ सामूहिकजीवनम् ।
४ परिस्थित्यनुकूलं जीवनम् ।
५ धार्मिकमादर्शमयं जीवनम् ।

थार्नडाइक-महोदयेन मूलप्रवृत्तयो वैयक्तिक—सामाजिकभेदेन द्विधा विभक्ताः सन्ति । तत्र भोजनानुसन्धानं, जिज्ञासा, विधायकता रचना-प्रवृत्तिर्वा, संग्रहः, आत्मगौरवं, युयुत्सादयश्च वैयक्तिके असामाजिकवर्गे-ऽन्तर्भवन्ति । कामप्रवृत्तिः, परस्पृहादयश्च सामाजिकप्रवृत्तिवर्गे-ऽन्तर्भवन्ति ।

केैश्चिच्च १ स्वत्वसम्बन्धिन्यः, २ समाजसम्बन्धिन्यः, ३ सन्तानसम्बन्धिन्यश्चेति त्रिधा संविभक्ता एता मूलप्रवृत्तयः। तत्रात्मरक्षाया आत्मविकासस्य च प्रेरिका भोजनानुसन्धानप्रवृत्तिः, संग्रहप्रवृत्तिः, पलायनप्रवृत्तिः,औत्सुक्यप्रवृत्तिश्च स्वत्वसम्बन्धिनि प्रथमे वर्गेऽन्तर्भवन्ति। याश्च प्रवृत्तयः सामाजिककार्येषु प्रवर्तयन्ति ताः सामाजिकप्रवृत्तिवर्गेऽन्तर्भवन्ति। यथा विनयः, परस्पृहा, आत्मप्रदर्शनं, हास्यादिकं च। कामप्रवृत्तिःशिशुरक्षा चेति प्रवृत्तिद्वयं सन्तानसम्बन्धिनि तृतीये वर्गेऽन्तर्भवति।

एवं विभिन्नैर्विद्वद्भिर्यद्यपि विभिन्नप्रकारैर्मूलप्रवृत्तीनां वर्गीकरणं कृतं किन्तु तत्सर्वमप्यपूर्णमेवेति प्रतीयते। यतः सर्वासां प्रवृत्तीनां कस्मिन् कस्मिन् वर्गे कथमन्तर्भावो भवतीति पूर्णतया केनापि न दर्शितम्। सर्वैरपि स्वाभिमतेषु वर्गेषु कतिपयप्रवृत्तीनामेवान्तर्भावो दर्शितः। तस्मात्सर्वोऽप्ययं विभागो अपूर्ण एव प्रतिभाति।

## मूलप्रवृत्तीनां परिवर्तनम्—

मूलप्रवृत्तयः सामान्यतः सर्वा अपि परिवर्तनार्हा भवन्तीत्युक्तम्। विशेषतो मानववर्गे मूलप्रवृत्तीनामिदं परिवर्तनं सुकरमतीवावश्यकं चास्ति। मूलप्रवृत्तीनां परिवर्तननिमित्तक एव मानवस्य विकासः। यथा-यथा सुचारुरूपेण मूलप्रवृत्तीनां परिवर्तनं भवति तथा-तथा सुविकसितं भवति मानवस्य जीवनम्। इदं परिवर्तनं च विशेषतो बाल्यावस्थायामेव सुकरं भवतीति शिक्षकैस्तत्र सार्वहितैर्भवितव्यम्। बालानां प्रवृत्तिं तत्परिवर्तनमार्गं च सम्यग् ज्ञात्वा समुचितेऽवसरे यथोचितं मार्गमवलम्ब्य शिक्षकाः बालप्रवृत्तिषु यथेष्टं परिवर्तनं सुधारं च कर्तुं क्षमन्ते। अतः शिक्षकैःपरिवर्तननियमानां सम्यगध्ययनं कर्तव्यम्। तदभिज्ञा एव शिक्षका बालानां जीवननिर्माणे साफल्यमधिगच्छन्ति नान्य इति तत्परिज्ञानमत्यन्तमावश्यकम्। मूलप्रवृत्तीनां समुचितं परिवर्तनमाधातुं विज्ञैश्चतुर्विधा उपाया निर्धारिताः सन्ति। ते चोपाया निम्नाङ्किताः सन्ति—

१ दमन-प्रोत्साहने।　　　२ मार्गान्तरणम्।
३ निरोधः अवरोधो वा।　　४ शोधनम्।

तथा चोक्तम्—

मानवस्य विकासाय वृत्तीनां परिवर्तनम।
अपेक्ष्यतेऽन्यथा तस्य पशुवज्जीवनं भवेत् ॥२३॥

दम-प्रोत्साहने नैवावरोधः शोध एव च ।
मार्गान्तरणमित्येतत् तत्रोपायचतुष्टयम् ॥२४॥

## दमन-प्रोत्साहने—

चतुर्विधेष्वेषु वृत्तिपरिवर्तनोपायेषु वृत्तीनां दमनं प्रोत्साहनं चेति द्वयं सर्वतोऽधिकं सुकरं प्रचलितं च दृश्यते । सर्वेऽपि शिक्षकाः, शासका लौकिका वा जना वृत्तीनां दमनमार्गं प्रोत्साहनसरणिं वावलम्ब्यैव कार्य-जातं साधयन्ति । दण्डपुरस्कारावनयोरेव प्रतिनिधिभूतौ । शिक्षकाः, शासका, लौकिकाश्च जना दण्डभयेनानिष्टवृत्तीनां दमनं कुर्वन्ति, पुर-स्कारादिविधिना प्रोत्साहनं च विधाय सद्वृत्तीनां विकासं कुर्वन्ति । अस्माकं वैयक्तिकेऽपि जीवने कामक्रोधादि-वृत्तीनां दमनमेव शास्त्रकारै-र्निर्दिष्टम् । आभ्यां मार्गाभ्यां वृत्तीनां परिवर्तनं उपायान्तरापेक्षया सुकरं भवतीति सर्वैरयमेवोपायः प्राधान्येनाश्रीयते । किन्त्वाधुनिका मनोवैज्ञा-निका दमनमार्गं नाभिनन्दन्ति । तन्मते हठाद् वृत्तीनां दमनेऽनुष्ठीयमाने केवलं वाह्यरूपेणैव तासामदर्शनं सञ्जायते न तु वस्तुतो विलोपस्तासां भवति । प्रत्युत सूक्ष्मरूपेण मनसि स्थितास्ता दुष्परिणाममेव जनयन्ति । यावद् भयं भवति तावद् विलीनकल्पा अपि स्वल्पेऽप्यवकाशे द्विगुणितेन वेगेनाकार्ये प्रवर्तयन्ति । अत एव नव्या मनोवैज्ञानिका दमनमार्गं नाभि-नन्दन्ति । किन्तु प्रत्नेषु शास्त्रादिषु सर्वत्रैव दमनं प्रशस्यते । नव्यानां मते दमनेन बाला नृशंसाः क्रूरा उद्दण्डा वा जायन्ते । पक्षान्तरे वा केचन कातरा भीरवो विगतोत्साहा निःसत्वा इव सञ्जायन्ते । एवं दमनमार्गस्य विषये नव्यानां प्रत्नानां च विदुषां भूयान् भेदो दृश्यते ।

तदयमत्र संग्रहः—

कुवृत्तीनां विनाशश्च तथा सद्वृत्तिवर्धनम् ।
दमनप्रोत्साहनाभ्यां सुकरं साधु सम्भवेत् ॥२५॥
दमः प्रत्नमते शस्तोऽनिष्टो नव्यमते तथा ।
प्रायो दुष्टफलः किन्तु दमः सर्वत्र शस्यते ॥२६॥

## २ मार्गान्तरणम्–

मूलप्रवृत्तीनां परिवर्तनोपायेषु वृत्तीनां मार्गान्तरणं द्वितीयं साधनम् । प्रथमतोऽधिकं च शस्यते । दमनोपायावलम्बेन वृत्तीनां विनाशो न सम्भवति किन्तु दमनवशादन्तर्मनसि तिरोहिता अपि प्राप्ते

कालेऽनिष्टं जनयन्तीति पूर्वमुक्तम्। तस्य दमनदुष्परिणामस्य निवारणा-यायमेवोपायः प्रभवति। तिरोहिताया वृत्तेर्बहिर्गमनाय दृष्टश्चेन्मार्गो नाविष्क्रियते नूनं गुप्तमार्गेण सञ्चरन्ती साऽनिष्टं सम्पादयति पुरुषं चाकार्ये नियुंक्ते। उद्दामप्रवाहा वा सर्वमप्यवरोधं हित्वा भित्वा बलात् प्रसरन्ती जनमनिरुद्धं सृजति। मानसिक-ग्रन्थिरूपेण वा बहुविधानां शारीराणां मानसानां वा रोगाणां प्रयोजिका भवति। अतो मूलप्रवृत्ति-प्रकाशाय कश्चन सरलो मार्गोऽवश्यमनुसन्धेयः। यदि बालानां काचिन्मू-लप्रवृत्तिरनुचितेन मार्गेण प्रवर्तते तदा शिक्षकैस्तस्या केवलं दमनमेव न विधेयं किन्तु तिरोहितायास्तस्या मार्गान्तरणविधिना प्रकाशनमार्गोऽप्य-नुसन्धेयः। गाडफ्रे-टामसमहोदयेन 'इंस्टिंक्ट इन्टेलीजेन्स एण्ड करैक्टर' नामके स्वग्रन्थे नदीधारेव चित्तशक्तिरवधारिता। योगदर्शनेऽपि 'चित्तनदी-नामोभयतो वाहिनी, वहति कल्याणाय च वहति पापाय च' इति नदी-धारकल्पैव चित्तवृत्तिः प्रतिपादिता। नदीधारा यदि स्वाभाविकेन मार्गेण प्रवहति समुद्रं चाभिधावति तदा सा स्वल्पमेव लोकोपकारं साधयति। कदाचिच्च उद्दामवेगेन प्रवहन्ती जनानामनिष्टकारिणी सञ्जायते। अत एव नदीनां स्वाभाविकं प्रवाहमवरुध्याधुनिका वैज्ञानिका शिल्पिनो वा ततो विद्युदुत्पादनादि कार्यं साधयन्ति। कुल्यामार्गेण च तस्या मार्गान्तरणं विधाय बहु जनहितं सम्पादयन्ति। यदि नदीधाराया हठादवरोधः क्रियेत, मार्गान्तरणोपायश्च नानुष्ठीयेत चेत् तदा सा स्वयमेव कमपि गुप्तमार्गं विधास्यति। स चारम्भेऽदृष्टोऽपि मार्गः कालेन भीषणाकारो दुरवरोधश्च भविष्यति। यद्वा गुप्तमपि मार्गमनासादयन्ती सा सर्वमपि प्रतिबन्धं उल्लंघ्य उत्कूलं यास्यति। बालानां चित्तवृत्तेरपीयमवस्था। दमना-तिशये कदाचिद् गुप्तमार्गेण प्रवहन्ती सा बालानां महदनिष्टं सम्पादयति। व्यक्तमेव मर्यादातिक्रमणं विधाय तानुद्धतान् वा करोति। अत एव दमनेऽनुष्ठीयमाने तिरोहिताया वृत्तेः प्रकाशाय कश्चन व्यक्तो मार्गो-ऽवश्यमनुसन्धेयो भवति।

फ्रायड—महोदयेन मूलप्रवृत्तीनां दमनस्य दुष्परिणामाः सविस्तरं निरूपिताः। तन्मते उन्मादादीनां मानसिकरोगाणां सर्वेषामपि निदानं कामप्रवृत्तेर्दमनमेव। यदि कामवासनाया दमनं न क्रियेत तदा मानवः स्वस्थतरं जीवनं यापयितुं शक्नोति। यथा-यथा सभ्यताया विकासो भवति तथा-तथा कामप्रवृत्तीनां दमनमावश्यकं भवति। तच्च मानवानाम-

स्वास्थ्यकरं मानसानां रोगाणां च निदानं भवति। समाजसम्पर्कादुत्पद्यमाना नैतिकी भावना मनुष्यस्य सुखं न वर्धयति किन्तु दुःखमेव वर्धयति। ततो जनानां मानसिकशान्तिलाभाय नैतिकभावनायाः शैथिल्यमप्रतिहतं चाचरणं आवश्यकमस्तीति फ्रायडमहोदयस्याभिमतमस्ति। किन्तु तत्समीचीनं न प्रतिभाति। कामप्रवृत्तीनां दमनान्मानसा शारीराश्च रोगाः सञ्जायन्त इत्यभ्युपगम्यमानेऽपि तदभावे मानवस्य जीवनं सुखं स्वस्थतरं च भविष्यतीति न सम्भाव्यते। नैतिकभावनया कामप्रवृत्तीनां निरोधाद् यावन्तो रोगाः सञ्जायन्ते ततोऽपि प्रभूततराः रोगा ईर्ष्याद्वेषजन्या सम्भवन्ति। मानवानां भोगेच्छायाः कापि सीमा नास्ति। पशूनां भोगेच्छा कालविशेषमात्रव्यापिका। ऋतुकालमन्तरा ऋतुमतीं च विहाय ते न प्रवर्तन्ते। मानवानां भोगेच्छा न कालविशेषाधीना नापि भोग्याया अवस्थाविशेषनुबन्धिनी। प्राप्ते काले एकामेव भोग्यामवलम्ब्य पशवो मिथः कलहायन्ते। मानवाश्चेदानीं सत्स्वपि बहुषु नैतिकेषु बन्धनेषु रमणीनिमित्तमहर्निशं कलहायन्ते। विच्छिन्नेषु नैतिकेषु बन्धनेषु का नु गतिर्भवित्री मानवसमाजस्य। अत एव निर्बाधं भोगप्रवृत्तिं समर्थयतः फ्रायडमहोदयस्य सुखाशा दुराशैव। किन्तु मार्गान्तरणविधिना कामप्रवृत्तिदमनजा हानि-र्निवारयितुं शक्यत इति सत्यम्। कामप्रवृत्तीनां दमनं कृत्वा सा शक्तिर्यदि सामाजिकेषु रचनात्मकेषु वा कार्येषु मार्गान्तरणविधिना विनियुज्यते तदा न मानसानां शारीराणां वा रोगाणां वा सम्भवो, न वा मानसग्रन्थीनामुद्भवः। तस्मान्मार्गान्तरणं प्रशस्तम्। तथा चोक्तम्—

> हानिं दमनजन्यां तु परिहर्तुं बुधैर्नवः।
> मार्गान्तरणमाम्नातं द्वितीय साधनं शुभम् ॥२७॥
> नदीधारा मनोवृत्ति-र्दमनं न हितावहम्।
> गुप्तमार्गेण वा याति उत्कूलं वा प्रधावति ॥२८॥
> मार्गान्तरप्रवाहेण वृत्तिरोधो हितावहः।
> नदीधारानिरोधे वै कुल्यामार्गो यथा शुभः ॥२९॥

## ३ बलावरोधः —

द्वयोरनिष्टयोर्वृत्तिभेदयोः सङ्घर्षं जनयित्वा तयोर्बलक्षयोपजननं बलावरोधाख्यं तृतीयं मूलप्रवृत्तीनां परिवर्तनसाधनम्। मूलप्रवृत्तीनां दमनापेक्षया विरुद्धयोः सङ्घर्षं समुत्पाद्य तन्नियन्त्रणं समीचीनं भवति।

यथा युयुत्साप्रवृत्तेर्विरोधिनी क्रीडाप्रवृत्तिः। यदा बालेषु युयुत्साप्रवृत्तेः प्राबल्यं पश्येत् तदा तेषां क्रीडाप्रवृत्तिविशेषतः प्रोत्साहनीया। प्रोत्साहनेन युयुत्साप्रवृत्तिः क्षीणतामापद्यते। एवं बालेषु पलायनप्रवृत्तेः प्राधान्यमुपलभ्य तेषामात्मप्रकाशनप्रवृत्तिः प्रोत्साहनीया भवति। तेन प्रोत्साहनेन पलायनप्रवृत्तेर्बलं क्षीयते। एवमेव सामाजिकप्रवृत्तीनां प्रोत्साहनेन सञ्चयप्रवृत्तेः शक्तिः क्षीणा भवति। सामाजिकप्रवृत्तीनां प्रोत्साहनेनैव कामप्रवृत्तेरपि बलावरोधो भवति। एवं विरुद्धप्रवृत्तिभिः सार्धं सङ्घर्षमापाद्यमाना मूलप्रवृत्तिर्मनसि तिरोहिता कालान्तरेऽनिष्टं सम्पादयितुं न प्रभवति। तस्माद्दमनापेक्षया श्रेयानयं बलावरोधोपायः।

राजनीतिसमोऽयं बलावरोधमार्गः। यथा नीतिज्ञाः नृपाः प्रजावर्गे विद्रोहसम्भावनायां जातायां तत्र भेदनीत्या प्रतिस्पर्धिवर्गद्वयमुत्पाद्य तयोरेकतरस्य प्रोत्साहनेनान्यतरं, कालान्तरेऽन्यतरप्रोत्साहनेन चान्यं क्षीणवीर्यं कुर्वन्ति। तद्वदेवात्र वृत्तिद्वयसङ्घर्षमुत्पाद्यानिष्टप्रवृत्तीनां बलावरोधो विधीयते। एवं भेदमार्गावलम्बेन यथा राज्ञो बलं न हीयते किन्तु सुरक्षितमेवावतिष्ठते वर्धते च। तद्विरुद्धं दमनमार्गावलम्बेन राज्ञः स्वीयं बलं क्षीयते, विरोधिनां च बलं सुरक्षितं भवति। एवमेवात्र बलावरोधोपायो बालानामनिष्टप्रवृत्तीनां परिवर्तने श्रेयस्करो भवति।

तदिदमुक्तम्—

विरुद्धवृत्त्या सङ्घर्षं समुत्पाद्य विरोधिनी।
प्रवृत्तिः क्षीणतां नेयाऽवरोधः स प्रकीर्तितः ॥३०॥

क्रीडाप्रवृत्तिप्रोत्साहाद् युयुत्सा क्षीयते यथा।
सामाजिकप्रवृत्तीनां प्रोत्साहात् सञ्चयस्तथा ॥३१॥

अभावो दमग्रन्थीनां स्वशक्तिश्चापि सुदृढा।
तस्माच्छ्रेष्ठतरो मार्गो दमनादेष कीर्तितः ॥३२॥

## ४ शोधनम्—

मूलप्रवृत्तीनां शोधनं तत्परिवर्तने तुरीयं साधनम्। इदं मार्गान्तरणस्य रूपान्तरमात्रं भवति। शोधनेन मूलप्रवृत्तिस्तथा परिवर्तते यथा प्रयत्नेनापि न प्रत्यभिज्ञायते सैवेयमिति। अयं मार्गो मुख्यतः कामप्रवृत्तिपरिवर्तन एवोपपुज्यते। कामप्रवृत्तिर्हि मानवस्य प्रबलतमा प्रवृत्तिरस्ति।

तस्य प्रभूता व्यापारास्तन्मूला एव दृश्यन्ते। फ्रायडप्रमुखा मनोवैज्ञानिकाः प्राणिनां सर्वमपि व्यवहारजातं कामप्रवृत्ति-मूलकमेवामनन्ति। शोपनहार-महोदयेनापि तत्समर्थितम्। यदीयं कामप्रवृत्ति-र्निर्बाधं प्रवर्तते तदा मानवः पशुतुल्य एव भवति। कामप्रवृत्तिनियन्त्रणायत्त एव मानवसमाजस्य विकासः सभ्यता च। किन्तु कामप्रवृत्तेर्हठाद्दमनेऽनुष्ठीयमाने बहवोऽनिष्टपरिणामा अपि भवन्तीति पूर्वमेवोक्तम्। यः पुरुषो हठात् कामप्रवृत्तीनां दमनं करोति, मार्गान्तरणविधिना शोधविधिना वा सा प्रवृत्तिः कमपि मार्गान्तरं च न लभते, तस्य जनस्य मनसि निलीना सा कामप्रवृत्ति-र्मार्गान्तरमलभमाना विक्षिप्ततामुपजनयति। समुचितं मार्गान्तरणं शोधमार्गं वा सम्प्राप्य सैव कामप्रवृत्तिरसाधारणं गुणाधानं विधत्ते। येन स पुरुषो लोके पूज्यतां याति।

परस्परं स्नेहः, मैथुनं, शिशुरक्षा चेति कामप्रवृत्तेस्त्रयो भागाः। कालभेदेन तेषां भागानामुद्भावाभिभवौ भवतः। कामप्रवृत्तेः कस्मिंश्चित् सामाजिके कर्मणि विनियोग एव तत्संशोधनोपायः। साहित्यं कला सङ्गीतकं चेति कामप्रवृत्तेस्त्रयः संशोधनोपायाः। एभिरुपायैः संशोध्यमाना कामप्रवृत्तिस्तथा रूपान्तरमापद्यते यथा प्रयत्नेनापि न प्रत्यभिज्ञायते यदिदं साहित्यं कलादिकं वा कामप्रवृत्तेरेव विलसितमिति। एवं संशोधिता कामप्रवृत्तिः साहित्यादिमुखेन यथात्मानन्दाय कल्पते तथा लोकानन्दायापि प्रभवति। 'साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' इति समुपश्लोकयता भर्तृहरिणापि साहित्यसङ्गीतकलादीनां लोकोत्तरानन्दहेतुत्वं समर्थितम्। अरस्तूमहोदयेनापि सङ्गीतस्यात्मपरिष्कारहेतुत्वं प्रतिपादितमस्ति। वस्तुतः साहित्यादिनिषेवणेन जनानामवाञ्छिताः प्रवृत्तयः परिष्कृता भवन्ति। सङ्गीतनिषेवणेन च परमानन्दानुभूतिर्जायते इति तेषां भगवदाराधनेऽपि विनियोगः। तदेवं शोधमार्गावलम्बेन संशोधिता कामप्रवृत्तिरपि लोककल्याणकारिणी भवतीति बालानां कामप्रवृत्तिपरिष्काराय शिक्षकैस्तत्र साहित्याभिरुचिसम्पादने प्रयत्नो विधेयः। तदयमत्र संक्षेपः—

तुरीयः शोधमार्गोऽस्ति वृत्तीनां परिवर्तने।
मार्गान्तरणमार्गस्य रूपान्तरणमेव तत् ॥२३॥

कामवृत्तिर्मनुष्यस्य वृत्तिः प्रौढतमा मता।
प्रायस्तस्य व्यवहाराः सर्वे तां वृत्तिमाश्रिताः ॥३४॥

केवलं दमनं तस्या विक्षिप्तं कुरुते जनम्।
संशोधनं पुनस्तस्या महल्लोकोपकारकम् ॥३५॥

स्नेहश्च मैथुनं चैव शिशुरक्षा तथैव च।
कामवृत्तेस्त्रयो भागास्ते व्यक्ताः कालभेदतः ॥३६॥

कलासाहित्यसङ्गीतैः कामवृत्ति-विंशोधिता।
जायते शोधनोपायास्तस्मात् तस्यास्त्रयो मताः ॥३७॥

## प्रश्नाः

१ मूलप्रवृत्तिलक्षणं सोदाहरणं प्रदर्शनीयम्।

२ मूलप्रवृत्तयः शृङ्खलाबद्धाः सहजक्रिया एव इति मतं समीचीनं न वेति सोपपत्तिकं प्रदर्शनीयम्।

३ मूलप्रवृत्ति-सहजक्रिययोर्भेदं सोदाहरणं निरूपय।

४ मानवानां मूलप्रवृत्तयस्तत्सम्बद्धा भावाश्च लेख्याः।

५ मानवानामन्येषां च प्राणिनां मूलप्रवृत्तिषु को भेद इति सोपपत्तिकं निरूपणीयम्।

६ मानवानां मूलप्रवृत्तिपरिवर्तनं कथं भवति। परिवर्तनस्य च मानवजीवने क उपयोगः।

७ मूलप्रवृत्तीनां दमने मार्गान्तरणे च को भेदः। मनोविकासे च तयोः क उपयोगः।

८ मूलप्रवृत्तिशोधनस्य कोऽभिप्रायः। तस्य शोधनस्य च क उपायः कश्च परिणामः।

९ मूलप्रवृत्तीनां वर्गीकरणस्य प्रकाराः प्रदर्शनीयाः।

१० बालानामिच्छापूर्तिर्हितावहा दमनं वेति सोपपत्तिकं निरूपणीयम्।

षष्ठः परिच्छेदः

# विशिष्टा मूलप्रवृत्तयः

वैयक्तिक्यो मूलप्रवृत्तयः—

पूर्वोक्तानां मूलप्रवृत्तीनां विभिन्नैर्विद्वद्भिर्विभिन्नप्रकारैर्वर्गीकरणं कृतमिति विगतपरिच्छेदे प्रतिपादितम् । एषु वर्गीकरणेषु थार्नडाइक-महोदस्य वर्गीकरणं समीचीनतरं प्रतिभाति । तेन हि सर्वा मूलप्रवृत्तयो वैयक्तिक-सामाजिकभेदेन द्विधा विभक्ताः । तत्र वैयक्तिकमूलप्रवृत्तिवर्गे जिज्ञासा, रचना विधायकता वा, सञ्चयो, युयुत्सा, पलायनं, शरणागतिश्चेति मुख्या मूलप्रवृत्तयः । सामाजिक मूलप्रवृत्तिवर्गे च परस्पृहा सामुदायिकता वा, आत्मगौरवप्रवृत्तिः, तत्पूरिका विनयप्रवृत्तिः, कामप्रवृत्तिश्च मुख्या मूलप्रवृत्तयः । अस्मिन् परिच्छेदे तासां विशिष्टानां मूलप्रवृत्तीनां वर्णनं विधीयते ।

१. जिज्ञासा—

वैयक्तिके मूलप्रवृत्तिवर्गे जिज्ञासा हि मुख्या मूलप्रवृत्तिः । सैव मानवस्य दृश्यमानाया उन्नतावस्थाया मूलम् । तदायत्तेनैव पुरुषेण विविधा वैज्ञानिका आविष्काराः कृताः । जिज्ञासैव मानवस्य ज्ञान-विज्ञानयोर्मूलम् । आध्यात्मिके क्षेत्रे, आधिभौतिके वा क्षेत्रे यत् किमपि ज्ञानं मानवैरर्जितं तत्सर्वं जिज्ञासाप्रवृत्तेरेव विलसितम् । विविधासु शिल्पक्रियासु यत् कौशलं तेन समासादितं तत्रापि जिज्ञासैव निमित्तम् । एवं मानवस्य सर्वापीयमुपलभ्यमाना समुन्नतिर्जिज्ञासामूलिकैवेति नात्र संशयलेशोऽपि सम्भाव्यते ।

इयं हि जिज्ञासाप्रवृत्तिः शैशव एव अभिव्यक्तिं लभते याव-ज्जीवनं च वर्धते । शिशवो नूतनं वस्तुजातं विलोक्य तत्प्रयोगानभिज्ञा अपि तद्ग्रहणाय प्रवर्तन्ते । गृहीत्वा च कदाचिदितस्ततः परिवर्तयन्ति, कदाचिन्मुखे निवेशयन्ति, कदाचित् प्रक्षिपन्ति पुनश्चोत्थाप्य विविध-प्रकारैस्तत्परिशीलयन्ति । सर्वोऽप्येष बालानां व्यापारस्तेषां जिज्ञासा-प्रवृत्त्यैव प्रयोजितो भवति । यथा-यथा च बालः प्रवर्धते तथा-तथा तस्य

जिज्ञासाक्षेत्रमपि विस्तीर्णं जायते । यदा स वार्तालापसमर्थो भवति तदा पित्रोः समक्षं गुरूणां वा पुरस्तात् प्रश्नोत्तररूपेण स्वजिज्ञासानिवृत्त्यर्थं प्रयतते । यदि स स्वप्रश्नानां समीचीनमुत्तरं प्राप्नोति तदा तस्य जिज्ञासाप्रवृत्तिरपि प्रवर्धते इतरथा क्षीयत एव। येषां बालानामियं जिज्ञासाप्रवृत्तिरनुदिनं स्वप्रश्नानामुत्तरानुसन्धाने समर्था भवति त एव कालेन विविधेषु ज्ञानविज्ञानक्षेत्रेषु साफल्यं ख्यातिं च लभन्ते ।

बालानां चापल्यं, वस्तूनामितस्ततः प्रक्षेपणं च प्राय उद्वेगकरं भवति। 'घटं भित्वा पटं छित्वा कृत्वा रासभरोहणम्' बाला यत् चापल्यं प्रदर्शयन्ति तद् दृष्ट्वा पितरौ गुरवश्च कदाचित् तेभ्योऽभिक्रुध्यन्ति । किन्तु तत्सर्वमपि तेषां जिज्ञासाया एव विलसितं भवति । चपला बालकाः क्षणमपि स्थिरतया नावतिष्ठन्ते सर्वदैव गतिशीला भवन्ति । इयं हि गतिशीलता तेषामभ्युदयकारिणी भवतीति न निरोद्धव्या । चपला बालाः प्रायशो बुद्धिमन्तः सफलाश्च भवन्ति ।

शिक्षायामस्या जिज्ञासाप्रवृत्तेर्महानुपयोगः । येषु बालेषु जिज्ञासा-प्रवृत्तिः प्रौढ़ा प्रबला च भवति त एव कक्षायां तीव्रतरा बुद्धिमन्तो योग्याश्च गण्यन्ते । येषां पुनरियं जिज्ञासाप्रवृत्तिर्मन्दा भवति ते कक्षायां सर्वदा हीना निकृष्टाश्च गण्यन्ते ! जिज्ञासावशादेव बाला नानाविधान् प्रश्नान् पितरौ गुरूंश्च पृच्छन्ति । गुरवः कदाचित् तेषां प्रश्नानां समीचीनमुत्तरमजानन्तस्तेभ्योऽभ्यसूयन्ति क्रुध्यन्ति च । कदाचिदसमी-चीनमेवोत्तरं ददति । तत्सर्वमपि शोभनं न भवति । क्रोधेन बालानां जिज्ञासाप्रवृत्तिस्तनुत्वमापद्यते । तच्च तेषां विकासे हानिकरं भवति । असमीचीनानामुत्तराणामपि बहुविधा दुष्परिणामा भवन्ति । अत एव बालानां समुचितविकासाय शिक्षकैस्तेषां जिज्ञासानिवृत्त्यर्थं प्रश्नानां समीचीनोत्तरप्रदाने च सर्वदा सावधानतया व्यवहर्तव्यम् ।

वैयक्तिकीषु जिज्ञासा वृत्ति-र्मुख्यतमा मता ।<br>
मानवोन्नतिमूलं सा विज्ञानादिविकासिनी ॥१॥<br>
बालकानां समे प्रश्ना जिज्ञासासम्प्रवर्तिता ।<br>
अतस्तेषां समाधानं गुरुभिः कार्यं प्रयत्नतः ॥२॥<br>
अभिक्रुध्यन्ति तेभ्यो ये समाधानं न कुर्वते ।<br>
स्वबालानां विकासे ते जायन्ते प्रतिबन्धकाः ॥३॥

## २. रचनाप्रवृत्तिर्विधायकता वा—

वैयक्तिकीषु मूलप्रवृत्तिषु रचनात्मिका प्रवृत्तिरपि मुख्या प्रवृत्तिर्गण्यते। बालानां शिक्षायां चरित्रनिर्माणे च सात्यन्तमुपयोगिनी भवति। इयं रचनात्मिका प्रवृत्तिरपि बाल्यावस्थायां तृतीये चतुर्थे वा वर्षे प्रादुर्भवति सर्वं चोत्तरजीवनमभिव्याप्नोति। यदेयं प्रवृत्तिरुत्तेजिता भवति तदा बालः किमपि कार्यं स्वहस्ताभ्यां सम्पादयितुमहर्निशं प्रयतते तत्रानन्दातिरेकं चानुभवति। न केवलं पदार्थानां रचनायामेव किन्तु ध्वंसेऽपि प्रवृत्तिरियं प्रेरयति। कदाचिद् ध्वंसमन्तरा नूतननिर्माणं न सम्भवति तत्र ध्वंसोऽपि रचनायामुपकारको भवतीति ध्वंसोऽपि रचनाप्रवृत्तेरेवाङ्गं भवति। पूर्वनिर्मितानां पदार्थानां छेदनभेदनाभ्यां बालस्तदवयवानां परिचयं प्राप्नोति तन्निर्माणे च कौशलमर्जयति। रचनात्मकैः कार्यैर्बालो न केवलं पदार्थानां परिचयं तन्निर्माणकौशलं चावाप्नोति किन्तु स्वशारीरिकमानसिकशक्तीनामपि परिचयं प्राप्नोति। ततश्चात्मविश्वासमर्जयति। पुरुषस्य रचनात्मिका प्रवृत्तिरेवात्मविश्वासस्य मूलं भवति। रचनात्मकप्रवृत्तिसम्पन्ना बाला न केवलं भौतिकपदार्थानामेव रचनायां नैपुण्यं लभन्ते किन्तु समाजस्यादर्शादिकल्पनायामपि सक्षमा भवन्तीति समाजस्य नवनिर्माणेऽपि प्रभवन्ति। इयं रचनाप्रवृत्तिरेव महतो जनान् नेतृपदं प्रापयति। इयं प्रवृत्तिः पुरुषेषु सहानुभूतिभावनामपि जनयति। यो जनः सुन्दररचनाया आनन्दमनुभवति तन्निर्माणपरिश्रमाच्च परिचितो भवति स परेषां मनोरमां रचनां कृतिं वा सहानुभूतिदृष्ट्या पश्यति न च कदापि तद्विध्वंसाय चेष्टते। रचनात्मकेषु कार्येषु व्यापृताः पुरुषाः सदैव प्रसन्ना आत्मविश्वाससम्पन्नाः सुखिनश्च भवन्ति। अत एव शिक्षकैर्बालानां रचनाप्रवृत्तिविकासे सर्वथा प्रयतितव्यम्। रचनाप्रवृत्तिप्रोत्साहनेन ते बालानां चरित्रनिर्माणे समाजनिर्माणे राष्ट्रनिर्माणे च सहायका भविष्यन्ति।

तदयमत्र संग्रहः—

> द्वितीया रचनावृत्तिः सर्वशिल्पप्रवर्तिका।
> मूलं चरित्रनिर्माणे समाजस्यापि तन्मुखात् ॥ ४ ॥
>
> छेदनं भेदनं चापि नवनिर्माणकारकम्।
> तत्र बालाः प्रवर्तन्ते प्रायशस्तत्प्रवर्तिताः ॥५॥

## ३. सञ्चयप्रवृत्तिः—

सञ्चयप्रवृत्तिरपि पुरुषस्य वैयक्तिकीषु मूलप्रवृत्तिषु मुख्या मूलप्रवृत्तिरस्ति। इयमतीव प्रबला सर्वव्यापिका च प्रवृत्तिरस्ति। येषां सविधे प्रचुरं धनं भवति तेऽपि सञ्चयप्रवृत्तिवशात्ततोऽप्यधिकं धनं कामयन्ते। इयं सञ्चयप्रवृत्तिरपि बाल्यावस्थायामेवाभिव्यक्ता भवति यावज्जीवनं चावतिष्ठते। इदं मम गृहं, इदं मदीयं पुस्तकं, इदं मदीयं धनं इत्यादिषु विविधेषु, प्रयोगेष्वनुभूयमाना ममत्वभावनापि सञ्चय-प्रवृत्तेरेव प्रभावं द्योतयति। सञ्चयप्रवृत्तिवशादेव केचिद् बाला चित्राणां, अन्ये पत्राणां, अपरे क्रीडनकानां संग्रहं कुर्वन्तो दृश्यन्ते। ब्राह्मणानां विद्यासञ्चये, क्षत्रियाणामस्त्रसंग्रहे, वैश्यानां धनोपार्जने विदुषां पुस्तक-संग्रहे, लेखकानां लेखसंग्रहे च योऽभिनिवेशो दृश्यते सोऽपि सञ्चय-प्रवृत्तेर्व्यापकतां स्थापयति।

इयं सञ्चयप्रवृत्तिः पुण्यफला अपुण्यफला चोभयथापि दृश्यते। सञ्चयप्रवृत्तिवशादेव चोराश्चौर्यकर्मणि लुण्ठकाश्च परद्रव्यापहरणे प्रवर्तन्ते। महान्तो धनपतयः श्रमिकाणां शोषणं विधाय स्वकोषं पूरयन्ति। महान्तो बलवन्तश्च देशा क्षुद्रान् पराधीनान् विधाय तेषां शोषणं कुर्वन्ति। तत्सर्वमस्याः सञ्चयप्रवृत्तेर्गर्हितमपुण्यफलं च स्वरूपम्। तत्सर्वथा परिहर्तव्यं भवति। यदि बालेषु कुमार्गगामिनी सञ्चयप्रवृत्तिरभिव्यक्ता भवेत् तर्हि शिक्षकैः सपद्येव तस्या मार्गान्तरणमवरोधो वा विधेयः। इतरथापुण्यफलेयं सञ्चयप्रवृत्तिस्तेषां जीवनमधःपतितं विधास्यति। समाजस्य च महदकल्याणं सम्पादयिष्यति।

तद्विपरीता कल्याणोदर्का पुण्यफला च सञ्चयप्रवृत्तिः सदा प्रोत्सा-हनीया। अद्यत्वे प्रायः सर्वेष्वपि विद्यालयेषु संग्रहालयानां स्थापनं क्रियते। तत्र बालानां संगृहीता स्वनिर्मिता वा पदार्थाः सञ्चीयन्ते। केचिद्बालकाः समाचारपत्रेषु प्रकाशितानां चित्राणां संग्रहं कुर्वन्ति, अन्ये विविधेषु देशेषु प्रचलितानां मुद्राणां पत्रालय-कर-पत्राणां च संग्रहं कुर्वन्ति। तत्सर्वमपि सञ्चयेप्रवृत्तेः समीचीनं स्वरूपम्। तेन तेषां भूगोलेतिहासयो-र्ज्ञानं समीचीनतरं समृद्धं च जायते अतस्तादृशी कल्याणोदर्का सञ्चय-प्रवृत्तिः सदा प्रोत्साहनीया भवति। सञ्चयप्रवृत्तिप्राबल्ये जनाः प्राय-औचित्यानौचित्यादिकं विस्मरन्ति। अनुचितैरपि मार्गैः सञ्चये प्रवर्तन्ते,

परेषामधिकारमप्यपहरन्ति चौर्यादिकमप्याचरन्ति । अतः शिक्षकैर्बालानां सञ्चयप्रवृत्तेर्निरीक्षणं सावधानतया कर्तव्यम् । कुमार्गगामिनी च सा मार्गान्तरणविधिना शोधविधिनावरोधविधिना वा सन्मार्गगामिनी विधेया भवति ।

तदयमत्र संग्रहः—

सञ्चयाख्या परावृत्तिः पुण्यापुण्यफला द्विधा ।
आद्या बालेषु सम्पोष्या न परा लोकहानिदा ॥६॥
धनिनस्तत्प्रभावेण न सन्तुष्टा विभूतिषु ।
राजानश्चैव देशाश्च ततः साम्राज्यलोलुपाः ॥७॥

## ४- युयुत्सा—

वैयक्तिकीषु मूलप्रवृत्तिषु युयुत्सात्मिका चतुर्थी मुख्या मूलप्रवृत्तिरस्ति । इयं युयुत्साप्रवृत्तिर्युद्धप्रवृत्तिर्वा सर्वेष्वपि प्राणिषूपलभ्यते । यदेयं प्रवृत्तिरुत्तेजिता भवति तदा क्रोधावेशस्यानुभूति-र्भवति । क्रोधावेशो हि जन्तुष्वभिनवं शक्तिसञ्चारं करोति येन स युद्धे सम्भाव्यमानान् क्लेशान् सङ्कटांश्चाविगणय्य जीवननिरपेक्ष इव युद्धे संप्रवर्तते । संग्रामेषु सैनिकानां, मल्लयुद्धेषु मल्लानां पादकन्दुकादिक्रीडाप्रतियोगितासु च बालानां हस्तौ पादौ वा भग्नौ अवयवान्तरं विक्षतं वा जायेत नाम किन्तु तेऽप्रतिहतव्यापाराः स्वकार्ये प्रवर्तन्ते । इयं प्रवृत्तिर्विविधेषु रूपेष्वभिव्यक्तिं लभते । यदा कश्चित् समकक्षो जनः कस्याप्यपमानादिकं करोति तदा स तेन सह योद्धुं प्रवर्तते । यदा कश्चित् बलवत्तरो जनोऽपमानादिकं करोति तदा तत्प्रतिकाराक्षमो जनस्तस्मै गालिप्रदानं करोति, अभ्यसूयत्याक्रोशति च । यदा कश्चित् दुर्बलो जनोऽपराधं करोति तदा तं ताडयति, दण्डयति च । सर्वमपीदं युयुत्सात्मिकाया मूलप्रवृत्ते-र्विलसितम् । यदि नामोत्तेजितापीयं द्वन्द्वप्रवृत्तिर्बहि-र्गमनाय समुचितमवसरं नाप्नोति तदा मानसग्रन्थयो नानाविधाश्च मानसा विकाराः समुत्पद्यन्ते । तद्वशाच्च पुरुष आत्मनैव सह मानसेन व्यापारेण योद्धुं प्रवर्तते आत्मभर्त्सनां च करोति ।

द्वन्द्वप्रवृत्तिरियं न सर्वथा हेया किन्तूपादेयापि भवति । कस्मिंश्चिदपि साहसिके कर्मणि प्रवर्तयितुं द्वन्द्वप्रवृत्तेरुत्तेजनमावश्यकं भवति । अत एव समुपस्थितेषु सांग्रामिकेषु प्रसङ्गेषु रणवाद्यादिप्रयोगात् सैनिका-

नामभियं द्वन्द्वप्रवृत्ति-र्विशेषरूपेण समुत्तेजिता क्रियते । अस्याः प्रवृत्ते-र्दमनं कातरतां भीरुत्वं च जनयति । ये बाला स्वसहवासिभिः बालकैः सह कलहायन्ते तदर्थं च दण्डं प्राप्नुवन्ति तेषां द्वन्द्वप्रवृत्ते र्दमनं भवति । ते चाग्रे गत्वा भीरवः कापुरुषाश्च जायन्ते । ये बालाः पुनः युद्धान्न पलायन्तेऽपराधस्य च प्रतिकाराय सदा सन्नद्धा भवन्ति त एवाग्रे गत्वा विकटासु परिस्थितिषु साहसमवलम्य सङ्कटानां निवारणं, कल्याणानां च सम्पादनं कुर्वन्ति । अत एव बालानां द्वन्द्वप्रवृत्तेर्युयुत्साया वा सर्वथा दमनमेव न विधेयं किन्तु समुचितेष्ववसरेषु तस्या उत्तेजनमपि कर्तव्यम् । किन्तु मर्यादातिक्रमणं न भवेदित्यत्र सावधानै-र्भाव्यं शिक्षकैः। 'अति सर्वत्र वर्जयेत्' इति नीतिवाक्यमनुसृत्य समुचितेष्ववसरेषु समुचितायां मात्रायां द्वन्द्वप्रवृत्तेरुत्तेजनमपि कर्तव्यमेव ।

तदयमत्र संग्रहः—

युयुत्साख्या प्रवृत्तिश्च दुर्बले प्रबले समा ।
क्षणमन्धं जनं धत्ते न हेया दुष्टशासने ॥ ८ ॥
साहसिकानि कर्माणि सर्वाण्यस्याः प्रभावतः ।
सम्भवन्ति ततो लोके वृत्तिरेषा प्रशस्यते ॥ ६ ॥

## ५. पलायनप्रवृत्तिः—

युयुत्साया द्वन्द्वप्रवृत्ते र्वा विपरीता पलायनप्रवृत्तिः । क्रोधात्मको भावो युयुत्सां समुद्भावयति । तद्विपरीतो भयात्मको भावः पलायनप्रवृत्तेः प्रयोजको भवति । पलायनप्रवृत्तिमन्तो जनाः किमपि साहसिकं कार्यं कर्तुं समर्था न भवन्ति । स्वकीयं सामान्यमुत्तरदायित्वमपि सम्यङ् निर्वोढुं न पारयन्ति । भारतीये समाजे द्वन्द्वप्रवृत्तेः प्रायशो दमनं विधीयते । तस्मादत्रेयं पलायनप्रवृत्तिः प्राबल्यं प्राप्नोति । अहिंसावादः पलायनप्रवृत्ते रेव परिणामः ।

द्वन्द्वप्रवृत्तौ सर्वदा क्रोध एव, पलायनप्रवृत्तौ च सदा भयमेव मूलमित्यत्र केषाञ्चिद्विमतिरपि सम्भवति । अहिंसात्मकसंग्रामनाम्ना नूतनः संग्रामभेदोऽस्मिन् युग आविष्कृतोऽस्ति । किन्तु संग्रामश्च स्यादहिंसात्मकश्च स्यादित्यसम्भाव्यमेव । आत्मोदयः परज्यानिरिति द्वयं सांग्रामिकमुद्देश्यम् । तच्चाहिंसया न सम्भवति । परज्यानिर्हिंसैव — तस्मादहिंसात्मकः संग्रामोऽनुपपन्न एव । शस्त्रेण शस्त्रप्रतिकारं कर्तुमक्षमा

युद्धात् पलायन्त आत्मसमर्पणं वा कुर्वन्ति । आत्मसमर्पणमपि पलायनस्यैव रूपान्तरमिति आत्मसमर्पणात्मकोऽयमहिंसात्मकः संग्रामः पलायनप्रवृत्तेरेव परिणामः । तत्र संग्रामशब्दस्यायोजनं पलायनप्रवृत्तेर्गोपनायैव क्रियते । सविनयावज्ञायां कारावासस्यैव भयं, किन्तु जीवनसङ्कटस्यावसरो नास्तीति निश्चित्यैव जनास्तत्र प्रवर्तन्ते । प्रतिपक्षिणो नृशंसत्वे स्थापितेऽपि तत्रात्मसमर्पणे मृत्योर्भयं नास्तीति कृत्वैव पलायनप्रवृत्ता जना अपि तत्रात्मसमर्पणं कुर्वन्ति । संग्रामे वा स्यात् सविनयावज्ञायां वा स्यात् आत्मसमर्पणं सर्वत्र पलायनप्रवृत्तेरेव परिणामः ।

भयात्मको भावः पलायनप्रवृत्तेर्मूलमिति पूर्वमुक्तम् । न केवलं युद्धादेव पलायनं भवति किन्तु भयोत्पत्तेर्विविधानि कारणानि पलायनजनकानि । परिस्थितेराकस्मिकं परिवर्तनमपि भयप्रदं पलायनजनकं च भवति । वर्षर्तौ मेघानां भीषणं गर्जनं, रात्रौ भीषणशब्दानां श्रवणं, चोरादीनां दर्शनं, सर्वमपि भयप्रदं पलायनजनकं च भवति बालका मेघगर्जनं निशम्य गृहं प्रविशन्ति । मातुः समीपे सुप्ता बाला मेघगर्जनं श्रुत्वा सभयं मातरमालिङ्गन्ति । सर्वाण्यपीमानि पलायनप्रवृत्तेर्विविधानि रूपाणि सन्ति ।

शिक्षायां भयस्यापि समुचित उपयोगः सम्भवति । निर्भया बालाः समुद्दण्डा उच्छृङ्खलाश्च जायन्ते अतस्तत्र विनयाधानाय भयस्योपयोगो भवति । स च समीचीन एव । किन्तु तस्याप्यतिप्रयोगस्तु वर्ज्य एव । प्रतिक्षणं भयप्रदर्शने बाला गुरुभ्य उद्विजन्ते तेषां विकासे च बाधा जायते । अतो दण्डभयं मात्रयैव प्रयोज्यमतिमात्रा तु परित्यक्तव्यैव । दण्डभयापेक्षया तस्या रूपान्तरणमधिकं फलप्रदं भवति । अनुचितकार्याणामनुष्ठानेन मद्विषये गुरूणां निकृष्टत्वबुद्धिर्भविष्यति इति विचार्य बाला दुष्कर्मभ्यो निवर्तन्ते । बालानामियं भावना दण्डभयस्य रूपान्तरणस्वरूपा दण्डापेक्षयापि चाधिकं लाभप्रदा भवतीति बालेषु तदुत्पादनाय प्रयत्नो विधेयः ।

तदयमत्र संग्रहः—

विपरीतं युयुत्सायाः सदा ह्येयं पलायनम् ।
रूपं तस्यैव चाहिंसा न संग्रामोऽप्यहिंसकः ॥१०॥
भयमस्या मतं मूलं उद्धतास्तद्विना नराः ।
उपयुक्ता ततो वृत्ति-रेषा लोकानुशासने ॥११॥

### ६. शरणागतिः—

पलायनप्रवृत्तिसम्बद्धा शरणागतेर्मूलप्रवृत्तिः। युद्धे यदा सैनिकः साम्मुख्यं कर्तुमात्मानमसमर्थमवलोकयति तदा युद्धादात्मरक्षार्थं पलायते। पलायितोऽप्यात्मत्राणमपश्यन्नात्मसमर्पणं करोति। तदिदमात्मसमर्पणं शरणागतेरेव स्वरूपम्।

पलायनेन सम्बद्धा वृत्तिरन्या प्रपन्नता[1]।
आत्मरक्षार्थमेवात्र कान्दिशीकः[2] प्रवर्तते ॥१२॥
वैयक्तिकीषु वृत्तिषु मुख्या एता प्रवृत्तयः।
मुख्यतो व्यक्तिसम्बद्धा ख्यातास्तन्नामतस्ततः ॥१३॥

## सामाजिक्यो मूलप्रवृत्तयः—

इमास्तावन्मुख्या वैयक्तिक्यो मूलप्रवृत्तयः संक्षेपेण दर्शिताः। इतः परं काश्चन मुख्याः सामाजिक्यो मूलप्रवृत्तयः प्रदर्श्यन्ते। या मूलप्रवृत्तयः सजातीयानां प्राणिनां पारस्परिकेण व्यवहारेणात्मलाभं कुर्वन्ति ताः सामाजिक्यो मूलप्रवृत्तय उच्यन्ते। यथा सामुदायिकता परस्पृहा वा, आत्मख्यापनं, विनयः, कामश्च। इमाः प्रवृत्तयो व्यक्त्यन्तरसम्बन्धमन्तरा नोद्भवन्ति। व्यक्त्यन्तरसम्पर्कादेव तत्सम्बद्धं कार्यं दृश्यत इति ताः सामाजिक्यो मूलप्रवृत्तय उच्यन्ते। सामाजिकासामाजिकभेदेन मूलप्रवृत्तीनां योऽयं द्विविधो विभागः कृतः तेनेमाः प्रवृत्तयः सर्वथा भिन्नाः परस्परमसम्बद्धाश्चेति नावगन्तव्यम्। उभयत्रापि साङ्कर्यं सम्भाव्यते। तथाहि सञ्चयात्मिका मूलप्रवृत्ति–वैयक्तिकीषु मूलप्रवृत्तिषु परिगणितास्ति किन्तु तत्रापि व्यक्त्यन्तरसम्पर्को भवत्येव। एवं रचनात्मिका मूलप्रवृत्तिरपि वैयक्तीकीषु मूलप्रवृत्तिषु गण्यते किन्तु तत्रापि व्यक्त्यन्तरसम्पर्कसाध्यस्वरूप सामाजिकमूलप्रवृत्तिलक्षणं सम्भवत्येव। तस्मादुभयत्राप्युभयलक्षणसाङ्कर्यसम्भवेऽपि 'वैशेष्यात् तद्वादस्तद्वादः' इति न्यायात् सामाजिक–वैयक्तिकमूलप्रवृत्तीनामयं विभागो द्रष्टव्यः।

### ७. सामुदायिकता—

सामाजिकीषु मूलप्रवृत्तिषु सामुदायिकता मुख्यतमा मूलप्रवृत्तिः। सैव क्वचित् परस्पृहा पदेनापि भण्यते। सामुदायिकताख्येयं मूलप्रवृत्तिरेव

---

१ प्रपन्नता शरणागतिः। २ कान्दिशीको भयद्रुतः, पलायित इत्यर्थः।

मानवसमाजस्य मूलम् । यथान्ये जन्तवो यूथचारिण एकाकितया न निवसन्ति एवं मानवोऽपि सदैव सजातीयैः सह निवसति व्यवहरति च । येऽप्येकान्तवासाय स्पृहयन्ति तेषामपि पृथग्भूत एकः समाजः । परिवारो हि समाजस्य प्रथममङ्गम् । सामुदायिकताप्रवृत्तेश्च तत्र प्रथमाभिव्यक्तिः । ततो ग्रामनगरादीनां विकासः । राज्यं तत्सम्बद्धा नियमाः विधानादिकं च सर्वमपि सामुदायिकताप्रवृत्तेरेव विलसितम् । भाषात्मकमात्माभिव्यक्तिसाधनमपि तस्या एव प्रवृत्तेः प्रभावाद्विकसितम् । धर्मो विज्ञानं व्यापारादयश्च सामुदायिकताप्रवृत्तिमन्तरा नात्मलाभाय समर्थाः । मैगडूगल-महोदयेन सामुदायिकताप्रवृत्तेर्मुख्यास्त्रयो लाभाः प्रदर्शिताः ।

१—समुदायरूपेण परस्परं सङ्गठिताः प्राणिनः शत्रुसकाशादात्मनस्त्राणं शत्रूणां विनाशं च कर्तुं समर्था भवन्ति ।

२—परम्परागतज्ञानात् सजातीयानां विशिष्टव्यक्तीनामनुभवात् परस्परसम्पर्काच्च सर्वेऽपि सजातीयाः प्राणिनो लाभान्विता भवन्ति ।

३—पारस्परिकेण सहयोगेन च सुखं जीवनं यापयितुं प्रभवन्ति ।

सर्वेऽपि प्राणिनः प्रारम्भादेव सङ्गतिप्रियाः भवन्ति । सर्वेषां प्राणिनां शिशवः प्रतिक्षणं मातरमनुवर्तन्ते । मानवशिशुरपि मातरं विना स्थातुं न शक्नोति । स्वल्पायापि कालाय यदि स एकान्ते स्थाप्यते तदा स सपद्येव रोदनमाक्रोशं च प्रारभते । सजातीयसम्पर्कादेव शान्तिं धैर्यं चाप्नोति । पञ्चमवर्षादारभ्य बालकेष्वियं सामुदायिकताप्रवृत्तिरतिशयमवाप्नोति । सजातीयैः, तत्रापि च सवयस्कैः सममेव तेषां सर्वाणि कार्याणि भवन्ति । सवयस्कानां सङ्गतिरेव प्रमोदावहा भवति । सवयस्कैः सह क्रीडन्तस्ते सर्वमपि विस्मरन्ति । नाहारमपि कामयन्ते, न वाध्ययनाय स्पृहयन्ति । किशोरावस्थायामियं सामुदायिकी भावना पराकाष्ठामधिगच्छति तदा सवयस्कानां समुदायबलमेव बालानां नियामकं भवति । समुदायसम्मतिरेव तेषां सम्मतिः । तदर्थं ते पितरावप्यवगणयन्ति, गुरूनपि नाद्रियन्ते । स्ववर्गस्य निश्चया अनुल्लङ्घनीयाः सर्वथा परिपालनीयाश्च भवन्ति तेषाम् ।

ये बालका एकान्तप्रिया भवन्ति सवयस्कानां सम्पर्काच्चोद्विजन्ते ते शरीरेण स्वस्था अपि मनसा अस्वस्था भवन्ति । हीनत्वभावना अहम्मन्यभावना वा तेषां समाजसम्पर्के बाधिका भवति । उभयविधापीयं भावना मानसमस्वास्थ्यं द्योतयति । सवयस्कानां सम्पर्कात् समाज-

सम्पर्कादुद्विजतां बालानामियं भावना तेषामाचारे, शारीरे स्वास्थ्ये ऽपि च प्रतिकूलं प्रभावं जनयति । अतः शिक्षकैस्तथा प्रयतितव्यं यथा ते जनसम्पर्कात् सर्वथा परिवर्जिता न भवेयुः । सामाजिकसम्पर्कस्य शिक्षायां, जीवननिर्माणे च महानुपयोगः । तत उद्विजतां पलायमानानां च जीवनमपूर्णमेव भवति । न ते लोककल्याणाय प्रभवन्ति नाप्यात्मकल्याणं साधयितुं क्षमन्ते । अतः शिक्षकैस्तादृशः प्रबन्धो विधेयः यथा सर्वेऽपि बालकाः सामाजिकेषु कार्येषु सोत्साहं सम्मिलिता भवेयुः । स्वयमेव च सामाजिककार्याणां सञ्चालनं कुर्युः । तदर्थं सर्वत्र विद्यापरिषदादिकार्यं क्रीडापरिषदादिसञ्चालनं च छात्राणां हस्ते समर्पणीयम् । आश्रमव्यवस्थापि तेषामधिकारे देया । गुरुवस्तेषां पथप्रदर्शनमात्रं कुर्युः । अन्यत् सर्वमपि कार्यं व्यावहारिकरूपेण छात्रायत्तमेव विधेयम् । तेन बाल्यावस्थायामेव सर्वविधस्य व्यवहारस्य प्रबन्धस्य चानुभवमुपार्ज्य प्राप्ते काले ते राष्ट्रस्य कार्यमपि साधुतया सञ्चालयितुं समर्था भविष्यन्ति ।

प्राणी सामाजिको यस्मात्, मानवो न पृथग्वसेत् ।
सामुदायिकता तस्मात् वृत्तिः सामाजिकी मता ॥१४॥
बालकेषु सदा वृत्तिः सम्पोष्या सा प्रयत्नतः ।
तद्विहीनो जनोऽशक्तः स्व-परोन्नति-साधने ॥१५॥

## ८. आत्मख्यापनम्—

आत्मख्यापनमपि मानवानां सामाजिकीषु मूलप्रवृत्तिषु गण्यते । 'एकोऽहं बहु स्याम्' इत्यादिबलाद्यदा ब्रह्मण इयं सृष्टिरप्यात्मख्यापनार्था तदा प्राणिनां आत्मख्यापनार्था प्रवृत्तिरिति नातिचित्रम् । स्वकीये वर्गे मदीयं विशिष्टं स्थानं भवेत्, सर्वेऽपि मे सहवासिनो मामादरदृष्ट्या पश्येयुः, मम विशिष्टायां योग्यतायां विश्वसेयुः प्रशंसेयुश्च तामिति सर्वेषां प्राणिनां मानवानां च भवति नैसर्गिकी कामना । आत्मनः प्रशंसां श्रुत्वा त आनन्दमनुभवन्ति, आत्मनः सम्मानाय स्पृहयन्ति । इदं सर्वमस्या मूलप्रवृत्तेर्विलसितम् । इयं भावना सामाजिके वैयक्तिके च जीवनेऽत्यन्तमुपयोगिनी । तदायत्तो जनः प्रायस्तादृशीं योग्यतामुपार्जयितुं यतते यया स्व-

सजातीयेषु सम्मानं कीर्तिं च प्राप्नोतु। तदर्थमेव च बहूनि धर्मकार्याणि करोति। मन्दिराणां निर्माणं, विद्यालयानां स्थापनं, दीनानां साहाय्यं, दानं, परित्राणं, परिचरणं च सर्वमपि तदायत्तमेव भवति। एवमियं प्रवृत्तिः बहुविधं समाजस्योपकारं साधयति।

किन्तु न केवलं कल्याणवहैवेयं प्रवृत्तिः। प्रवृत्यन्तरवत् पापवहापीयं प्रवृत्तिः। समाजिके क्षेत्रे योऽयं सङ्घर्षः, प्रतिस्पर्धा, वैमनस्यं वा दृश्यते तत्रेयं प्रवृत्तिरेवापराध्यति। राजनीतिक्षेत्रे, समाजिके क्षेत्रे, व्यापारक्षेत्रे किम्बहुना धार्मिकक्षेत्रेऽपि बहुविधः सङ्घर्षो वैमनस्यं चाहर्निशमवलोक्यते। तत्सर्वमस्याः प्रवृत्तेरेव प्रभावाद् भवति। राजनीतिज्ञा बहुधा स्वराष्ट्रं भीषणेषु युद्धेषु प्रवर्तयन्ति, देशान्तरं विजित्यात्मसात् कुर्वन्ति, तस्य शोषणे च प्रवर्तन्ते। तत्राप्येषैव प्रवृत्तिर्मूलम्। एतदायत्तः पुरुषः बहुधा स्व-सामर्थ्यातिक्रमेणापि केवलं प्रदर्शनार्थं बहूनि दुष्कराणि कार्याणि करोति परिणामे च दुःखमनुभवति। मध्यवित्ता गृहस्थाः परिवारजनानां समुचितां भोजनव्यवस्थां कर्तुमपारयन्तोऽपि बहुव्ययसाध्यानि वस्त्राणि धारयित्वा बहिश्चरन्ति। इदमकल्याणकरमस्याः प्रवृत्तेः स्वरूपम्।

शिक्षायां जीवननिर्माणे च बालानामत्यन्तमुपयोगिनीयं प्रवृत्तिः। समुचितेन मार्गेण प्रवहन्ती सा सर्वदैव समुत्तेजनार्हा भवति। यदि कश्चिद्बालो विद्योपार्जने स्पर्धते, क्रीडासु प्राथम्यं प्राप्तुं प्रयतते, विनयव्यवहारे,धर्माचरणे वा नेतृत्वलाभाय स्पृहयति, सा सर्वा समुचितैवात्मख्यापनार्था प्रवृत्तिः शिक्षकैरनुमोदनीया समर्थनीया च भवति। किन्तु यदि तत्परवशो बालकः परेभ्यो द्रुह्यति ईर्ष्यापरवशश्च भवति तदा तस्याः प्रवृत्तेर्दमनं मार्गान्तरणं वा अवश्यं विधेयम्। आत्मप्रदर्शनप्रवृत्तेर्दमनं प्रायो बालेषूद्धततां जनयति। हतोत्साहो वा बालः प्रतिहतप्रसरो न काम्प्युन्नतिं कर्तुं प्रभवति। अतो मार्गान्तरणमेवास्याः प्रवृत्तेः श्रेयस्करं भवति। बालकेषु सामाजिकभावनां प्रोत्साह्य सामाजिकेषु कार्येष्वस्याः प्रवृत्तेर्मार्गान्तरणं बालानां समाजस्य च कृते हितावहं भवति।

आत्मख्यापन-वृत्त्यैव जनाः सत्कर्म-संरताः ।
ततोलोकस्य कल्याणे वृत्तिरेषा प्रशस्यते ॥१६॥
किन्तु साम्राज्यवादोऽपि मतस्तन्मूलको यतः ।
ततो लोकस्य विद्वेषे ऽप्येषा मूलं न संशयः ॥१७॥

## ६ विनयप्रवृत्तिः—

विनयप्रवृत्तिर्हि आत्मख्यापनप्रवृत्तेः परिपूरिका भवति । तदाविष्टो जनः पूज्यान् प्रति आदरं सम्मानं च प्रदर्शयति, तेषामाज्ञापालनप्रवणश्च भवति । इयमेव प्रवृत्तिः समाजेऽनुशासनं स्थापयति । यथा समाजस्य नेतृणां कृते आत्मख्यापनार्था प्रवृत्तिरपरिहार्या एवं तदनुयायिनां कृते विनयप्रवृत्तिरपरिहार्या भवति । विनयप्रवृत्तिहीनेऽनुयायिवर्गे नानुशासनमवस्थाप्यते नेतृत्वं च वन्ध्यप्रसवं जायते ।

इयं विनयप्रवृत्तिः शिक्षायामत्यन्तमुपयोगिनी भवति । विनयप्रवृत्तिवशादेव बालकाः शिक्षकाणां वचनं विश्वसन्ति परिपालयन्ति च सर्वात्मना । किन्तु बालानां विनयप्रवृत्तिविनियोगे शिक्षकैः सावधानैर्भाव्यम् । स्वाधिकारवशादेव शिक्षकाः बालानामनुकरणीया भवन्ति । विनयशीला बालकाः शिक्षकाणामाज्ञापालनपरायणास्तदनुकरणप्रवणाश्च भवन्तीति कदाप्यनुचिता आज्ञा न देया । नापि तेषां पुरस्तात् किमप्यनुचितमाचरणं विधेयम् । 'अतिपरिचयादवज्ञा' इति वृद्धवाक्यमनुसृत्य शिक्षकाणां बालैः सह मर्यादित एव संसर्गो हितावह इति न तत्रात्यन्तं संसृज्येत शिक्षकः । बालानां सर्वमपि व्यवहारजातं शिक्षकैः सावधानतया द्रष्टव्यं ज्ञातव्यं च । किन्तु तदग्रे स्वपरिचयदानाभिनिवेशो न कर्तव्यः । शिक्षकाणां स्वस्थं सुन्दरं च शरीरं, गम्भीरा वाणी, आत्मसंयमः, आत्मविश्वासश्च तत्र बालानां श्रद्धामुत्पादयति । किन्तु ये शिक्षकास्तेषामग्रे आत्मश्लाघां कुर्वन्ति परान् निन्दन्ति वा ते बालानां श्रद्धाभाजनानि न भवन्ति ।

केचन शिक्षका दण्डविधिना बालकेष्वात्मगौरवं स्थापयितुं प्रयतन्ते । ते कदाचित् कक्षासु तारस्वरेणाक्रोशं कुर्वन्ति । किन्तु तेन मार्गेणानुशासनस्थापने समर्था न भवन्ति । तेन मार्गेण बालेषूद्दण्डता, तद्विषयेऽनादरभावश्च समुत्पद्यते ! शिक्षकाणां न्यूनतां बालाः सपद्येव

परिलक्षयन्ति । येषां शिक्षकाणां स्वविषयेऽधिकारः सम्यग्ज्ञानं च भवति, पाठं सम्यक्तया विचार्य पाठयन्ति, अध्यापनशैली सुबोधा समीचीना च भवति, तेषां विषये छात्रेषु स्वयमेव श्रद्धा समुत्पद्यते । बालानां विनयप्रवृत्तिं स्वीयां च योग्यतां समाश्रित्यैव शिक्षका बालानां शिक्षणे चरित्रनिर्माणे च समर्था भवन्ति । तस्मादुभयत्रापि शिक्षकैः सावधानतया व्यवहर्तव्यम् ।

अन्या विनयवृत्तिस्तु आत्मख्यापन-पूरिका ।
बालकेषूपयुक्ता सा गुरौ चादम्भ-रूपिणी ॥१८॥

## १० कामप्रवृत्तिः—

सामाजिकीषु मूलप्रवृत्तिषु कामप्रवृत्तिर्हि प्रधानतमा प्रबलतमा च प्रवृत्तिरस्ति । फ्रायडमहोदयानां मते सैव सर्वविधस्य व्यवहारस्य मूलम् । स्तन्धयस्य बालस्य स्तनपानं अंगुष्ठचूषणं वापि तन्मते कामवृत्तेरेव स्वरूपम् । किन्तु वस्तुतः किशोरावस्थायामेव कामप्रवृत्तेर्विकासो भवति । इयमवस्था शीतप्रधानेषु देशेषु विलम्बादुष्णप्रधानेषु च देशेषु तदपेक्षया शीघ्रमायाति । कन्यासु शीघ्रतरं बालकेषु च तदपेक्षया विलम्बात् समायाति । आस्ट्रियादेशवासिना फ्रायडमहोदयेन कामप्रवृत्तिविषये नूतनाः सिद्धान्ताः स्थापिताः सन्ति । तदनुसारं स्तनन्धयो बालोऽपि स्तनपाने तमेव रसमनुभवति यं हि युवानः कामवासनायास्तृप्तिकालेऽनुभवन्ति । एवं फ्रायड-मते शैशव एव कामवासनाविर्भवति किन्तु तदनन्तरं कञ्चित्कालं तिरोहिता जायते । ततश्च किशोरावस्थायां पुनराविर्भवति । फ्रायड-महोदयेन कामप्रवृत्तेस्तिस्रः कक्षा निर्धारिताः सन्ति । प्रथमकक्षायां बाला आत्मानमेव स्निह्यन्ति । स्वीयेषु शरीरेष्वेव तेषामभिरुचिर्भवति । तस्यैव परिष्कारे सज्जायां च व्यापृता भवन्ति । स्वाङ्गक्रियास्वेव च सुखमनुभवन्ति । द्वितीयकक्षायां सलिङ्गैः सह स्नेहो भवति । बालिका समानलिङ्गां बालिकां स्निह्यति बालकाश्च सलिङ्गान् बालकान् स्निह्यन्ति । तृतीयकक्षायामयं स्नेहसम्बन्धो भिन्नलिङ्गविषयकः सञ्जायते । तदा कन्या भिन्नलिङ्गं पुरुषं कामयते । पुरुषश्च भिन्नलिङ्गां कन्यां कामयते । इयं तृतीया कक्षा किशोरावस्थायामाविर्भवति ।

कामप्रवृत्तिर्हि मानवस्य प्रबलतमा दुर्जया च प्रवृत्तिरस्ति । हस्तमैथुनं सलिङ्गव्यभिचारो विलिङ्गव्यभिचारश्चेति त्रयं तस्यास्तृप्तिसाधनम् । विधिवद्विवाहितयोर्दम्पत्योर्यौनः सम्बन्धः शास्त्रलोकाभ्यामनुमोदितत्वान्नियमो न व्यभिचारः । तद्व्यतिरिक्तानां यौनः सम्बन्धः सलिङ्गैः सह भवेत् भिन्नलिङ्गैः सह वा भवेत् स सर्वोऽपि लोकशास्त्राभ्यां विवर्जित इति व्यभिचारपदवाच्यो भवति । तीव्रायां कामोत्तेजनायां सञ्जातायां त्रिविधेषु पूर्वोक्तेषु साधनेषु यदेव सुलभं भवति तदेवावलम्ब्य जनः स्ववासनातृप्तिं करोति । विभिन्नलिङ्गयोः सम्बन्धः सुलभश्चेत् प्रथमं स एवावलम्ब्यते । यतस्तत्र विशिष्टा तृप्तिर्विशिष्टश्च प्रमोदोऽनुभूयते । तदभावे सलिङ्गव्यभिचारमवलम्बते । सलिङ्गव्यभिचारस्यापि दुर्लभत्वे हस्तमैथुनं समाश्रयते । हस्तमैथुनस्य सलिङ्गव्यभिचारस्य च परिज्ञानं प्रायः सवयस्कानां सम्पर्काद् भवति । हस्तमैथुनमन्यानपेक्षं स्वायत्तं चेति सर्वदा सुलभमतस्तत्र प्रचुरा प्रवृत्ति-र्लोकस्य । समुपजातायां कामोत्तेजनायां कण्डूयादाविव हस्तः स्वत एव इन्द्रियाभिमुखमुपसर्पति । तन्निवृत्त्यर्थमिन्द्रियस्पर्शः, तन्मर्दनं, परिचालनादिकं वा करोति । तत्र सुखमनुभवन्तो बालाः शिक्षणमन्तरापि हस्तमैथुने परिचिता अभ्यस्ताश्च जायन्ते । पुनश्च सवयस्कानां सम्पर्कात् सम्प्रवर्धते, सलिङ्गव्यभिचारस्य चापि परिज्ञानमभ्यासश्च प्रवर्तते । विदेशेषु सहशिक्षायाः प्राचुर्यात् तत्र विभिन्नलिङ्गयोः सम्पर्कः सुलभो भवतीति तत्र विलिङ्गव्यभिचारोऽपि प्राचुर्येण प्रचलति । भारते पुनः भिन्नलिङ्गयोः सम्पर्कस्तथा सुलभो न भवतीति सलिङ्गव्यभिचारस्यात्र प्राचुर्यम् । हस्तमैथुनस्यानन्यापेक्षत्वात् स्वायत्तत्वात् स्वाभाविकत्वाच्च कामवासनातृप्त्यर्थं तस्य सर्वत्रोपादानं विधीयते । सलिङ्गविलिङ्गव्यभिचारौ देशकालापेक्षिणौ सदा सर्वत्र सुलभौ सुकरौ च न भवत इति तदभ्यस्तानामपि तत्प्रयोगावसराणां स्वल्पत्वात् ताभ्यां स्वल्पा हानिर्जायते । हस्तमैथुनं पुनः स्वायत्तं प्रतिदिनं बहुवारमपि सुकरमिति तदभ्यस्तानां प्रचुरा हानिः । ततः कामवासनातृप्तिसाधनेषु हस्तमैथुनं निकृष्टतमं अत्यन्तं हानिकारं च भवति ।

पुरुषाणां शरीरे वीर्यं स्त्रीणां च देहे रजः सन्तानोत्पादनार्थं सृष्टिसञ्चालनार्थं च विधिना विरचितम् । तयोः संयोगसाधनं दम्पत्योर्मैथुनं, तत्र प्रवृत्त्यर्थं च कामवासना उत्पादिता । समुचिते काले यूनो-

दम्पत्योर्मैथुनं सफलं सन्तानोत्पत्तिकरं चेति लोकशास्त्राभ्यामनुमोदितं प्रशस्तं च। दम्पत्योरपि मैथुनेन शारीरिकी क्षतिर्जायते किन्तु सा सन्तानोत्पत्तिकारिणीति महते फलाय कल्पयिष्यमाणा प्रशस्यते। तद्भिन्नन्तु सर्वमपि मैथुनं निष्फलत्वात् शरीरक्षयकारित्वाच्च निन्द्यते। वीर्यं हि रक्ततोऽप्यधिकं महत्त्वपूर्णं शरीरसन्धारकं तत्त्वं विद्यते। शारीरिकमस्माकं बलं, ओजः, कान्तिः, दीप्तिः, सौन्दर्यं, पराक्रमः, कार्यक्षमता, बुद्धिः, प्रतिभादयः सर्वेऽपि गुणाः वीर्यमात्राश्रिता भवन्ति। येषां शरीरे वीर्यं सुरक्षितं भवति तेषु सर्वेऽप्येते गुणाः सुलभा भवन्ति। तेषां शरीरं बलिष्ठं सुन्दरं कान्तियुक्तं च भवति। तेषां बुद्धिस्तीक्ष्णा, सूक्ष्मग्राहिणी, निर्मला च भवति। तेषां मनः प्रसन्नं, स्फूर्तियुक्तं च भवति। ये पुनः वीर्यस्य महत्वमजानन्तो वीर्यरक्षां न कुर्वन्ति प्रत्यहं हस्तमैथुनेन सलिङ्गमैथुनेन विलिङ्गमैथुनेन वात्यर्थं प्रवाहयन्ति तेषां शरीरं, क्षीणवीर्यं, दुर्बलं, कान्तिहीनं, कुत्सितं च जायते। कपोलावन्तर्लीनावन्योन्यं स्पृशतः। अक्षिणी दुर्बले न समीपस्थमपि वस्तु द्रष्टुं शक्नुतः। यौवनेऽपि ते हतवीर्याः किमपि श्रमसाध्यं कार्यं कर्तुं न प्रभवन्ति। अद्यत्वे बहूनां यूनां या तादृशी शारीरिकी मानसी वा दुरवस्था दृश्यते! नूनं तत्र तेषामतिमैथुनमेवापराध्यति। अतो ये जनाः स्वकीयं शारीरिकं मानसं च स्वास्थ्यं कामयन्ते, वाह्यं सौन्दर्यमान्तरं चाह्लादं वाञ्छन्ति, ये बुद्धिं स्मृतिं मेधां बलमोजः पराक्रमं च इच्छन्ति तैर्वीर्यरक्षायां सर्वथा प्रयतितव्यम्। 'मरणं बिन्दुपातेन जीवनं बिन्दुधारणात्' इत्यभियुक्तोक्तेर्वीर्यस्य बिन्दुमात्रस्यापि पतनं शरीरक्षयकरत्वात् मरणसदृशं तद्रक्षणं चायुष्करत्वात् बलबुद्ध्यादिहेतुत्वाच्च जीवनमुच्यते।

हस्तमैथुनेन सलिङ्गविलिङ्गमैथुनाभ्यां वा यदा कामवासनातृप्तिर्भवति वीर्यं च बहिर्गच्छति तदा आनन्दातिरेकस्यानुभूतिर्भवति। तदायत्ताः परिणाममजानन्तो जानन्तोऽपि वा जनाः पुनः पुनः मैथुने प्रवर्तन्ते। अवशा इव नात्मानं ततो निवर्तयितुं पारयन्ति। तत्र तदुचितायाः शिक्षाया आभावोऽपि कारणम्। अन्येषामुपयोगिनां अनुपयोगिनां च विषयाणां शिक्षायां पर्याप्तं ध्यानं दीयते किन्तु कामशिक्षाविषये सर्वथैवोदासीनाः शिक्षका अभिभावकाश्च दृश्यन्ते। कामवृत्तिविषये बालानां ज्ञानं कामान्धानां सवयस्कानां सम्पर्कादेव जायते। ततो अन्धेन

नीयमाना अन्धा इव ते सर्वेऽपि गहने मैथुनपङ्के निपतन्ति। समुचितज्ञानाभावात् ततो निर्गन्तुमपारयन्तस्तत्रैवावसीदन्ति। दीर्घकालनैरन्तर्यसेविता-न्मैथुनात् सर्वथैव क्षीणवीर्याः, तज्जन्यैश्च विविधै रोगैराक्रान्तास्ते यदा यौवनं गृहस्थाश्रमं च प्रविशन्ति तदात्मानं परिमुषितमिवानुभवन्ति। बालानामतिमैथुने स्वविनाशने च येयं प्रवृत्तिरवलोक्यते तत्रानभिज्ञत्वाद्वस्तुतो बाला नापराध्यन्ति किन्तु प्राप्ते काले समुचितां कामशिक्षामप्रयच्छन्तोऽभिभावका एवापराध्यन्ति। अतः स्वसन्ततेः स्वराष्ट्रस्य च हितमभिलषद्भिरभिभावकैः प्राप्ते काले बालानां कामशिक्षायां सावहितैर्भाव्यमेव।

कामशिक्षाविषयेऽभिभावकानां यदिदमौदासीन्यमवलोक्यते तदपि न सर्वथा निर्मूलम्। तत्र बहुविधं काठिन्यं विद्यते। कृषका यथा कृषिविद्यामजानन्तोऽप्यभ्यासवशात् कृषिकर्मणि प्रवर्तन्ते, कोलभिल्लादयो वा धनुर्वेदमजानन्तोऽपि लक्ष्यवेधे प्रवर्तन्ते, साफल्यं चाधिगच्छन्ति एवमेव कामशास्त्रमजानन्तोऽपि बाल्यादेव प्रवर्तमानात् सलिङ्गविलिङ्ग-मैथुनाभ्यासवशात् युवानो दाम्पत्यसम्बन्धे प्रवर्तन्ते पितृत्वं चाधिगच्छन्ति। ते स्वतोऽपि तच्छास्त्रापरिज्ञानात् स्वबालकान् शिक्षयितुं न पारयन्तीति प्रथमं तत्र काठिन्यम्। कामप्रसङ्गो हि संक्रामिको व्याधिरिव तत्सम्बद्धान् सर्वानपि सपद्येवाभिव्याप्नोतीति मा नाम शिक्षका एव भक्षका भवेयुरिति भयमत्र द्वितीयं प्रतिबन्धकम्। कामप्रवृत्तिकार्यं सदैकान्तमपेक्षते सर्वजनसमक्षं न तत्क्रियते न वा चर्च्यते इति लोकानां परम्परागतोऽभ्यासः। तस्मात् सवयस्कानामपि सन्निधौ प्रत्यक्षं कामचर्चां कुर्वन्तो जना लज्जामनुभवन्ति किं पुनः कनिष्ठानां ज्येष्ठानां वा पुरस्तात्। इयं लज्जा कामशिक्षाविषये तृतीया प्रतिबन्धिका। अन्येषां शास्त्राणां परिज्ञानमन्तरा तद्विषये व्यवहारो न सम्भवतीति तच्छिक्षाविषये सावहिताः सर्वेऽपि जनाः। कामव्यवहारः सन्तानोत्पादनादिकं च कामशिक्षामन्तरापि स्वतः सञ्जायत इति तच्छिक्षाया आवश्यकता नानुभूयते। इयमावश्यकताया अननुभूतिरपि कामशिक्षाया अभावे परं तुरीयं निमित्तम्।

मानवसमाजे कामशिक्षाया विशिष्ट उपयोगः सम्भवति न पश्वादौ। पश्वादीनां कामव्यवहारनियामिका प्रकृतिरेव। ऋतुकाल—

एव ऋतुमत्यामेव च पशवो मैथुनाय प्रवर्तते, न ऋतुकालमन्तरा, नापि ऋतुमतीं विहाय क्वचिदन्यत्र पशूनां मैथुनप्रवृत्तिः। न च तेषां हस्त-मैथुनसदृशं मैथुनं, नापि सलिङ्गमैथुनं वा क्वचिदपि दृश्यते। इति तेषां प्राकृतिकं मैथुनं प्रकृतिनियन्त्रितमेव न शिक्षादिरूपं नियामकान्तरमपेक्षते। मानवाः पुनः प्रकृतिविजयिनः। न तेषां नियामिका प्रकृतिः। तर्हि प्रकृति-विरुद्धं सलिङ्गमैथुनं, हस्तमैथुनं चाविष्कृतम्। शिक्षाभ्यासादाविष्कृत-मिदमप्राकृतिकं मैथुनद्वयं शिक्षाकृतमेव नियन्त्रणमप्यपेक्षते। अत एव मानवसमाजे कामवृत्तिनियन्त्रणाय कामशिक्षाया महती आवश्यकता वर्तते। सत्स्वपि प्रचुरेषु प्रतिबन्धकेषु तदुचिता उपाया अनुसन्धेया एव। येन समुचिते काल एव कामव्यवहारविषये शिक्षिता बालका अनिष्टेषु मार्गेषु निपतन्तो नात्मनमवसादयेयुः। समुचितमार्गावलम्बनेन ब्रह्मचर्यं चरन्तः स्वात्मनं स्वसमाजं चोद्धरेयुः।

कामवृत्तीनां दमनं बहुविधान् शारीरान् उन्मादादींश्च मानसान् रोगानुत्पादयतीति नव्या मनोवैज्ञानिकाः कामवृत्तीनामनियन्त्रितमुपभोगं समर्थयन्ति! किन्तु दमनेन यथा वैयक्तिका रोगाः सञ्जायन्ते एव तासां दमनाभावे अनियन्त्रिते चोपभोगेऽभ्यनुज्ञायमाने समाजस्य शारीरिका मनसाश्च नैकविधा रोगाः सम्भाव्यन्त इति दमनमेवादमनापेक्षया हिता-वहम्। तत्कृतानां दुष्परिणामानां निवारणाय कामवृत्तीनां मार्गान्तरणं शोधनं वा विधेयम्। दान्ता कामवृत्तिः साहित्यसङ्गीतकलामुखेन बहिर्निःसरन्ती जनस्य लोकस्य च कल्याणकारिणी भवतीति पूर्वमुक्तम्।

साहित्यसङ्गीतकलादिकं कामप्रवृत्तेः शोधितं स्वरूपं भवतीति यदुक्तं तेन नैतदवधार्यं यत्साहित्यादिकं केवलं कामवृत्तिस्वरूपात्मकमेव भवति। साहित्यादीनां शृङ्गाररसप्राधान्येऽपि तत्र रसान्तराणामपि प्रचुरः प्रयोगो दृश्यते। शृङ्गाररसप्रधाने साहित्ये, तत्प्रधाने सङ्गीते, तत्प्रवणायां कलायां च या कामप्रवृत्तिः शृङ्गार-रसात्मनाभिव्यज्यते सा कवीनां सङ्गीतकाराणां कलाकाराणां च दान्तां कामप्रवृत्तिं व्यञ्जयतीति तत्कृते भवतु नाम कामप्रवृत्तेः शोधितं स्वरूपं, किन्तु तन्न लोककल्याणकारकम्। प्रत्युत लोकस्य हानिकरमेव। अस्माकं सर्वमपि साहित्यं शृङ्गाररसप्रधानमस्तीति न सौभाग्यं किन्तु दौर्भाग्यमेवास्माकम्। सुकुमाराणां कुमाराणां पुरस्तात् शृङ्गाररस-

प्रधानस्य साहित्यस्य, सङ्गीतस्य, कलाया वा स्थापनं न हितावहम् । तेनानवसर एव तेषां कामप्रवृत्तिरुत्तेजिता भवति । शृङ्गाररसप्रधानस्य साहित्यस्याध्यपनेऽध्यापका अपि अपत्रपन्ते । बालानामपि पुरस्तदध्यापनं दुष्करं किं पुनर्बालिकानां पुरस्तात् । तस्मात् कवयः, सङ्गीतज्ञाः, कलाकाराश्च स्वीयां दान्तां कामप्रवृत्तिं साहित्यादिमुखेन प्रकटयन्तो लोकस्य महदनर्थमुत्पादयन्ति । तदपेक्षया तेषां कामप्रवृत्तेरदमनं स्वच्छन्द उपभोग एव च गरीयान् । कामप्रवृत्तेः स्वच्छन्दोपभोगे एकस्य द्वयोर्वा तद्देशकालस्थानां बहूनां वा हानिः स्यात्, किन्तु शृङ्गाररसप्रधान-साहित्यादिमुखेन, दान्तायाः स्वकामप्रवृत्तेः प्रकाशनेन देशान्तरकालान्तर-वर्तिनां प्रचुराणां तत्पाठकानां चरित्रहानिः सम्भाव्यते । तस्मादतृप्तायाः स्वकामवृत्तेः परितर्पणाय साहित्यादिनिर्माणं न समीचीनम् ।

कामवृत्तिर्यतो मुख्या व्यापिका सर्वप्राणिषु ।
फ्रायडस्य मते सर्वो व्यापारस्तन्नियन्त्रितः ॥१६॥
प्रतिबन्धक-बाहुल्यात् शिक्षा नात्र विधीयते ।
तदभावाच्च जायन्ते दोषा बालेषु भूरिशः ॥२०॥
सुसङ्गीते च साहित्ये विविधासु कलासु च ।
मार्गान्तरमुपयाता वृत्तिरेषैव कारणम् ॥२१॥

## भारतीयं मनोवृत्तिविवेचनम्—

मैगडूगलमहोदयेन याश्चतुर्दश मूलप्रवृत्तयो निरूपितास्तासां संक्षिप्तं विवेचनं पञ्चमषष्ठपरिच्छेदाभ्यामस्माभिरिह विहितम् । मूल-प्रवृत्तिव्यतिरिक्ताः काश्चन सामान्याः प्रवृत्तयोऽपि मैगडूलमहोदयेन दर्शिताः सन्ति । तासां विवेचनमग्रिमे परिच्छेदे विधास्यते । मूलप्रवृत्ति-सामान्यप्रवृत्त्योरयं भेदो यन्मूलप्रवृत्तिभिः सह सदैव भावानां सम्बन्धो भवति । सामान्यप्रवृत्तिभिश्च सह भावानां कोऽपि सम्बन्धो न भवति । मूलप्रवृत्तिसम्बद्धा भावा अपि मैगडूगलमहोदयेन दर्शिताः । ते भावा वस्तुतो मनोवृत्तिस्वरूपा भवन्ति मूलप्रवृत्तयश्च तेषां मनोभावानाम भिव्यक्तिभेदा भवन्तीति मनोविज्ञानशास्त्रे मूलवृत्त्यपेक्षया मनोभावा-नामेव प्राधान्यमङ्गीकर्तव्यम् किन्तु मैगडूगलमहोदयेन मूलप्रवृत्तीनां

प्रधानरूपेण मनोभावानां च गौणरूपेण प्रतिपादनं कृतमस्ति। तन्न समीचीनम्। भारतीयैर्मनोवैज्ञानिकैः प्रत्ने साहित्यशास्त्रे नवधा दशधा वा विभक्ता मनोवृत्तयः। ताश्च तत्र स्थायिभावशब्देन व्यवह्रियन्ते।

शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।
निर्वेदस्थायिभावस्तु शान्तोऽपि नवमो रसः।

इत्येवं नवरसानां साहित्ये निरूपणं विद्यते। तेषां रसानां मूलभूताश्च नव स्थायिनो भावाः। ते च—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥

एवं साहित्यशास्त्रे भावानां निरूपणं विद्यते। प्रायस्त एव भावा मैगडूगल-महोदयेनापि मूलप्रवृत्तिसम्बद्धा भावाः स्वीकृताः सन्ति। उभयोः साम्यमधोऽङ्कितेन चित्रेण स्पष्टी भवति—

| भारतीयो विभागः | | मैगडूगलस्य विभागः | |
|---|---|---|---|
| भावाः | रसाः | मूलप्रवृत्तयः | भावाः |
| १ रतिः | शृङ्गाररसः | कामप्रवृत्तिः | कामभावना |
| २ हासः | हास्यरसः | हास्यप्रवृत्तिः | प्रसन्नता |
| ३ शोकः | करुणरसः | शरणागतिः | करुणा |
| ४ उत्साहः | वीररसः | आत्मप्रकाशनम् | उत्साहः |
| ५ क्रोधः | रौद्ररसः | युयुत्साप्रवृत्तिः | क्रोधः |
| ६ भयम् | भयानकरसः | पलायनप्रवृत्तिः | भयम् |
| ७ जुगुप्सा | वीभत्सरसः | विकर्षणप्रवृत्तिः | घृणा |
| ८ विस्मयः | अद्भुतरसः | औत्सुक्यप्रवृत्तिः | आश्चर्यम् |
| ९ निर्वेदः | शान्तरसः | विनयप्रवृत्तिः | आत्महीनता |
| १० स्नेहः | वात्सल्यरसः | शिशुरक्षाप्रवृत्तिः | स्नेहः |

एवं य एव भावा भारतीयै रसशास्त्रिभि-र्निरूपितास्त एव मैगडूगल-महोदयेन मूलप्रवृत्तिसम्बद्धभावरूपेण प्रतिपादिताः सन्ति। केवलं बुभुक्षा, एकाकिता, संग्रहभावो रचनानन्दश्चेति चत्वारो भावा-

मैगड्डूगल-मतेऽधिकाः सन्ति । किन्तु ते रससम्बद्धा न भवन्तीति भारतीये साहित्यशास्त्रे न निरूपिताः । उभयोर्विभागयोस्तुलनायां भारतीयो मनोवृत्तिविभागो युक्ततरः प्रतिभाति ।

तदयमत्र संग्रहः—

मूल - प्रवृत्तयः प्रोक्ता मैग्डूगल - महोदयैः ।
वर्गीकृताः पुनर्भिन्नै र्विबुधै - र्भिन्नरूपतः ॥२२॥
समाज-व्यक्ति-सम्बद्धा द्विधा मूलप्रवृत्तयः ।
मुख्यतः संविभक्तास्तु थार्नडाइक्-महोदयैः ॥२३॥
अन्यसम्बन्धसापेक्षा वृत्तिः सामाजिकी मता ।
वैयक्तिकीपुनर्वृत्ति-स्तत्सम्बन्धानपेक्षिणी ॥२४॥
जिज्ञासा च रचना च युयुत्सा सञ्चयस्तथा ।
पलायनं च शरणं वैयक्तिक-प्रवृत्तयः ॥२५॥
परेच्छा कामवृत्तिश्च विनयश्चात्मगौरवम् ।
सामाजिक्यस्तथा मुख्या मता मूलप्रवृत्तयः ॥२६॥
संविभागे कृतेऽप्येवं लक्ष्ये साङ्कर्यसम्भवात् ।
अशक्यमुभयो-र्मध्ये भेदरेखावधारणम् ॥२७॥
भारतीयेऽपि साहित्ये रसादीनां विवेचने ।
मनोवृत्तिविभेदोऽयं नवधा दशधा कृतः ॥२८॥
रति-र्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति अष्टौ नाट्यगताः स्मृताः ॥२९॥
निर्वेदोऽथ च वात्सल्यं भावद्वयमतः परम् ।
तदादाय दशैवात्र स्थायिभावास्तु सम्मताः ॥३०॥
मूलप्रवृत्तिसम्बद्धा एव भावा दशापि तु ।
मनोविज्ञान-निष्णातै-र्नवै-र्विज्ञै-र्निरूपिताः ॥३१॥
एकाकिता बुभुक्षाथ रचना संग्रहस्तथा ।
चत्वारो येऽधिका भावा नव्यैः सन्ति प्रदर्शिताः ॥३२॥
न ते रसेन सम्बद्धाः न वा तत्रोपयोगिनः ।
मनोविश्लेषकैः प्रत्नै-स्तस्मात् ते समुपेक्षिताः ॥३३॥

सप्तमः परिच्छेदः

# अनुकृतिः

## समान्याः प्रवृत्तयः—

मैगडूगलप्रतिपादितानां चतुर्दशविधानां मूलप्रवृत्तीनां निरूपणं विगताभ्यां पञ्चमषष्ठपरिच्छेदाभ्यामिह विहितम्। मूलप्रवृत्तिव्यतिरिक्ताः काश्चन सामान्याः प्रवृत्तयोऽपि मैगडूलमहोदयेन प्रतिपादिताः सन्ति। मूलप्रवृत्तिवत् सामान्याः प्रवृत्तयोऽपि जन्मजा भवन्ति। किन्तु मूलप्रवृत्तिषु भावविशेषस्य संवेगविशेषस्य वा नियतः सम्बन्धो भवति, सामान्यासु प्रवृत्तिषु तादृशो नियतो भावसम्बन्धो न भवतीत्यनयोर्भेदः। तथा चोक्तम्—

> मूलप्रवृत्तयः प्रोक्ता भावाश्लिष्टाश्चतुर्दश।
> असंभिन्नाः पुनर्भावैः सामान्यास्तु प्रवृत्तयः॥ १॥
> अनुकृत्यात्मिका चैका तथा क्रीडात्मिका परा।
> द्वे प्रवृत्ती मते मुख्ये सामान्यासु प्रवृत्तिषु॥ २॥
> मुख्या सामान्यवृत्ति-र्वै तत्रानुकरणात्मिका।
> सहानुभूति-र्निर्देशो ऽनुकरणमिति त्रिधा॥ ३॥

सामान्यासु प्रवृत्तिषु अनुकरणात्मिका क्रीडात्मिका चेति द्वे मुख्ये प्रवृत्ती। तत्रानुकरणात्मिकायाः सामान्यप्रवृत्तेः संक्षिप्तं वर्णनमत्र विधीयते। क्रीडात्मिकायाश्च सामान्यप्रवृत्ते-र्वर्णनमग्रिमे परिच्छेदे-विधास्यते।

## १. अनुकृतिभेदाः—

आङ्गलदेशीयेन शिक्षाविशारदेन श्री टी० पी० नन महोदयेन (१) भावानामनुकरणं (२) विचारणामनुकरणं (३) क्रियाणामनुकरणं चेति सामान्यमनुकरणं त्रिधा विभक्तम्। परेषां चेष्टादिभिः तद्गतं सुखात्मकं दुःखात्मकं वा भावमनुमाय यदि जनस्तत्सदृशीं भावस्थितिमात्मन्यनुभवति

तदेयं भावानुकृतिरुच्यते। सा च व्यवहारे सहानुभवनात् सहानुभूतिरुच्यते। यदा पुनः परेषां विचारसदृशान् विचारानात्मन्यनुभवति तदेदं विचार-सादृश्यं विचारानुकृतिपदेन निर्देशपदेन च व्यवह्रियते। यदा च परपुरुष-गतां काञ्चित् क्रियां दृष्ट्वा तत्सदृशीं क्रियामपरो जनोऽनुतिष्ठति तदेयं क्रियानुकृतिः सामान्येनानुकरणशब्देन व्यवह्रियते । एवमनुकरणात्मिकेयं सामान्या प्रवृत्तिरपि त्रिविधा जाता। इमे त्रयोऽपि भेदाः संक्षेपतोऽग्रे निरूप्यन्ते ।

## १. भावानुकृतिः [ सहानुभूतिः ]

अनुकरणात्मिकायाः सामान्यप्रवृत्तेर्भावानुकरणात्मकः प्रथमो भेदः सहानुभूतिपदवाच्यो भवति । व्यक्त्यन्तरवर्तिनं सुखात्मकं दुःखात्मकं वा भावं चेष्टादिभिरनुमाय कदाचिज्जनस्तदभिन्नां भावस्थितिमात्मन्यप्यनु-भवतीति सहानुभवनादियं सहानुभूतिरित्युच्यते । परेषां दुःखेषु दुःखिता सहानुभूतिमन्तो जनाः सहृदया उच्यन्ते । इयं सहानुभूतिर्हि जन्मजा सामान्या प्रवृत्तिरस्ति। न केवलं मानवे किन्तु पश्वादावपीयं सहानुभूतिः सम्यग् दृश्यते। यदि कमप्येकं वायसं कथञ्चित् कश्चित् पुरुषः पाशे निबध्नाति गृह्णाति वा तदा तद्दुःखेन दुःखितास्तद्देशवासिनः सर्वेऽपि वायसास्तत्र समेत्य विकटमारावमारभन्ते। तन्निशम्य च क्षणेनैव दूरवस्था अपि सहस्रशो वायसास्तत्रागत्यारावैः सहानुभूतिं प्रकाशयन्ति तन्मोचनाय च प्रयतन्त इति बहुशोऽनुभूतम्। इयं सहजा सहानुभूतिः पश्वादिषु मनुष्येषु च सर्वत्रापि सम्भवति। द्वितीया विचारपूर्विका सहानुभूतिर्भवति । सा मानवेष्वेवोपलभ्यते। सहजा सहानुभूतिर्निकट-स्थमात्रगा भवति। विचारपूर्विका सहानुभूतिश्च दूरस्थविषयापि भवति। दूरस्थानां दुरवस्थां दुःखं च विचार्य सहृदया जनाः समदुःखिनो भवन्ति ।

अस्याः सहानुभूतेः शिक्षायां महानुपयोगो भवति बालकेषु सहानुभूतिभावस्य प्राबल्यं भवति। ये शिक्षका बालानामिमां सहानुभूतिं प्राप्तुं शक्नुवन्ति त एवाध्यापनकर्मणि साफल्यं प्राप्नुवन्ति। बालानां सहानुभूतिमन्तरा शिक्षकास्तेषां सम्यक् पाठने विफला एव भवन्ति। 'ममव्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽस्तु' उपनयनकालीनेऽस्मिन्

व्रतग्रहणे वैदिकैस्तदेव तत्त्वं सन्निधापितम्। शिष्याणां चित्तं गुरुचित्तानुगं तेषां हृदयं च गुरूणामनुकूलं यदि भवति तदैव बालानां चरित्रनिर्माणे शिक्षायाः साफल्यं च सम्भवति नान्यथा। यदि कक्षायामेकोऽप्यविनीतो बालको गुरवेऽभिद्रुह्यति तस्येयमसहानुभूतिभावनाऽन्येष्वपि बालकेषु सांक्रामिकव्याधिरिव प्रसर्पति। कक्षाया अनुशासनं च प्रविलीयते क्वापि। अतः शिक्षकैस्तादृशानामविनीतानां बालानां चिन्ता विशेषतः करणीया भवति। सामदानदण्डभेदादिभिरुपायैस्तेषां वशीकरणाय प्रयतितव्यम्। नान्यथा शिक्षकाणां प्रभावो न च तेषां साफल्यं सम्भवति।

सहानुभूति-र्भावस्यानुकृतिः सहभावनात्।
सहजा सविचारा च द्विविधा सा प्रकीर्तिता ॥६॥
मानवेषु द्विधाप्येषा पश्वादौ सहजैव सा।
द्विधाप्येषा समाजस्य सुखाय च शुभाय च ॥७॥

## २. विचारानुकृतिः [ निर्देशः ]—

भावानामनुकरणं सहानुभूतिः, विचाराणां चानुकरणं निर्देश इति पूर्वमुक्तम्। एकः पुरुषः कामपि विशिष्टां पद्धतिमवलम्ब्य विचारयति। यद्यन्येऽपि जनास्तत्सदृशीमेव पद्धतिमवलम्ब्य विचारयितुं प्रवर्तन्ते तदा विचाराणामनुकरणादियं विचारानुकृति-निर्देशपदवाच्या भवति। उत्तरे जनाः पूर्वस्य निर्देशादादेशाद्वा प्रभाविताास्तदनुकूलमेव विचारयन्ति। प्रात्यहिके जीवने निर्देशस्य महिमाऽनुभूयते। यदा कश्चिन्नेता कामपि विचारधारां प्रवर्तयति बहवस्तदनुयायिनस्तन्निर्देशमनुवर्तन्ते तदनुरूपमेव च विचारयितुं प्रवर्तन्ते। बुद्धिमन्तो दृढसङ्कल्पाश्च सच्चरित्रा दुश्चरित्रा वा जना निर्देशकाः, अल्पबुद्धयो मन्दसङ्कल्पाश्च जनाः सदैव निर्देश्या भवन्ति।

अयं निर्देशस्त्रिविधो भवति। व्यक्तित्वनिर्देशः, समूहनिर्देशः, आत्मनिर्देशश्च। व्यक्तेर्महत्वायत्तो व्यक्तित्वनिर्देशः। आयुषा, विद्यया, धनेन, पदेन, चरित्रेण वा ये जना उच्चतरा भवन्ति तेषां वचनं विचारं च प्रायोऽन्ये जना अनुसरन्ति। तेषां व्यक्तित्वेन प्रभाविता एव जनास्तन्निर्देशं परिपालयन्ति। अयं प्रथमः सुबोधश्च व्यक्तित्वनिर्देशस्य प्रकारः। यत्र पुनर्जनानामश्रद्धा द्वेषो वा भवति तत्र निर्देशानुवर्तनं न

सम्भवति प्रत्युत प्रतिनिर्देशभावनैवानुभूयते । स यत्किमपि विचारयति कथयति वा तद्विपरीतमेव जना अनुतिष्ठन्ति । शिक्षकाणां यदि कक्षायां समीचीनः प्रभावोऽस्ति तदा सर्वेऽपि छात्रास्तन्निर्देशवर्तिनो भवन्ति । येषां पुनः चरित्रदोषात् स्वभावदोषाद् विद्यादिदोषाद्वा प्रभावः क्षीयते तेषां निर्देशशक्तिरपि हीयते । क्वचित् प्रतिनिर्देशभावनाविर्भवति । प्रतिनिर्देशभावना हि बालान् सर्वदा विपरीताचरणे प्रवर्तयति । अतः शिक्षकैर्विद्यया चरित्रेण स्वभावेन च बालकेषु स्वप्रभावोऽवश्यं स्थापनीयो भवति । तदायत्तैव तेषां निर्देशशक्तिः साफल्यं च ।

समूहनिर्देशो हि निर्देशस्य द्वितीयो भेदः । समूहनिर्देश एव अन्धपरम्परा गड्डलिकाप्रवाहादिशब्दैरभिधीयते । उचिता अनुचिता वा बहवो विचाराः समाजे प्रचलिताः सन्ति । तत्र केषांचिद्विचाराणा-मनौचित्यमवगच्छन्तोऽपि जनाः समाजस्य मतेन प्रभावितास्तान् परित्यक्तुं न शक्नुवन्ति । अयमेव समूहनिर्देशस्य प्रभावः । समूहनिर्देशायत्ता जनाः स्वतन्त्रतया विचारं कर्तुं न पारयन्ति । समूहस्य निर्णयमनुवर्तन्ते । समूह उचितमनुचितं वा यद् विचारयति तन्निर्देशवर्तिनो जना अपि तदेव विचारयन्ति कुर्वन्ति च ।

आत्मनिर्देशश्च निर्देशस्य सर्वोत्तमस्तृतीयः प्रकारः । यद्यपि पूर्वोक्तो व्यक्तित्वनिर्देशः समूहनिर्देशश्चापि जनानां स्वकीयान् विचारां-स्तथा प्रभावितान् कुरुत इति आत्मनिर्देशतयैव परिणमति, तथापि तत्र बाह्यं निर्देशबीजमिति तदात्मनिर्देशाद् भिद्यते । आत्मनिर्देशे स्वीया प्रबला आत्मशक्तिः, आत्मानुभूतिः स्वतन्त्रो विचार एव वा प्रवर्तको भवति । इच्छाशक्तेर्दौर्बल्येऽशुभा आत्मनिर्देशा अपि प्राप्यन्ते तदायत्ताश्च जना अवनतिमार्गोन्मुखा जायन्ते । शारीरिकी मानसी आध्यात्मिकी सर्वविधा जनानामुन्नतिरवनतिर्वात्मनिर्देशायत्ता भवति । 'आत्मैव ह्यात्मनो मित्रमात्मैव रिपुरात्मनः' इत्यादिवाक्यगतं तत्वमात्मनिर्देशस्यैव भावनामभिव्यनक्ति । आत्मनिर्देशस्याप्रतिहतां अमितप्रभावां च शक्ति-मवगच्छद्भिः प्रत्नैर्वैदिकैरात्मनिर्देशप्रधानं सन्ध्योपसनादिकं कर्म प्रतिसन्ध्यमनुदिनं चानुष्ठेयत्वेनोपदिष्टम् । 'भूः पुनातु शिरसि, भुवः पुनातु नेत्रयोः, स्वः पुनातु कण्ठे' इत्यादिरूपो मार्जनमन्त्रः, ओं वाक् वाक् ओं प्राणः प्राणः इत्यादिरूपोऽङ्गस्पर्शमन्त्रो वा आत्मनिर्देशरूप एव ।

'पश्येम शरदः शतं, जीवेम शरदः शतं, शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं, भूयश्च शरदः शतात्' इत्याद्यपि आत्मनिर्देशात्मकमेव। 'विश्वानि देव सवितर्दुरितानि परासुव, यद् भद्रं तन्न आसुव'। 'अग्ने नय सुपथा रायेऽस्मान्,' 'युयोध्यस्मज्जुहुराणमेनः' इत्यादिका प्रार्थनाप्यात्मनिर्देशरूपैव। 'तन्मे मनः शिवसङ्कल्पमस्तु, अयमप्यात्मनिर्देश एव। एवमेव शिक्षकैर्बाला आत्मनिर्देशमार्गमवलम्ब्य स्वात्मसमुद्धाराय प्रेरणीयाः, आत्मनिर्देशप्रधाने च सन्ध्योपसनादौ प्रवर्तनीयाः।

विचारानुकृतिर्नामि नूनमन्यस्य देशनात्।
निर्देशनाम्ना निर्दिष्टा त्रिधा च कथिता तु सा ॥८॥
व्यक्तित्वस्य विनिर्देशो व्यक्तेरतिशयाद् भवेत्।
समूहस्याथ निर्देशे व्यक्तिबोधो विमुह्यति ॥९॥
अन्तरात्मैव लोकस्य यत्र कार्ये नियोजकः।
आत्मनिर्देश एवासौ सर्वस्योन्नतिकारकः ॥१०॥

## ३. क्रियानुकृतिः [ अनुकरणम् ]—

क्रियामात्रस्यानुकृतिरनुकरणपदेन व्यवह्रियते। सा पश्वादावप्युपलभ्यते। एका मेषी येन मार्गेण गच्छति अन्यास्तामेवानुसरन्ति। एकस्य शुनो भषणं श्रुत्वान्ये श्वानोऽपि भषितुमारभन्ते। इदं सर्वमनुकरणप्रवृत्तेरेव प्रभावाद् भवति। मानवेषु चेयमनुकरणप्रवृत्तिः प्रचुरा अत्यन्तमुपयोगिनी च भवति। बाल्यावस्थायां भोजनं, पानं, गमनं भाषणं वा सर्वमप्यनुकरणबलादेव बालकः करोति। शिक्षायामप्यनुकरणस्य महानुपयोगः। ज्ञातमज्ञातं चेत्यनुकरणं द्विविधं भवति। ज्ञातानुकरणे स्वानुकरणक्रियामनुकर्तानुभवति। अहमस्यानुकरणं करोमीत्यनुकर्ता विजानाति। तदनुकरणं विचारपूर्वकं भवति। किन्तु कदाचिदनुकृतिक्रियामजानन्नपि जनोऽनुकरोति। बाला वेषभूषां भाषणभङ्गीं, अन्यांश्च बहून् व्यापारान् परेषामनुकरणेनैव गृह्णन्ति किन्तु तदज्ञातमेवानुकरणं भवति। शिक्षायां ज्ञातमनुकरणं बहुलमुपयुज्यते। विशिष्टामुच्चरणपद्धतिं, लेखनशैलीं, गानं, वादनं, कलाकौशलं च सर्वमपि ज्ञातानुकरणसाध्यं भवति। गुरुजननिर्दिष्टां क्रियापद्धतिमनुकुर्वन्नेव बालकस्तत्र व्युत्पद्यते।

इदं ज्ञातानुकरणमपि द्विविधं भवति। एकत्र जन आत्मानमनुकार्यापेक्षया हीनं मत्वा महतामनुकरणं करोति। अन्यत्र परेषां महत्वमात्मनश्च हीनतामनभ्युपगच्छन्नपि तेषां गुणानामनुकरणं करोति। तत्राद्येऽनुकरणे दोषाणामप्यनुकरणं सम्भाव्यते। 'महाजनो येन गतः स पन्थाः' इति नीतिवाक्यमनुसरन्तो जना अनुकार्यस्य गुणदोषविवेचनेऽक्षमास्तस्य गुणानिव दोषानपि तुल्यरूपेणानुकुर्वन्ति। द्वितीयमनुकरणं विवेकमूलकं भवतीति तत्र गुणानामेवानुकरणं करोति नावगुणानामिति तदेव समीचीनम्।

**अनुकरणस्य भेदाः—**

कर्कपेट्रिकमहोदयेन अनुकरणं पञ्चधा विभक्तम्—

१. सहजमनुकरणम्—तथा परस्य जृम्भां दृष्ट्वा जृम्भा, रोदनं दृष्ट्वा वा रोदनमाविर्भवति। एवं नम्रतामवलोक्य नम्रता, कठोरतामवलोक्य च कठोरता परत्र जायते। इदं सहजमनुकरणम्।

२. स्वाभाविकमनुकरणम्—यदवलोकनेन स्वत एव तदनुकरणे प्रवर्तते लोकस्तत्स्वाभाविकमनुकरणं भवति। यथा कोकिलशब्दं श्रुत्वा बालकास्तस्यानुकरणं कुर्वन्ति। कमपि रुचिरं सङ्गीतं श्रुत्वा तदनुकरणे च प्रवर्तन्ते।

३. अभिनयानुकरणम्—यत्र बालका पूर्वदृष्टानां वस्तूनां कार्याणां वाऽनुकरणं कुर्वन्ति। यथा बाला कमप्यश्ववारं दृष्ट्वा यष्टिकामारुह्य बालकान्तरं वारुह्य तदनुकरणं कुर्वन्ति। बालिका क्रीडायां वन्ह्यादिकं विनापि भोजनादिकं पचन्ति गुड्डिकादिरूपैः क्रीडनकैः क्रीडन्त्यस्तेषां विवाहादिकमपि रचयन्ति।

४. सप्रयोजनानुकरणम—यत्र कमपि प्रयोजनविशेषमभिलक्ष्यानुकरणीयमर्थं पुरो निधाय बालकस्तदनुकरोति तत्सप्रयोजनमनुकरणं भवति। यथा सुलेखसम्पादनाय बालकः शिक्षकस्यान्यस्य वा सुन्दरं लेखं पुरो निधाय तदनुकर्तुं प्रयतते।

५. आदर्शानुकरणम्—यदा बालकः कस्यापि समुत्कृष्टस्य जनस्यादर्शमनुकरोति तदादर्शानुकरणमुच्यते। पूर्वं परेषामादर्शाननुकुर्वन्नपि कालान्तरे स स्वीयानेवादर्शान् निर्माति तदनुकूलं चाचरति।

एवमेव मैगडूगुल-महोदयेनापि अनुकरणं पञ्चधा विभक्तम्। किंतु डेवरमहोदयेन पूर्वं स्वाभाविकमनुकरणं सप्रयत्नमनुकरणं चेति द्विधा

विभक्तमनुकरणम् । तत्र भाषणभङ्गी, वेषभूषा च प्रायः स्वाभाविकेन रूपेणैवानुक्रियते । विद्यालयादिकार्येषु च सप्रयत्नमनुकरणमुपयुज्यते । पुनश्च तेन दृश्यानुकरणं विचारानुकरणं चेति द्विधा संविभक्तमनुकरणम् ।

ज्ञाता चैव तथाज्ञाता या क्रियानुकृतिर्द्विधा ।
पञ्चधा संविभक्ता सा कर्कपैट्रिकमहोदयैः ॥११॥
सहजा स्वाभाविकी चाभिनेया सप्रयोजना ।
आदर्शानुकृतिश्चेति पञ्चधानुकृतिस्तु सा ॥१२॥

## अनुकरणस्य त्रयो नियमाः—

अनुकरणविषये मनोवैज्ञानिकैर्महत्वपूर्णं नियमत्रयमवधारितम् ।

१. तत्रोच्चस्यैवानुकरणं हीनाः कुर्वन्ति, न हीनस्यानुकरणमुच्चाः कुर्वन्ति इत्ययं प्रथमो नियमः । ये जना आयुषा विद्यया धनेन चरित्रेण वा उन्नततरा भवन्ति, त एवान्येषां ततोऽवनतानां कृतेऽनुकरणीया भवन्ति ।

२. इदमनुकरणं पूर्वं विचारात्मकं मानसमनुकरणं भवति ततः कार्यरूपेण बहिः प्रकाशत इत्ययं द्वितीयो नियमः ।

३. अनुकरणं च संक्रामकं भवतीति तृतीयो नियमः । एको बालकः कमपि कार्यविशेषं करोति, तमन्येऽनुकुर्वन्ति, तदवलोक्य परम्परया सर्वत्रैव तदनुकरणं प्रवर्तते । राज्ये कश्चिदसन्तुष्टो जनो विद्रोहमारभते, तमनुकुर्वन्तोऽन्येऽपि तदनुयायिनो जायन्ते । कक्षायामेको बालको यद्यनुशासनमुल्लंघयति तह्यन्येऽपि तमनुसरन्तीति ज्ञात्वा शिक्षका राजनीतिज्ञाश्चानुशासनोल्लङ्घनं न सहन्ते ।

तदयमत्र संक्षेपः—

हीन एव सदा लोके उच्चस्यानुकरोति वै ।
प्रथमोऽयन्तु सिद्धान्तो ऽनुकृतेरवधारितः ॥१३॥
पूर्वं सा मानसी वृत्ति-र्बहिः पश्चात् प्रकाशते ।
द्वितीयोऽयं च सिद्धान्तो ऽनुकृतेः सम्प्रकीर्तितः ॥१४॥
सांक्रामिको यथा व्याधि-र्लोकाल्लोकं प्रसर्पति ।
तथैवैषापि लोकेषु दृष्टमात्रा प्रसर्पति ॥१५॥
अनुकृतेस्तु विद्वद्भि-र्मनोविज्ञान—शास्त्रके ।
एत एव त्रयो मुख्या नियमाः सम्प्रधारिताः ॥१६॥

## स्पर्धा ईर्ष्या च—

यदेयमनुकरणप्रवृत्तिर्द्वन्द्वात्मिकया युयुत्साप्रवृत्त्या संसृज्यते तदा स्पर्धायाः समुत्पत्तिर्भवति। अनुकरणप्रवृत्ता बहवो बालका यदा अन्योन्यमभिभूयात्मकल्याणाय आत्मोन्नत्यै वा प्रयतन्ते तदेयं स्पर्धाप्रवृत्तिर्भवति तीव्रेषु बालकेषु स्पर्धायाः प्राचुर्यं भवति। तेनेदं स्पष्टं भवति यद्बालकानां विकासाय स्पर्धाप्रवृत्तिः साधीयसी कल्याणवहा च भवति। येषु बालकेषु स्पर्धाप्रवृत्तेरभावो भवति ते सदा मन्दबुद्धयो अध्ययने चाकुशला भवन्ति। एवं क्रीडादिकार्येष्वपि स्पर्धाप्रवृत्तिरुपयोगिनी भवति। यदा स्पर्धायां द्वन्द्वप्रवृत्तेरनुपातो वर्धते तदेयं स्पर्धा ईर्ष्यायां परिणमति। सा च हानिकारिणी प्रवृत्तिर्भवति। स्पर्धायां उभावपि प्रतिस्पर्धिनौ अध्ययनेऽध्यापने क्रीडायां चरित्रनिर्माणे सामाजिके वा कर्मणि नेतृत्वलाभाय प्रयतन्ते। तेनोभयोरपि समुन्नतिर्भवति। किन्त्वीर्ष्यायत्तो बालक आत्मनो हितसाधने तथा न प्रवर्तते यथा प्रतिद्वन्द्विनो अहिताय प्रवर्तते। तेन तस्य काप्युन्नतिर्न भवति, चरित्रं च प्रतिदिनं हीयते। अत एव बालकानां स्पर्धाप्रवृत्तिर्यथा प्रोत्साहनीया भवति तथैवेर्ष्याप्रवृत्तिर्निरोद्धव्या भवति।

स्पर्धा श्लाघ्या मता वृत्तिर्द्वयोरुत्कर्षकारिणी।
परहानिप्रधाना च ईर्ष्यावृत्तिर्विगर्हिता॥ १७॥

### प्रश्नाः

१. सामान्यवृत्तीनां मूलप्रवृत्तीनां च किं भेदबीजम्।
२. सहानुभूतेः स्वरूपं सोदाहरणं निरूपणीयम्।
३. निर्देशस्य किं लक्षणं। स च कतिविधः।
४. सन्ध्योपासनाया मनोवैज्ञानिकं महत्त्वं सोपपत्तिकं प्रदर्शनीयम्
६. कर्कपैट्रिक महोदयेन ड्रेवरमहोयेन चानुकरणस्य ये विभागा कृतास्ते दर्शनीयाः।
७. अनुकरणस्य नियमा सोदाहरणं लेख्याः।
८. ईर्ष्यास्पर्धयोः को भेदः। बालानां चरित्रनिर्माणे च कतरा कथं चोपयुज्यते॥
९ शिक्षकोऽनुकरणस्य कथमुपयोगं कुर्यात्।
१० सहानुभूतेश्च शिक्षायां क उपयोगः।

## अष्टमः परिच्छेदः

# क्रीडा

### क्रीडासिद्धान्ताः—

जन्मजासु सामान्यासु प्रवृत्तिषु क्रीडाप्रवृत्तिरपि मुख्या प्रवृत्तिरस्ति। मानवेष्विव सा प्रवृत्तिः पश्चादावप्युपलभ्यते। गवां वत्सा इतस्ततो धावन्त उत्प्लुत्योत्प्लुत्य क्रीडन्ति। शुनां शावका मार्जारशावका वा किमपि वस्तु प्राप्य तदितस्ततः कर्षन्ति पुनः परित्यजन्ति पुनश्चोत्प्लुत्य तद् गृहीत्वा क्रीडन्ति। एवं सर्वेष्वपि प्राणिषु जन्मजा क्रीडाप्रवृत्तिर्लभ्यते। क्रीडायां बालका कमप्यपूर्वमानन्दं स्फूर्तिं चानुभवन्ति। क्रीडायाः कारणविषये उपयोगविषये च पाश्चात्यैश्चतुर्विधा सिद्धान्ताः समुद्भाविताः सन्ति।

### १. अतिरिक्तशक्तिवादः—

आङ्ग्लदेशीयेन हर्बर्टस्पेन्सरमहोदयेन क्रीडाविषये 'अतिरिक्तशक्तिसिद्धान्तः' स्थापितः। आहारादिना प्राणिषु कापि शरीरसन्धारणक्षमा शक्तिरुत्पद्यते। शक्तिबलेनैव जनः सर्वमपि कार्यं करोति। इयं शक्तिरेव तस्याहारानुसन्धानादौ परेष्वपि च सर्वेषु दैनिकेषु व्यवहारेषूपयुज्यते। किन्तु सर्वव्यवहारसम्पादनोत्तरमप्यतिरिक्ता शक्तिस्तत्र भवति। सैवातिरिक्ता शक्तिः क्रीडामुखेन बहिर्याति। यथा वाष्पयानानामतिरिक्तो वाष्पो रक्षापिण्डस्य [ सेफ्टीवाल्वस्य ] उद्घाटनेन बहिर्निष्कास्यते, एवमेव प्राणिनां शरीरेषु सञ्चितातिरिक्ता शक्तिः क्रीडामुखेन बहिर्निर्यते। अयं हर्बर्टस्पेन्सरमहोदस्य सिद्धान्तः।

किन्तु मतमिदमन्येभ्यो न रोचते। सेफ्टीवाल्वमुखेन वाष्पयानस्य यो वाष्पो बहिर्निष्कास्यते तस्य वाष्पयाने कोऽप्युपयोगो न भवति। क्रीडा पुनर्बालकानामानन्दजननी स्फूर्तिदायिका चेति नातिरिक्तवाष्पवन्निरर्थिका। किञ्चाध्ययनादिकार्येषु परिश्रान्ता जनास्तत्र शक्त्यभावादेव परिश्रान्ता भवन्तीति न तत्रातिरिक्ता शक्तिः, किन्तु तेऽपि क्रीडाकाले

आनन्दातिरेकं स्फूर्तं चानुभवन्ति । तस्मादतिरिक्तशक्तिवादो न समीचीन इति कृत्वा अङ्ग्लिदेशीयेनैव लार्डकिम्समहोदयेन तद्विपरीतः शक्तिवर्धनस्य सिद्धान्तः स्थापितः ।

## शक्तिवर्धनवादः—

लार्डकिम्समहोदयस्य अयं 'शक्तिवर्धनो सिद्धान्तो' ऽतिरिक्त-शक्तिसिद्धान्ताद्विपरीतः । अतिरिक्तशक्तिसिद्धान्तेऽन्तर्गतातिरिक्ता शक्तिः क्रीडामुखेन बहिर्निष्कास्यते । किन्त्वस्मिन् सिद्धान्ते क्रीडया बालकेषु नूतना शक्तिः सञ्चार्यते । अत एव क्रीडाकाले बालकाः कमप्यपूर्वमानन्द-मतिरिक्तां च स्फूर्तिमनुभवन्ति । दैनिकैरध्ययनादिकार्यैः परिश्रान्तोऽपि जनः क्रीडयाभिनवशक्तिसञ्चाराद् विगतश्रममिवात्मानं मन्यते । अत एवायं सिद्धान्तः 'शक्तिवर्धनसिद्धान्त'-नाम्ना व्यवह्रियते ।

किन्त्वयमपि सिद्धान्तो न निर्दुष्टः । अत्यन्तं परिश्रान्तो बालकः क्रीडितुं न पारयति, न च तस्मिन् काले क्रीडनं तस्मै रोचते । किञ्च क्रीडायां मानसी शारीरिकी च शक्तिरुपयुज्यत एव इत्यपि सत्यम् । या च तृप्तिः स्फूर्तिश्च क्रीडायामनुभूयते तादृशी तृप्तिः सर्वासामपि मूल-प्रवृतीनां प्रकाशनेऽनुभूयते । मूलप्रवृत्तीनामवरोधे मानसिकमन्तर्द्वन्द्व-मनुभवति । तत्र च तत्प्रकाशनादपि अधिकः शक्तिव्ययो भवति । मूलशक्तिप्रकाशने चोपयुक्ता शक्तिर्न व्यर्था भवति किन्तु तद्व्ययेनाभि-नवानुभूतिर्जायते इति स्हर्बर्टपेन्सरमहोदयस्यातिरिक्तशक्तिसिद्धान्तो यथा सदोष एवमयमपि शक्तिवर्धनसिद्धान्तः सदोषः ।

## ३. जीवनसज्जावादः पूर्वाभिनयवादो वा—

कार्लगूसमहोदयस्य मेलब्रांशमहोदयस्य च मते भाविनि जीवने विधीयमानानां कार्याणां पूर्वाभिनयः पूर्वसज्जा वा क्रीडायां क्रियते । श्वशावका मार्जारशावकाश्च किमपि वस्तु गृहीत्वा पुनः परित्यजन्ति त्यक्त्वा च पुनर्गृह्णन्ति । इयं हि तेषां क्रीडा भाविनि जीवने विधीयमानस्य आखेटव्यवहारस्य पूर्वाभिनयरूपैव । बालिका गुड्डिकाख्यैः क्रीडनकैः क्रीडन्त्यो भविनि जीवनेऽनुष्ठीयमानं समस्तमपि गृहस्थ-जीवनोपयोगि व्यवहारजातमभिनयन्ति । अयमपि भाविनो जीवन-

व्यवहारस्य पूर्वाभ्यास एव । विलियनस्टर्नमहोदयस्य मते जीवनं संग्रामात्मकमस्ति । बाल्ये विधीयमानाश्च क्रीडास्तस्य जीवनसंग्रामस्य पूर्वसज्जारूपाः सन्ति ।

## ४. पुनरावृत्तिवादः—

पातालदेशीयेन स्टनलेहालमहोदयेन क्रीड़ाविषये नूतन एव सिद्धान्तः स्थापितः । तन्मते सर्वेऽपि प्राणिनः स्वजातेर्विकासस्येतिहासं स्वजीवने आवर्तयन्ति । मानवजातिर्हि बर्बरावस्थातः शिष्टावस्थां प्राप्ता । तदनुसारं सर्वेऽपि मानवाः शैशवादारभ्य बर्बरावस्थाया इतिहासमावर्तयन्तः प्रौढ़ावस्थायां शिष्टतामधिगच्छन्ति । बर्बरावस्थाया नैकविधा प्रवृत्तयः क्रीडायां समाप्ता भवन्ति । ये बालकाः क्रीडायाः समुचितं पर्याप्तं वावसरं न प्राप्नुवन्ति तेषां बर्बरावस्थायास्ताः प्रवृत्तयो न नश्यन्ति किन्तु तत्कालं तिरोहिताः कालान्तरे भयङ्करेषु कार्येष्वभिव्यज्यन्ते । बर्बरावस्थायाः पाशविकप्रवृत्तीनां समापने, नैतिकताधाने च क्रीडात्यन्तमुपयोगिनी भवति ।

## ५. समन्वयवादः—

एवं क्रीडाविषये पूर्वोक्तानां चतुर्णामपि मतानां समन्वयपरोऽपरङ्गः समन्वय-सिद्धान्तोऽपि दृश्यते । तस्मिन् मते एतेषां सिद्धान्तानामापाततो दृश्यमानो विरोधो न पारमार्थिकः । ते सर्वेऽपि सिद्धान्ता अन्योन्यसापेक्षाः सन्ति । सर्वेषां सम्मेलनेनैव क्रीडाया उपयोगिता सम्यक्तया ज्ञातुं शक्यते । अतएव सर्वेऽप्येते सिद्धान्ता अन्योन्यस्य परिपूरकाः सन्ति, न परस्परं विरोधिन इति समन्वयवादिनां पञ्चमः पक्षः ।

तदयमत्र संग्रहः—

क्रीडावृत्तिर्द्वितीया च सामान्या जन्मजा मता ।
शैशवादेव दृष्टा सा तुल्या पशुमनुष्ययोः ॥ १ ॥
अतिरिक्ता बहिर्याति शक्तिर्बालस्य क्रीडया ।
अतिरिक्तशक्तिवादोऽसौ स्पेन्सरमते मतः ॥ २ ॥
क्रीडामुखेन बालानां शक्तिः स्फूर्तिश्च वर्धते ।
शक्तिवर्धनसिद्धान्तः किम्सेन प्रतिपादितः ॥ ३ ॥

क्रीडनं पूर्वसज्जा वा जीवने प्रागवेक्षणम् ।
कार्लग्रूसमते चैव स्टर्न-ब्रांशमते तथा ॥४॥
जातेःक्रमविकासस्यावृत्तिः क्रीडासु क्रियते ।
पुनरावृत्तिसिद्धान्तः स्टन्लेहालेन घोषितः ॥५॥
एते सर्वेऽपि सिद्धान्ता अन्योन्यप्रतिपूरकाः ।
सामञ्जस्यमतं ह्येतन्नवैर्विज्ञैः समर्थितम् ॥६॥

**क्रीडाकार्ययोर्भेदः—**

क्रीडा कार्यात् कार्यं च क्रीडाया भिद्यते । किन्तु तयोर्भेदोऽतिसूक्ष्मो भवति । भेदस्य सौक्ष्म्यादेव एकस्य कार्यमपरस्य क्रीडा सम्पद्यते । अन्यस्य क्रीडा चान्यस्य कार्यं प्रतीयते । मनोविनोदार्थं पर्वतयात्रां कुर्वतां पर्वतारोहणं क्रीडारूपं, किन्तु तत्सम्भारमुद्वहतां श्रमिकाणां कृते तदेव पर्वतारोहणं कार्यरूपं जायते । कन्दुकेन क्रीडतां लोकानां दूरगतं कन्दुकमाहरतो जनस्य कन्दुकाहरणं कार्यमेव, क्रीडतां पुनः क्रीडैव । अत एव क्रीडाकार्ययोर्भेदो न वस्तुतन्त्रः किन्तु कर्तृभावनातन्त्रः । क्रीडाकार्ययोर्भेदस्त्रिविधो भवति ।

१. कार्यस्य किमपि कार्यव्यतिरिक्तमुद्देश्यं भवति । क्रीडायाः पुनः क्रीडैव उद्देश्यम् । नातिरिक्तं बाह्यं किमपि तत्रोद्देश्यम् । आनन्दावाप्तिः साफल्यं विजयलाभो वा क्रीडाया उद्देश्यमिति चेन्न । आनन्दादिकं न क्रीडाया उद्देश्यं किन्तु आनन्दानुभूतिरेव क्रीडात्मिका । किमपि बाह्यमुद्देश्यमभिलक्ष्य प्रवर्तमाना क्रीडापि कार्यमेव जायते ।

२. क्रीडा ह्यात्मस्फूर्तिजन्या भवति, न कार्यम् । बाह्यप्रेरणया प्रवर्तमाना क्रीडापि कार्यमेव जायते । यदि बलात् कश्चिद्बालकः क्रीडायां प्रवर्त्यते तदा स न तत्रानन्दं स्फूर्तिं वानुभवति । तदर्थं सा बलादभिनीयमाना क्रीडापि कार्यमेव सम्पद्यते ।

४. आनन्दानुभूतिः कल्पनाप्राधान्यं च क्रीडायास्तृतीयं लक्षणम् । कार्यं फलोदर्कं वस्तुप्रधानं च भवति । क्रीडा पुनरानन्दमात्रफला कल्पनाप्रधाना च भवति । यदा प्रयोजनान्तरानपेक्षं साहित्यसङ्गीतादिकं स्वान्तःसुखाय विधीयमानमानन्दमात्रफलकं भवति तदा तन्न कार्यं किन्तु

क्रीडात्मकमेव तत्। यदा पुनः क्रीडा प्रयोजनान्तरमुद्दिश्य प्रवर्तते तदा नानन्दमात्रफला सेति न क्रीडा, किन्तु कार्यमेव सा।

तदयमत्र संक्षेपः—

> कार्ये फलान्तरं लक्ष्यं क्रीडा लक्ष्यविवर्जिता।
> कार्यं क्रीडैव, क्रीडैव कार्यं कार्यार्थमेव चेत् ॥७॥
> आत्मस्फूर्तिकृता क्रीडा, कार्यं वाह्यप्रयत्नजम्।
> वाह्यप्रयत्नजा क्रीडा कार्यमेव न क्रीडनम् ॥८॥
> कलार्थं वा कला सृष्टा काव्यं काव्यार्थमेव वा।
> कला काव्यं च क्रीडैव तत्र कर्तापि क्रीडति ॥९॥
> परानन्दः परिस्फूर्तिः कल्पना प्रचुरा तथा।
> क्रीडैव यत्र सर्वं तत्, कार्यं वा स्यात् कलाथवा ॥१०॥

## क्रीडाप्रकाराः—

बालानां क्रीडास्तेषां प्रातिस्विकीं स्थितिं वातावरणं चानुसृत्यैव प्रवर्तन्ते। स्तनन्धयो बालः स्वशयनस्थित एव हस्तौ पादौ च चालयन्नगुंष्ठं वा चूषन् क्रीडति। तत्रानन्दमनुभवति हसति च। तस्येयं क्रीडा स्वात्ममात्राधीना। 'आत्मक्रीड आत्मरतिः' स बालः। तदनन्तर समीपस्थं क्रीडनकं अन्यद्वा वस्तुजातमवलम्ब्य स क्रीडति, आनन्दं चानुभवति। बाल्यावस्थाया इयं द्विविधापि क्रीडा व्यक्त्यन्तरानपेक्षिणी वैयक्तिकी क्रीडा। एका शरीरमात्रापेक्षिणी द्वितीया तद्व्यतिरिक्त-वस्तुजाता-पेक्षिणीति तयोर्भेदः।

वैयक्तिकीं क्रीडां विहाय द्वितीया सामूहिकी क्रीडा भवति। सामुहिकक्रीडायामपि अनुकरणात्मिका आविष्कारात्मिका चेति द्वौ भेदौ। तत्र पूर्वं बालाः सवयस्कानां अन्येषां वा क्रीडाविषयकं व्यापारमनुकुर्वन्तः क्रीडन्ति। साऽनुकरणात्मिका क्रीडा भवति। किञ्चित् कालान्तरमनुकरणं विहाय ते स्वतन्त्रतयाक्रीडामार्गानाविष्कुर्वन्तः क्रीडन्ति। एवं कैश्चित् क्रीडायाश्चतुर्विधो विभागः कृतः।

## क्रीडायाः पञ्चविधो विभागः—

कार्लगूसमहोदयेन तु प्रकारान्तरेण कीडाया अधोऽङ्कितः पञ्चविधो विभागः प्रदर्शितः—

१. परीक्षणात्मिका क्रीडा ( एक्सपेरीमैन्टल प्ले )
२. प्रधावनगत्यादियुक्ता क्रीडा।
३. रचनात्मिका क्रीडा ।
४. युद्धात्मिका साम्मुख्यात्मिका वा क्रीडा ( फाइटिंग प्ले )
५. मानसिकी क्रीडा।

परीक्षणात्मिकासु क्रीडासु बालः पदार्थान् पश्यति, गृह्णाति, इतस्ततो निदधाति, उत्क्षिपति, प्रक्षिपति वा। एवं पदार्थैः सह क्रीडंश्च स तेषां स्वरूपादीनां परिचयं प्राप्नोति । तत्र तस्येन्द्रियाणि विषयेषु सम्यगभ्यस्तानि भवन्ति। धावनादिगतियुक्तासु क्रीडासु बालका इतस्ततो धावन्तः क्रीडन्ति, लोष्ठादीनां प्रक्षेपणादिकं च कुर्वन्ति । तेन तेषां शरीरं सुगठितं पुष्टं बलिष्ठं च जायते । रचनात्मिकासु क्रीडासु बाला कदाचिन्मृत्तिकया गृहनिर्माणं कुर्वन्ति कदाचित् करगलनौकां रचयन्ति । कदाचिदन्येषां पदार्थानां निर्माणं कुर्वन्ति । एवं स्वयं पदार्थानां रचनाभ्यासेन तेषां ज्ञानं प्रवर्धते। मल्लयुद्धादयः पादकन्दुकादयश्च युद्धात्मिकासु सम्मुख्यात्मिकासु वा कीडासु गण्यन्ते।एतासु क्रीडासु प्रतिद्वन्द्विभिः सह विरोधाभावः पराजयेऽपि विक्षोभाभाव इति जयपराजययोः साम्यबुद्धिरुदेति या जीवनसंग्रामेऽत्यन्तमुपयोगिनी भवति।

इमाश्चतुर्विधाः शारीरिक्यः क्रीडाः । पञ्चमी मानसी क्रीडा ताभ्यो भिद्यते। सा चापि त्रिविधा। १ विचारात्मिका, २ उद्वेगात्मिका, ३ कृत्यात्मिका च । तत्र विचारप्रधाना यथा शतरञ्जादिक्रीडा। उद्वेगप्रधाना यथा नाट्याभिनयादिक्रीडा। कृत्यात्मिका च यथा हास्यकथासु हास्यविवर्जनम् । यो हास्यकथां श्रुत्वा हसति स पराजितो भवतीत्येवमादिनियमेन क्रियमाणा क्रीडाऽस्मिन् वर्गे समायाति।

तदयमत्र क्रीडाप्रकाराणां संग्रहः—

काचिद् वैयक्तिकी क्रीडा काचित् सामूहिकी तथा।
एवमेकत्र क्रीडानां विभागो द्विविधः कृतः ॥ ११ ॥
तत्र स्वदेहसम्बद्धा वस्त्वन्तरगता तथा।
वैयक्तिक्यपि बालानां द्विधा क्रीडा प्रदर्शिता ॥ १२ ॥

आविष्कारप्रधाना चानुकरणावलम्बिनी ।
शिक्षा सामूहिकी चापि द्विधैव परिकीर्तिता ॥ १३ ॥

कार्लगूसमहोदयकृतस्य विभागस्यायं संक्षेपः—

परीक्षणात्मिका कापि धावनादियुता परा ।
कापि द्वन्द्वप्रधाना च कापि वा रचनात्मिका ॥ १४ ॥
एवं चतुर्विधा क्रीडा कार्लगूसमहोदयैः ।
दैहिकी दर्शिता भिन्ना त्रिविधा चैव मानसी ॥ १५ ॥
क्वापि विचारप्राधान्यं क्वापि चोद्वेगमुख्यता ।
कापि कृत्यात्मिका चेति मानसी त्रिविधा मता ॥ १६ ॥

## शिक्षायां क्रीडायाः समावेशः—

पूर्वं क्रीडा शिक्षाविरोधिनीत्येवंविधा लोकानां धारणासीत् । किन्त्वस्मिन् युगे शिक्षा क्रीडयोरनिवार्यः सम्बद्धोऽभ्युपगम्यते । क्रीडामुखेनैव बालानां शिक्षणव्यवस्था कर्तव्या, नाध्ययनप्रधाना शिक्षा बालानां कृते हितावहा इत्ययं नव्यतमः शिक्षासिद्धान्तः । इममेव सिद्धान्तमवलम्ब्य नैकविधाः क्रीडाश्रिताः शिक्षणपद्धतयो नवैर्विज्ञैरा-विष्कृताः । आधुनिके युगे विशेषतो लघीयसां बालानां कृते क्रीडाश्रिता शिक्षापद्धतिरेव प्रशस्यते । प्रौढानामपि शिक्षायां क्रीडायाः मुख्यं स्थानमिति सर्वेष्वपि विद्यालयेषु क्रीडाया व्यवस्था अपरिहार्या भवति । सर्वेऽपि छात्रा अध्ययनानन्तरं कञ्चित्कालमवश्यं क्रीडन्त्विति नियमोऽद्यत्वे सर्वेष्वपि विद्यालयेषु दृश्यते । लघीयसां बालानां कृते षड्विधाः क्रीडाश्रिताः शिक्षणपद्धतयः प्रचलिताः सन्ति ।

## १. किण्डरगार्टनपद्धतिः—

क्रीडाश्रितासु शिक्षणपद्धतिषु किण्डरगार्टनपद्धतिः सर्वाभ्यो-ऽपराभ्यः प्राचीना । इयं शिक्षणपद्धतिः शर्मण्यदेशीयेन फ्रोबुल-महोदयेन शिशूनां कृते आविष्कृता । तां पद्धतिमवलम्ब्य बाला क्रीडाव्याजेनैव विद्यालयोपयोगिनां बहूनां विषयाणां सम्यग् ज्ञानं प्राप्नुवन्ति । चरित्र-निर्माणमपि च तेषां तत्र सम्यग् जायते । फ्रोबुल-महोदयात् पूर्वं

तद्देशेऽपि शिशूनामध्ययनपद्धतिर्दण्डप्रधाना भयाश्रिता चासीत्। किन्तु फ्रोबुल-महोदयेन किण्डरगार्टनपद्धतिमाविष्कृत्य शिशुशिक्षायामाश्चर्यकरं परिवर्तनं विहितम्। एतां पद्धतिमवलम्ब्य सञ्चाल्यमानेषु विद्यालयेषु क्रीडासुखेनैव विविधैः काष्ठखण्डादियोजनैरक्षराभ्यासः, पदार्थान्तरैर्गणनाभ्यासः, एवं चित्रादिसाधनैरितिहासादिपरिज्ञानं च शिशूनां सुकरं भवति। बालकाः सामूहिकरूपेण गीतानि गायन्ति, अभिनयं कुर्वन्ति, अन्याश्च विविधाः क्रीडाः कुर्वन्ति। शिक्षका विविधानि वस्तूनि बालेभ्यो ददति। तेषां कल्पनाशक्तेर्विकासाय विविधासु क्रीडासु तान् विनियोजयन्ति। बालाः कक्षायामेकत्र स्थिताः पाठं रटन्तश्च नातिमात्रं खिद्यन्ते किन्त्वितस्ततो गत्वा अन्यैर्बालकैः सह मनोविनोदं कुर्वन्ति, तेषां साहाय्येन स्वकार्यं च सम्पादयन्ति। अत एव बालकेभ्यस्ते विद्यालया गृहादप्यधिकं रोचन्ते। सहर्षं च तत्र नियमेन प्रत्यहं स्वयमेव गच्छन्ति बालाः।

## २. मोन्टसरी-शिक्षणपद्धतिः—

फ्रोबुल-महोदयस्यैव शिक्षणपद्धतिमाश्रित्य किञ्चित् परिवर्तनं च विधाय इटलीदेशनिवासिनी मोण्टसरी-नाम्नीविदुषी स्वदेशे शिशूनां कृते क्रीडाश्रितां शिक्षणपद्धतिमाविष्चकार। अस्यां पद्धतौ स्त्रिय एव शिक्षिकाः न पुरुषा इति प्रथमं वैशिष्ट्यम्। स्त्रीणां हृदयं सुकुमारं मातृत्वभावनोपेतं च भवतीति ता बालानां शिक्षणं स्नेहेन कुर्वन्तीति तत्र बाला आनन्दमनुभवन्ति ज्ञानं च सम्यगर्जयन्ति। क्रीडनकैः सह क्रीडन्त एव बालका वस्तूनां स्वरूपपरिचयादिकं सम्यक् प्राप्नुवन्ति। इन्द्रियाभ्यासेन ज्ञानार्जनं मोन्टसरीपद्धतेः द्वितीयं वैशिष्ट्यम्। 'डाइडेक्टिक आपरेटस' नाम्ना प्रसिद्धं शिक्षायन्त्रमप्यत्रोपयुज्यते। अस्मिन् यन्त्रे काष्ठनिर्मिता विविधाः पदार्था अन्ये चापि शिक्षोपयोगिनः पदार्था भवन्ति। तेषां साहाय्येन बाला पदार्थानां ज्ञानमर्जयन्ति। अधिकांशं कार्यजातं स्वहस्ताभ्यामेव कर्तुमत्र बालाः शिक्ष्यन्त इति तृतीयमस्याः पद्धते-र्वैशिष्ट्यम्। कक्षायां नियुक्ता च शिक्षिका बालानां सहायिकैव भवति। कार्यजातं बाला स्वयमेव सम्पादयन्ति।

### ३. डाल्टनपद्धतिः—

डाल्टनपद्धतिः क्रीडाश्रिता तृतीया शिक्षणपद्धतिः । अत्र विविधानां विषयाणामध्ययनार्थं कश्चन नियतः समयविभागो न भवति । नापि घण्टानादादिनियमो भवति । छात्रा यावदिच्छं कमपि विषयं स्वेच्छया पठन्ति । छात्राणां साहाय्यार्थं शिक्षका भवन्ति किन्तु ते स्वतः पठतां छात्राणां साहाय्यमेव कुर्वन्ति न तु स्वयं पाठयन्ति विषयम् । अनया पद्धत्या बालानां शक्तिविकासः सुकरो भवतीति लोकानां धारणा ।

### ४. प्रोजैक्टपद्धतिः—

क्रीडाश्रितासु शिक्षणपद्धतिषु प्रोजैक्टपद्धतिस्तुरीया पद्धतिरस्ति । इयमेव योजनापद्धतिरप्युच्यते । बालानां समक्षे विद्यालयकार्याणां जीवननिर्माणकार्याणां च सुश्लिष्टा योजना निधीयते । बालाश्च स्वेच्छानुसारं स्वयमेव निर्धारितानां योजनानां पूर्तिं कर्तुं प्रयतन्ते । अध्यापका उचितेष्ववसरेषु तेषां साहाय्यं कुर्वन्ति ।

### ५. अभिनयपद्धतिः—

अभिनयपद्धतिरपि क्रीडाश्रितासु शिक्षणपद्धतिषु प्रमुखा पद्धतिर्गण्यते । इयं पद्धतिर्विशेषत इतिहासादीनामध्ययने उपयुज्यते । अभिनयमुखेन इतिहासस्य परिज्ञानं सुकरं सुदृढं च जायते । अत एव विद्यालयेषु बालाः स्वयमभिनयं कृत्वा अन्यैः कृतमभिनयं दृष्ट्वा वा अनायासेनेतिहासस्य परिपूर्णं ज्ञानमर्जयन्ति । न च तत्र क्लेशमनुभवन्ति । नापि तद्विस्मरन्ति । तस्मादितिहासादिविषयाणां शिक्षणेऽतीवोपकारिणीयं पद्धतिः ।

### ६. बालचरपद्धतिः—

बालचरपद्धतिरपि क्रीडाप्रधानासु शिक्षणपद्धतिषु प्रधाना पद्धतिरस्ति । बालानामवकाशसमयस्य सदुपयोगं निर्दिशन्तीयं पद्धतिर्बालानां चरित्रनिर्माणेऽत्यन्तमुपयोगिनी भवति । सर्वेष्वपि विद्यालयेष्वद्यत्वे प्रायो बालचराणां सङ्गठनं भवति । ते हि बालचरा अवकाशकाले विविधानां शिक्षाप्रदानां जीवनोपयोगिनीनां च क्रीडानां योजनां कुर्वन्ति । तत्र च क्रीडामुखेनैव समाजसेवादिकार्यं कुर्वन्तोऽपूर्वं व्याव-

हारिकमनुभवमर्जयन्ति । बालचराणामेभिः सङ्गठनैः सामाजिककार्यैश्च समाजस्य देशस्य च महानुपकारो भवति ।

तदयमत्र संक्षेपः—

क्रीडा पूर्वं मतासीत् तु प्रायः शिक्षाविरोधिनी ।
किन्तु नव्ये युगे सैव जाता शिक्षोपकारिणी ॥ १७ ॥
शिशूनां तु कृते सर्वा शिक्षा क्रीडाश्रिता भवेत् ।
इति मत्वैव विज्ञैस्तैः कृताः पद्धतयो नवाः ॥ १८ ॥
आविष्चकार शार्मण्यः किण्डरगार्टनपद्धतिम् ।
फ्रोबुलो यत्र शिक्षायां क्रीडा सम्यक् प्रयुज्यते ॥ १९ ॥
इटलीदेशवास्तव्या देवी मोण्टसरी तथा ।
क्रीडामुखेन शिक्षायाः पद्धतिं प्रत्यपादयत् ॥ २० ॥
डाल्टनस्य तृतीया च, तुर्याभिनयपद्धतिः ।
योजनापद्धतिश्चैव, शैली बालचरस्य च ॥ २१ ॥
क्रीडामुखेन शिक्षायाः पद्धतिषट्कमेव च ।
मनोवैज्ञानिकैर्नव्यैः किञ्चिद् भेदेन दर्शितम् ॥ २२ ॥
पुरापि भारते वर्षे सिद्धान्तोऽयं सादृतः ।
दृश्यते पञ्चतन्त्रादौ कुमाराणां प्रशिक्षणे ॥ २३ ॥
सर्वं राजोचितं ज्ञानं कथाव्याजेन यच्छता ।
अपूर्वं कौशलं तत्र दर्शितं विष्णुशर्मणा ॥ २४ ॥
आसीद् गुरुकुले चापि धेनुपालनपूर्विका ।
शिक्षा क्रीडामुखेनैव सर्वविद्यासुशंसिनी ॥ २५ ॥

## प्रश्नाः

१–क्रीडाकार्ययोः को भेदः ।
२–कार्लगूसप्रतिपादितानां क्रीडाप्रकाराणां परिचयं लिखत ।
३–क्रीडाया आधारभूता के मनोवैज्ञानिकाः सिद्धान्ताः ।
४–क्रीडानां चतुर्विधो विभागः प्रतिपादनीयः ।
५–क्रीडाश्रितानां विविधानां शिक्षणपद्धतीनां विवेचनं कार्यम् ।

## नवमः परिच्छेदः

# शिक्षणम्

### शिक्षणस्योपयोगः—

धिगतपरिच्छेदेषु मूलप्रवृत्तीनां सामान्यप्रवृत्तीनां च वर्णनं विहितम्। सहजप्रतिक्रियानश्च तासामयं भेदः प्रदर्शितो यन्मूलप्रवृत्तीनां शिक्षाभ्यासबलात् परिवर्तनं सम्भाव्यते, सहजप्रतिक्रिया च सदा समानाकारैव जायते। ततश्च मूलप्रवृत्तीनां परिवर्तने शिक्षणस्योपयोग इति प्राप्तावसरं शिक्षणमत्र निरूप्यते। शिक्षणमपि वस्तुतः सर्वेषां प्राणिनां तुल्यं जन्मजातं च भवति। शैशवादारभ्य यावज्जीवनं कमपि नवं नवं व्यवहारजातं जनः शिक्षते। यत्र शिक्षणप्रवृत्तेः प्राचुर्यं भवति तस्य जीवनमपि तथैव विकसिततरं भवति। कीटपतङ्गादिषु शिक्षणक्षमताल्पीयसी भवतीति तेषां जीवनस्य विकासोऽपि स्वल्पतमो भवति मानवानां शिक्षण-क्षमता प्रचुरा भवतीति तेषां जीवनस्य विकासोऽपि तथैव प्रचुररूपेण भवति। मूलप्रवृत्तीनां परिवर्तनं स्वभावनिर्माणं च शिक्षणस्योद्देश्यम्। अत एव मानवचरित्रस्य विकासार्थं शिक्षणमत्यन्तमुपयुज्यते।

### शिक्षणप्रकाराः—

शिक्षणस्य सामान्यतस्त्रयः प्रकारा मनोवैज्ञानिकैर्निर्दिष्टाः सन्ति। तत्र प्रयत्नस्खलनमुखेन शिक्षणं प्रथमः प्रकारः अनुकरणद्वारेण शिक्षणं द्वितीयः प्रकारः। विचारमार्गेण शिक्षणं च तृतीयः प्रकारः। प्राणिनां निम्नतमेषु वर्गेषु प्रयत्नस्खलिताभ्यामेव शिक्षणमुपलभ्यते। चतुष्पदेषु अनुकरणात्मकं शिक्षणमपि दृश्यते। मानवेषु च त्रिविधमपि शिक्षणमुपलभ्यते। लघीयांसः प्रयत्नस्खलनाभ्यां शिक्षन्ते। कुमाराः प्रयत्नस्खलनाभ्यामपि शिक्षन्ते अनुकरणमार्गेणापि च शिक्षन्ते। यदा च ते विचारक्षमा भवन्ति तदा विचारमार्गेण स्वयं विचार्यापि शिक्षन्ते। एषां त्रयाणामपि शिक्षणप्रकाराणां संक्षिप्तं वर्णनमिह प्रस्तूयते येन शिक्षणप्रकाराणामुत्कर्षापकर्षतारतम्यं सम्यगधिगम्य शिक्षकाः बालानां शिक्षणे सफला भवेयुः।

## १. प्रयत्नस्खलनाभ्यां शिक्षणम्—

प्राणिनां निम्नवर्गेष्वयमेव शिक्षणप्रकार उपलभ्यते। पक्षिणां शावकाः प्रथमं भक्ष्यमभक्ष्यं च पदार्थजातं विवेक्तुमक्षमा यदेव वस्तु पश्यन्ति तत्रैव चञ्चुप्रहारं कृत्वा तद् भोक्तुं कामयन्ते। तस्मिन् प्रयत्ने लोष्ठशकलादिष्वपि चञ्चुप्रहारं कुर्वन्ति। स च तेषां बुभुक्षानिवृत्तिकरो न भवतीति ज्ञात्वा पश्चात् तत्र चञ्चुप्रयोगं न कुर्वन्ति। एवं प्रयत्नं कृत्वा स्खलितं चानुभूय क्रमादुचितपदार्थग्रहणं शिक्षन्ते। एवमन्येऽपि प्राणिनः कस्मिंश्चित् कार्यविशेषे असाफल्यं बहुवारमनुभूय पश्चात् साफल्यमार्गं प्राप्नुवन्ति। मानवानामपि समान एवायं शिक्षणप्रकारः। 'शतमारी भवेद्वैद्यः सहस्रमारी तु वैद्यराट्' इतीयं वैद्यविषयिणी लोकोक्तिरिममेव सिद्धान्तमवलम्ब्य प्रवृत्ता। चिकित्सामार्गे एव बहुवारमसाफल्यमनुभूय बहूंश्च रोगिणो यमसदनं सम्प्रेष्यैव वैद्यः स्वकार्ये नैपुण्यं लभते। ततश्चायं प्रयत्नस्खलिताभ्यां शिक्षणस्यैवायं प्रकारः। बालका अप्यनेनैव प्रकारेण बहुविधं ज्ञानमर्जयन्ति। तेषां स्खलितमभिसन्धाय शिक्षकैस्तत्रोपहासो न विधेयः। किन्तु पुनरप्युद्योगाय प्रोत्साहनीयाः।

## अनुकरणात्मकं शिक्षणम्—

अनुकरणात्मकः शिक्षणप्रकारः प्रयत्नस्खलितप्रकारादुत्कृष्टः। स्वयमेव प्रयत्नस्खलितमार्गेण सर्वं शिक्षेत चेन्मानवस्तर्हि कीटपतङ्गादिवत् समग्रेणाप्यायुषा स्वल्पतममेव शिक्षेत। स हि परेषामनुभवादपि लाभान्वितो भवति। परेषामनुभवस्य स्वव्यवहारे उपयोग एवानुकरणम्। मर्कटेष्वियमनुकरणप्रवृत्तिः प्राचुर्येण दृश्यते। तत्परीक्षणार्थं हैगार्टीनाम्ना प्रसिद्धेन विदुषा मर्कटेषु प्रयोगाः कृताः। एकदा एकस्यां नलिकायां कदलीफलं सन्निवेश्य नलिका वानराभिमुखं प्रक्षिप्ता। तेन वानरेण नलिकामुखात् कदलीफलं निःसारयितुं बहुधा प्रयतितं किन्तु साफल्यं नाधिगतम्। होराद्वयस्य प्रयत्नानन्तरं तेन नालिकाया उन्मुद्रिते मुखभागे दण्डिकां सम्प्रवेश्य फलं बहिर्निष्कासितम्। तस्येमां प्रक्रियां सहवासिनोऽन्येऽपि वानराः पश्यन्ति स्म। तदा तेन हेगार्टी महोदयेन पूर्ववदेव नलिकामुखे कदलीफलं सन्निवेश्य सा नालिकान्यस्य वानरस्य सम्मुखे प्रक्षिप्ता। पूर्ववानरस्यानुभवस्योपयोगं कुर्वता तेन दण्डिकां प्रवेश्य

झटित्येव फलं प्राप्तम् । एतेनोदाहरणेन वानराणामनुकरणात्मकं शिक्षणं सुकरं भवतीति प्रतीयते । अनुकरणात्मके च शिक्षणमार्गेऽल्पीयसा कालेन प्रचुरं ज्ञानमुपार्जितं भवतीति मार्गोऽयं प्रथमभागापेक्षया प्रशस्य इति निर्विवादम् ।

## ३. विचारात्मकं शिक्षणम्—

विचारात्मकं शिक्षणमुत्कृष्टतमं भवति । किन्तु केवलं मानवेष्वेव अस्य मार्गस्य प्राचुर्येणोपयोगः सम्भाव्यते, नान्येषु प्राणिषु । विचारात्मके शिक्षणमार्गे प्रतिभा, कल्पना चात्यन्तमुपयुज्यत इति तद्विरहिताः प्राणिनो विचारात्मके शिक्षणे समर्था न भवन्ति । प्रथमे प्रकारे शारीरिक एव प्रयत्नः शारीरिकमेव च स्खलनं भवति । किन्तु विचारात्मके शिक्षणमार्गे मानस एव प्रयत्नः मानसमेव च स्खलनं भवति । अत एव थार्नडाइक-महोदयेन विचारात्मकं शिक्षणमपि मानसप्रयत्नस्खलनात्मकमेव शिक्षणं भवतीत्युक्तम् । कश्चिद् ग्रन्थकर्ता कमपि ग्रन्थं रचयति । स पूर्वं तस्य रूपरेखां मनसि विनिश्चिनोति । ततश्च प्रयत्नं प्रारभते । एवं शिल्पी शिल्परचनायाः, सेनानी चाभियानयोजनायाः स्वरूपं मनसि निर्धार्यैव तत्र प्रवर्तते । सर्वोऽप्ययं विचारप्रधानो व्यापारः । सर्वेष्वप्येतेषु व्यापारेषु प्रतिभैवोपयोगिनी भवति । यत्र प्रतिभायाः प्राचुर्यं न भवति स प्रायोऽनुकरणमार्गेणैव शिक्षते ज्ञानं चार्जयति । बालकानां विचारशक्तिप्रवर्धनं शिक्षाया मुख्यमुद्देश्यमिति शिक्षकैर्बाल्यावस्थायामेव ते विचारात्मके शिक्षणमार्गे प्रवर्तनीयाः ।

## शिक्षणस्य नियमाः—

यथा शिक्षणस्य त्रयः प्रकारा एवं त्रयो नियमा अपि विद्वद्भिरवधारिताः सन्ति । तत्र थार्नडाइक-महोदयेन पातालदेशीयेन १. अभ्यासस्य नियमः, २. परिणामस्य नियमः ३. सन्नद्धतानियमश्चेति शिक्षणस्य त्रयो नियमा निर्धारिताः सन्ति । कस्यापि कार्यस्य शिक्षणमात्रेण तत्र कौशलं नावाप्यते किन्तु कौशललाभाय निरन्तरमभ्यासोऽपेक्ष्यते । दीर्घकालनैरन्तर्यादरसेवितादभ्यासादेव जनः कर्मसु कौशलं लभते । अभ्यासहीनस्य चोपार्जिता विद्या कौशलं वाञ्झसैव विलुप्यते । अतः

शिक्षणदाढ्यायाभ्यासः परमावश्यकः । परिणामस्य नियमोऽपि शिक्षणक्रम आवश्यकः । यदा कमपि कार्यं कृत्वा परिमाणे सन्तोषमनुभवति जनस्तदा तत्कारणाय पुनः प्रवर्तते । यत्र च कार्यं कृत्वापि परिणामे असन्तोष एव लभ्यते तत्र लोकस्य प्रवृत्तिः पुनर्न भवतीति बहुशोऽनुभूतम् । येनोपायेन स्वसाध्ये साफल्यमवाप्नोति तत्र सति प्रयोजने पुनरपि प्रवर्तते । येन मार्गेण चासाफल्यमनुभवति तं परित्यजति । एवं परिणामनियमेनापि नवनवानामर्थानां शिक्षणं सम्भवति । सन्नद्धतानियमश्चात्र तृतीयो नियमः । यत्कार्यार्थं जनः सन्नद्धो भवति तत्रैव तस्य प्रवृत्तिः साधीयसी भवति तत्रैव च स सन्तोषमनुभवति । यद्विषयिणी योग्यता यस्य न भवति स तत्र सन्नद्धो न भवति । तस्य तत्र प्रवृत्तिः साधीयसी न भवति । नापि स तत्कर्तुमुद्युक्तो भवति । अत एव शिक्षकैरध्यापनकालेऽयं नियमः सम्यगवधेयो भवति । बालकानां समक्षे तादृशा एव पाठा उपस्थापनीया येषां ग्रहणे तेषां योग्यता भवेत् । सर्वथैव नूतनाः कठिनाश्च पाठास्तेषां ग्रहणयोग्यतामविचार्यैव छात्राणां पुर उपस्थाप्यन्ते चेत् बालकास्तद्ग्रहणे समर्था न भवन्ति ।

तदयमत्र संक्षेपः—

संस्कारे मूलवृत्तीनां परिवृत्तावथापि वा ।
शिक्षणं साधनं यस्मात् ततस्तस्य विवेचनम् ॥ १ ॥
प्रयत्नस्खलितं चैवानुकरणं यथोत्तरम् ।
विचारात्मकमित्येवं शिक्षणं त्रिविधं मतम् ॥ २ ॥
अभ्यासस्य नियमो वा परिणामस्य वा तथा ।
योग्यतानियमश्चेति शिक्षणे नियमत्रयम् ॥ ३ ॥

थार्नडाइकमहोदयेनैते त्रयोऽपि नियमा विशेषतः प्रयत्नस्खलितशिक्षणक्रमे प्रदर्शिताः ।

### शिक्षणस्यान्यदपि भेदद्वयम्—

शिक्षणस्य य एते त्रयो भेदाः पूर्वं प्रतिपादितास्तद्व्यतिरिक्तं 'जेस्टाल्टवाद'—नाम्ना प्रथितं प्रातिभं शिक्षणं सहजक्रियासंबद्धं शिक्षणं चेति भेदद्वयमन्यदपि विज्ञैः प्रदर्शितम् ।

**जेस्टाल्टवादः—**

तत्र प्रातिभं शिक्षणं 'जेस्टाल्टवाद' नाम्ना व्यवह्रियते । अनुकरणं प्रयत्नादिकं चान्तरा कदाचित् प्रतिभावशेनाकस्मादेव किमपि शिक्षते जनस्तत्प्रातिभं शिक्षणमुच्यते । तद्विषये प्रयत्न-स्खलितादयः शिक्षणोपाया नोपयुज्यन्ते । तत्र प्रातिभं शिक्षणमेव कदाचिन् साधकं भवति । शिक्षणस्यायं मार्गो 'जेस्टाल्टवादः' इत्यभिधीयते ।

इदन्तु प्रातिभं ज्ञानं भारतीयेऽपि दर्शने ।
प्रशस्तपादे संप्रोक्तं प्रमाणादिकमन्तरा ॥ ४ ॥
शिक्षणस्य च ये भेदाः नियमा ये च दर्शिताः ।
तेऽपि किञ्चिद् विभेदेन दृश्यन्ते यत्र तत्र वै ॥ ५ ॥
क्रमेणैकेन सम्बद्धाः तेऽत्र नव्यैर्निरूपिताः ।
एतावदेव वैशिट्यं न तु काचिद् पूर्वता ॥ ६ ॥

**सहजक्रियासम्बद्धं शिक्षणम्ः—**

पलवल—[१८४६-१९३६] वाटसन, रेनरप्रभृतिभिर्मनोवैज्ञानिकैः सहजक्रियासम्बद्धं शिक्षणमपि शिक्षणोपायेषु प्रतिपादितम् । शशको ह्यतीव सरलो जन्तुर्भवति । न ततः कश्चिदपि बिभेति । बाला अपि शशकान्न विभ्यति । किन्तु यदा-यदा शशको बालकस्य समीपे आयाति तदा-तदा कश्चिद् भयङ्करः शब्दश्चेदुत्पाद्यते तदा शशकान्निर्भीकोऽपि बालः क्रमात्ततो बिभेति । भयङ्करशब्दनिमित्तकोऽयं भयसञ्चारः शशकशब्दयोःसाहचर्याच्छशकसम्बद्धो जातः । तदनन्तरं यदा-यदा बालकः शशकं पश्यति तदा-तदा भयमनुभवति ततः पलायते च । सहजक्रिया-सम्बद्धमिदं भयस्य शिक्षणम् । एवं भोजनदर्शनान्मुखे लाला-सञ्चारः स्वाभाविकः सहजक्रियात्मकश्च भवति । किन्तु कुक्कुराय यदा यदा भोजनं दीयते तदा-तदा मञ्जीरशब्दादिरूपः शब्दविशेषो नियमेन कञ्चित्काल प्रयुज्यते चेत्, तदा भोजनदर्शननिमित्तकोऽयं लाला-सञ्चारो मञ्जीरध्वनिसम्बद्धो जायते । ततश्च भोजनं विनापि मञ्जीरध्वनिमात्रेणापि श्वमुखे लाला-सञ्चारो दृश्यते । एवं सहजक्रियासम्बन्धेनापि नूतनं वस्तु शिक्षते जन इति सहजक्रियासम्बद्धोऽपि पञ्चमः शिक्षणमार्गो वाटसन-पलवलादिभिः स्वीकृतः ।

सहजक्रियासम्बद्धस्य शिक्षणस्यायं क्रमोऽधोऽङ्कितेन चित्रेण प्रदर्श्यते—

सहजक्रियासम्बद्धः शिक्षणक्रमः

अस्य चित्रस्य क-भागे शब्दश्रवणं, भोजनदर्शनं च ज्ञानकेन्द्रे उभयमपि सन्निहितं लालासञ्चाररूपां सहजक्रियां जनयति। चित्रस्य ख-भागे भोजनदर्शनं नास्ति। शब्दश्रवणमात्रमेवाभ्यासवशाज् ज्ञानकेन्द्रसन्निहितं तु, लालासञ्चाररूपां प्रतिक्रियां जनयति। एवं भोजनाभावेऽपि लालासञ्चारस्य योऽयं नूतनोऽभ्यासः सञ्जातः, नूतनं वस्तु वा शिक्षितं तत्र सहजक्रियासम्बद्धं शिक्षणमुपयुज्यत इति कैश्चिदयं पञ्चमोऽपि शिक्षणोपायः प्रतिपादितः।

तथा चायमत्र संक्षेपः—

कार्यं स्वयमनुष्ठाय स्खलनानि विशोध्य च।
शिक्षते जातु मार्गोऽयं यत्नस्खलितलक्षणः ॥ ७ ॥
परिणामे तु सन्तोषो अभ्यासश्च निरन्तरः।
तत्र सन्नद्धता चेति नियमानां त्रयं मतम् ॥ ८ ॥
दृष्ट्वा परक्रियां कश्चिद् अनुकुर्वंस्तथा च ताम्।
शिक्षते यत्र संप्रोक्तमनुकृत्यात्मकं तु तत् ॥ ९ ॥

अनुकृतिबु्द्धिमान्द्यं इति यद्यपि केचन ।
तथापि तत्र ये दक्षाः शिक्षणे ते विचक्षणाः ॥ १० ॥
प्रशस्तः शिक्षणोपायः विचारः प्रतिभाश्रितः ।
केवलं मानवे लब्धः स्खलितं तत्र मानसम् ॥ ११ ॥
सर्वा क्रियात्मिका शिक्षा न विचारात्मिका पृथक् ।
मानसस्तत्र यत्नादिरिति श्रीथार्नडाइकः ॥ १२ ॥
प्रातिभं शिक्षणं यत्र शिक्षते प्रतिभावशात् ।
जेस्टाल्टवादनाम्ना तत् प्रथितं शास्त्रवेदिनाम् ॥१३॥
सहजक्रियासम्बद्धमपि च वर्त्म पञ्चमम् ।
पलवलादिकैर्विज्ञै र्दर्शितं तु परीक्षणैः ॥१४॥

**शिक्षणप्रगतिः—**

विभिन्नेषु व्यक्तिषु शिक्षणस्य प्रगतिर्भिन्नरूपैव भवति । तत्र तेषां योग्यतादिवशाद् भेदः सञ्जायते । किन्त्वेकस्मिन्नपि पुरुषे सदा समानरूपेणैव शिक्षणप्रगति-र्न लभ्यते । कार्यस्य प्रारम्भे यदा स्वल्पोऽप्यभ्यासो जायते तदा वेगेन शिक्षणे प्रगतिर्भवति । ततश्च कञ्चित्कालं प्रगतिर्वेगेन न वर्धते किन्तु स्थिरप्राया भवति । यथा भोजनानन्तरं तस्य परिपाकाय कालोऽपेक्ष्यते एवमभ्यस्तस्य विषयस्य स्थैर्यायायं प्रगतेरवरोध आवश्यकः । अस्मिन्नवरोधकाले पूर्वाभ्यस्तो विषयः स्थिरो भवति । ततश्च पुनरपि यदि प्रयत्नं कुरुते तदा पुनरपि तत्र प्रगतिर्जायते । अयं प्रगतिक्रमो हस्तकौशलशिक्षणे विशेषतो लक्ष्यते । टङ्कणयन्त्राभ्यासे चायं क्रमः स्पष्टरूपेण विभाव्यते । विद्याभ्यासेऽपि तादृश एव क्रमो भवति प्रगतेः किन्तु स्पष्टरूपेण न प्रतीयते । यत्र प्रगतिरियं स्थिरप्राया भवति स प्रगतिप्राग्भार उच्यते । तारविद्याभ्यासे शिक्षणप्रगतेः प्राग्भारस्य अग्रिम पृष्ठे चित्रमेकं दीयते ।

अस्मिंश्चित्रे उपरि स्थिता रेखा तारसम्प्रेषणस्य अधोऽङ्किता च रेखा तारसङ्केतग्रहणस्य प्रगतिं प्रकाशयति । तारविद्याभ्यासे दशसप्ताहं यावद्वेगेन प्रगतिर्भवति ततश्च तत्रावरोध उत्पद्यते । स चावरोधोऽपि प्रायस्तावन्तमेवकालं व्याप्नोति । दशसप्ताहानन्तरं पुनरपि वेगेनाभ्यास-प्रगतिरारभ्यते । सा चाभ्यासस्तावद्वेगेन प्रवर्धते यावन्न परां काष्ठां

आप्नोति। पराकाष्ठाप्राप्तौ यथा मानवस्याकारादौ वृद्धिर्न भवति एवं तस्याभ्यासादावपि वृद्धिर्न सम्भवति।

### शिक्षणप्रगतेः कारणानि—

शिक्षणप्रगतिर्हि विनेयानामिच्छामपेक्षते। यत्र विषये विनेयानां बालकानामिच्छाभिरुचिर्वा भवति तत्र तेषां साधीयसी प्रगतिः स्वल्पेनाप्यायासेन जायते। यत्र च तेषामभिरुचिर्न भवति तत्र प्रचुरेऽपि प्रयत्नेऽनुष्ठीयमाने तादृशी प्रगतिर्न भवति। अत एव कस्मिन्नप्यभिनवे शिक्षणविषय उपक्रम्यमाणे सर्वतः प्राक् तत्र विनेयानां रुचिरुत्पादनीया। अभिरुचिजननाय प्रायः चतुर्विधा उपाया आश्रीयन्ते।

१—विषयस्योपयोगितादर्शनेन तत्रेष्टसाधनत्व-भावनोत्पादनम्।
२—विषयस्य बुद्धिग्राह्यतापादनम्। तत्कृतिसाध्यत्वं च।
३—अभिनवैरध्यापनप्रकारैर्विषयस्याभिनवत्वापादनम्।
४—तद्विषयेऽध्यापकस्योत्साहोऽभिनिवेशश्च।

इष्टसाधनत्वं कृतिसाध्यत्वं च कार्यमात्रे प्रयोजकमिति मीमांसायां निर्णीतम्। इदं मदिष्टसाधनं मत्कृतिसाध्यं चेति मत्वैव लोकः कार्ये प्रवर्तते नान्यथा। ततश्च शिक्षाविषये विनेयानामिष्टसाधनत्वबुद्धिस्तत्कृतिसाध्यत्वबुद्धिश्चावश्यकी। अस्य विषयस्य परिज्ञानेनायं लाभो मे

भविष्यति, अहं च विषयस्यास्य परिज्ञानं कर्तुं समर्थोऽस्मीति ज्ञाने सति विनेयस्य तत्राभिरुचिरुत्पद्यते। अभिनवैरध्यापनप्रकारैः, शिक्षकाणां तद्विषये उत्साहादिवशाच्च विनेयानां साभिरुचिर्वर्धते ततश्च तेषां शिक्षणं सुकरं भवतीति रुचिः शिक्षणे विशिष्यते।

ज्ञानक्रिययोः सहयोगोऽपि शिक्षणप्रगतेः प्रधानं निमित्तम्। अधीतस्य विषयस्य क्रियात्मकोऽभ्यासो ज्ञानस्य दार्ढ्यायावश्यकः। यथा-यथाभ्यासस्यावसरं लभते जनस्तथा-तथा तस्य ज्ञानं स्थिरं परिमार्जितं च भवति। अत एव साहित्यादिशिक्षणे लेखनस्याभ्यासः, भूगोलशिक्षणे मानचित्राणां निर्माणं, विज्ञानशिक्षणे प्रयोगाभ्यासः, आयुर्वेदशिक्षणे चातुरालयेऽभ्यास आवश्यको भवति। अभ्यासमुखेनात्मप्रकाशनमार्गं लभन्ते विनेयास्तेन च सुखं ते कठिनतरमपि विषयमात्मसात्कुर्वन्ति।

शिक्षणस्य प्रगतौ तदुचितं वातावरणमत्यन्तमावश्यकं भवति। जनाकीर्णे कोलाहलमये स्थाने शिक्षणं दुष्करं भवति। जनसम्पर्करहिते एकान्ते शान्तस्थाने शिक्षणस्थानं समीचीनं भवतीति प्रत्नशिक्षापद्धतौ वनप्रदेशे स्थितं गुरुकुलमेव समुचितं शिक्षास्थानं निर्धारितम्।

एवं समयोऽपि शिक्षणे प्रगतिनिमित्तं भवति। चित्तैकाग्र्यमेव कार्यसाधने निदानं, तच्च न सार्वकालिकं सम्भवति किन्तु स्वल्पकालमेव बाला मानसीमेकाग्रतां सम्पादयितुं क्षमन्ते। इति तावान् काल एव शिक्षणोपयोगी कालः। तस्मिन् काले चित्तैकाग्र्यात् सर्वमपि कार्यजातं बालकः साधुतया क्षिप्रं करोति। स्वल्पेनापि कालेन प्रचुरं ज्ञानं चार्जयति। तदुक्तम्:—

रुचिर्ध्यानं सदभ्यासो रीतिरायुः परिस्थितिः।
स्वास्थ्यं शिक्षोन्नतौ हेतुर्मिलिता न तु हेतवः ॥१५॥

## प्रश्नाः

१. शिक्षणस्य मानवजीवने किं वैशिष्ट्यम् महत्त्वं वा।
२. शिक्षणस्य के मुख्याः प्रकाराः।
३. प्रयत्नस्खलितपद्धत्या शिक्षणे के मुख्या नियमाः।
४. सहजक्रियासम्बद्धं शिक्षणं सोदाहरणं प्रदर्शनीयम्।
५. विचारात्मकं शिक्षणं पृथङ् न भवतीति सोपपत्तिकं दर्शनीयम्।

दशमः परिच्छेदः

# अवधानम्

**अवधानस्वरूपम्**--

मूलप्रवृत्तीनां परिवर्तने संस्कारे च शिक्षणमेव निमित्तमिति विगतपरिच्छेदे शिक्षणं विवेचितम् । तच्च शिक्षणमवधानायत्तं नावधानमन्तरा सम्भवतीति तद्विवेचनमिहप्रसङ्गप्राप्तम् । अवधानमालोचयद्भिर्मनोवैज्ञानिकैश्चेतनाक्षेत्रं वृत्ततुल्यं धाराप्रवाहसमं वा निर्धारितम् । लायडमार्गन-महोदयेन चेतनाक्षेत्रं वृत्तसदृशं परिकल्प्य तस्य केन्द्रभागोऽवधानविषयत्वेनावधारितः । केन्द्रस्थानं वृत्तक्षेत्रात् स्वल्पतरं भवति । चेतनाक्षेत्रे युगपद्बहवो विषया अप्यवतिष्ठन्ते येषां सम्मुग्धं सामान्यं ज्ञानमात्रं भवति । तेषु प्रयोजनविशेषात् कश्चिदेव विषयः कस्मिंश्चित् समये केन्द्रस्थानवर्ती भवति । यश्च यस्मिन् काले केन्द्रस्थानवर्ती भवति विषयः स एवावधानस्य विषयो भवति । तत्रैवावधानं केन्द्रितं भवति । तस्यैव चातिशयितं ज्ञानं तस्मिन् समये जायते । वृत्तस्य प्रान्तवर्तिनश्च विषयाः सामान्यतो ज्ञाता अपि न विशेषतोऽवधानविषयतामवगाहन्ते । किन्तु त एव प्रान्तवर्तिनो विषया यदि प्रयोजनविशेषात् केन्द्रस्थानमुपसर्पन्ति तदा त एवावधानविषयतां प्रतिपद्यन्ते । पूर्वश्च केन्द्रस्थानवर्ती विषयः केन्द्रं विहाय प्रान्तवर्ती सञ्जायते । यथा कुन्दुकक्रीडाकाले क्रीडाक्षेत्रं, क्रीडानियमाः, सहयोगिनो बाला अन्यच्च तदुपयुक्तं सर्वमपि वस्तुजातं क्रीडतां बालानां चेतनाक्षेत्रान्तर्गतं भवति । सर्वेषामपि सामान्यं ज्ञानं भवत्येव । तथापि कन्दुकमेव तत्कालं तेषां चेतनायाः केन्द्रस्थानमधितिष्ठति । तत्रैव तेषामवधानं केन्द्रितं भवति । चेतनायाः केन्द्रस्थानवर्तित्वात् कन्दुकमेवावधानविषयतावमगाहते नान्यत् किञ्चिदपि वस्तु । किन्तु यदि क्रीडायां कश्चिद्बाधः समुपस्थितो भवति, कलहो विवादो वा सञ्जायते तदा तत् कन्दुकं केन्द्रस्थानं परित्यज्य प्रान्तभागं प्रयाति, प्रान्तस्थाश्च विषया क्रीडानियमा सहयोगिनो बाला वा केन्द्रस्थानमुपसर्पन्ति । त एव च तदावधानस्य विषयाः सम्पद्यन्ते । एवमवधानस्य विषयाः सदैव चेतनायाः केन्द्रस्थानमधितिष्ठन्ति ।

जैम्समहोदयेन च वृत्तस्थाने नदीधारायाः सदृशं चेतनाक्षेत्रं परिकल्पितम्। तत्र च केचन विषया धाराया मध्यवर्तिनः केचन च तटवर्तिनः। ये मध्यवर्तिनो विषयास्त एवावधानस्य विषयाः।

केन्द्रवर्तिनो धारामध्यवर्तिनो वा विषया प्रान्तभागं तटदेशं वा, एवं प्रान्तवर्तिनो विषया मध्यभागं केन्द्रस्थानं वा कथमुपसर्पन्तीत्यत्र प्रयोजनविशेष एव प्रयोजकः। यदेव लोकस्यातिशयितं कार्यसाधकं भवति तदेव तस्य चेतनायाः केन्द्रस्थानमधितिष्ठति अवधानविषयतां चावगाहते। कस्मिन्नपि विषये बालानां रुचेरुत्पादनायावधानाय वा तत्र कश्चित् प्रयोजनसम्बन्धश्चेदाविष्क्रियते तदा बालाः सर्वमप्यन्यद्विहाय तत्परा भवन्ति तत्रैव तेषामवधानं च केन्द्रितं भवति। यथा कश्चिद्बालो गणिताद्बिभेति। स चेदेवमुच्येत यत् प्रत्यहं कार्षापणद्वयं तुभ्यं दास्यते। सप्तभिर्दिवसैर्यावतां कार्षापणानां संग्रहस्तवत्सविधे भविष्यति ततो द्विगुणतरमन्यदपि दास्यते। तदा स बालः स्वत एव तत्तद्गणनायां प्रवर्तते। तत्रैव तस्यावधानं केन्द्रितं भवति। अरुचिकरोऽपि विषयस्तत्कालं तस्य रुचिकरः सम्पद्यते। एवं प्रयोजनाविशेषाद् ये विषयाश्चेतनायाः केन्द्रस्थानमानीयन्ते त एव तत्कालमवधानस्य विषया भवन्ति। येषां पुनः प्रयोजनमवसितं भवति ते केन्द्रस्थानं विहाय प्रान्तवर्तिनो जायन्ते तेषामवधानविषयतापि च परिसमाप्यते।

तदुक्तम्—

वृत्तक्षेत्रसमा प्रोक्ता चेतना मार्गनेन वै।
जेमसेन च संप्रोक्ता नदीधारेव चेतना ॥१॥
तत्रावधानविषयाः केन्द्रस्था मध्यवर्तिनः।
सामान्यज्ञानमात्रं च प्रान्तानां तटवर्तिनाम् ॥२॥
प्रयोजनाच्च मध्यस्था जायन्ते तटवर्तिनः।
प्रयोजनावसाने च मध्यस्थास्तटवर्तिनः ॥३॥

## अवधानस्य वैशिष्ट्यम्—

१. प्रयत्नापेक्षिता—सर्वमप्यवधानकार्यं प्रयत्नापेक्षं भवति। यदैव कस्मिंश्चिद्विषयेऽवधानाय चेष्टते जनस्तदैव तत्र प्रयत्नविशेषस्यापेक्षा जायते। स च क्वचिद्बुद्धिपूर्वकः प्रयत्नः क्वचिच्च स्वाभाविकः प्रयत्नः। बुद्धिपूर्वकमवधानाय प्रयत्नेऽनुष्ठीयमाने तत्र शक्तेरतिशयितो व्ययो भवति तस्मादत्र शीघ्रमेव श्रान्तिमनुभवति जनः। सहजेऽप्यवधान-

प्रयत्ने शक्तिव्ययस्तु भवत्येव किन्तु स स्वल्पतर एव भवतीति न तादृशीं परिश्रान्ति जनयति। अवधानं यद्यपि मानसो व्यापारस्तथापि तत्र तदनुकूला दैहिका व्यापारा अपि दृश्यन्ते। अवधानाय प्रयतमानो जनः स्वीयैर्दैहिकैर्व्यापारैर्लक्ष्यते यदयमवधानपरोऽस्ति न वा। सैनिका अभिरक्षिणो वा यदा कस्मिंश्चित्कार्यविशेषे नियोज्यन्ते तदा सर्वतः प्राक 'सावधान' इत्यात्मकेनादेशेन तेषामवधानं प्रयोज्यते। तत्र च तेषां केचन दैहिका व्यापारविशेषास्तेषां सावधानतासूचका भवन्ति। एवं सर्वेष्वपि व्यापारेषु सावधानतासूचिकाश्चेष्टा दृश्यन्ते। सभायां ये श्रोतारो व्याख्यानश्रवणे सावधाना भवन्ति ये च तद्विपरीता भवन्ति तयोरुभयोरपि भेदस्तच्चेष्टाविशेषैरेव ज्ञायते। सावधानानां शरीरं सरलं, अक्षिणी विस्फारिते, ग्रीवा अग्रे प्रसृता, अङ्गानि च कठिनानीव भवन्ति। तद्विपरीतमसावधानानां पुनः शरीरं शिथिलं, अक्षिणी मुद्रिते चलायमाने वा भवतः। एवं चेष्टाभिरेव सावधानतानवधानता चानुमीयते।

२. विश्लेषणात्मिका वृत्तिः—अवधानकाले जनस्य विश्लेषणात्मिका मनोवृत्तिरुद्भूता भवति। अवधीयमानस्य विषयस्य यावन्त्यङ्गानि च सम्भवन्ति तेषां विश्लेषणं कृत्वा साङ्गोपाङ्गं तद्विषयस्याध्ययनाय चेष्टतेऽवधानवान् जनः। ग्रन्थलेखने सामान्यतः शब्दाः प्रयुज्यन्ते। किन्तु यदि तत्र कश्चिदवधेयः शब्द विशेषः समायति तदा तस्य प्रकृतिप्रत्ययादिविभागं कृत्वा विवेचयति लेखकः। प्रतिदिनमाकाशमार्गाद् गच्छद् वायुयानं पश्यति जनः। किन्तु यदा सावधान क्वचित् तद् द्रष्टु लभतेऽवसरं तदा तस्याङ्गप्रत्यङ्गानां विश्लेषणं कृत्वा तदवलोकयितुं विज्ञातुं च प्रयतते जनः। एवं विश्लेषणात्मिका वृत्तिरवधानस्य द्वितीयं वैशिष्टयम्।

३. संश्लेषणवृत्तिः—न केवलं विश्लेषणात्मिकैव वृत्तिरवधानस्य किन्तु संश्लेषणवृत्तिरपि तत्रोपलभ्यते। विश्लेषणं संश्लेषणायैव भवति। वायुयानस्याङ्गानां विश्लेषणं सर्वेषामङ्गानां संश्लेषणमुखेन वायुयानस्य स्वरूपपरिज्ञानार्थमेव भवति। शब्दस्य प्रकृतिप्रत्ययादिरूपेण विश्लेषणं तस्य परिनिष्पन्नस्वरूपस्य परिज्ञानायैव भवति। इमे विश्लेषणसंश्लेषणवृत्ती नित्यं सहचारिण्यौ न विभागेन तिष्ठतः। बालाः प्रौढाश्चापि प्रत्यहमहर्निशं वा मानसीमपि सृष्टिं विरचयन्ति। तेषामियं मानसी सृष्टिर्विश्लेषणवृत्तिकृतैव भवतीति अवधानकाले जन उभयविधामपि वृत्तिमवलम्बते।

४. परिवृत्तिपर्यवसायिता—यद्यपि मनोवृत्तीनामेकाग्रताप्रधानमवधानं भवति किन्तु विश्लेषणात्मकत्वान्न कूटस्थरूपेणैकत्र चिरमवधानं सम्भवति। एकस्मिन्नपि विषयेऽवधीयमाने चित्तं तस्याङ्गेषु इतस्ततो विधावति। कदाचित् किमप्यङ्ग विचारयति कदाचिच्चाङ्गान्तरं विवेचयति। एवमेकविषयमेकाग्रं च चित्तमपि तत्तदङ्गोपाङ्गविवेचनपरं भवतीति परिवृत्तिपर्यवसायितापि वैशिष्ट्यान्तरमेवावधानस्य।

५. सप्रयोजनता—एवं प्रयोजनविशेषात् प्रान्तस्थानां विषयाणां केन्द्रस्थाने आनयनमेवावधानमिति पूर्वं प्रतिपादितम्। तच्च प्रान्तस्थानां विषयाणां केन्द्रोपसर्पणं प्रयोजनविशेषादेव भवतीति प्रयोजवमवधानस्यावश्यकं वैशिष्ट्यम्। किञ्चिदपि प्रयोजनमभिलक्ष्यैव सावधानतया जनस्तत्साधनाय प्रयतते। येषां समक्षे किञ्चिदपि प्रयोजनं न भवति तेषामवधानसिद्धिरपि न भवति। सर्वदैव चञ्चलं चित्तं तेषामितस्ततोऽभिधावति। अतो लक्ष्यहीनता मनसश्चाञ्चल्यं प्रयोजयति। तद्विपरीता च सोद्देश्यताऽवधानप्रयोजिका भवति।

## अवधानस्य हेतवः—

कार्यमात्रस्य किञ्चिदन्तरङ्गं किञ्चिच्च बहिरङ्गं कारणं भवति। एवमवधानस्याप्यन्तरङ्गं बहिरङ्गं च द्विविध कारणं भवति। तत्रान्तरङ्गमेकमेवावधानकारणं बहिरङ्गं च पञ्चविधं तत्र कारणम्। बहिरङ्गेषु कारणेषु १ विषयस्य तीव्रत्वं, २ परिमाणं ३ परिवर्तनं, ४ आवृत्तिः ५ नवीनत्वं, चेति पञ्चकारणानि गण्यन्ते।

१. विषयस्य तीव्रत्वम्—तीव्रतरा विषयाः सपद्येवावधानमाकर्षन्ति क्षीणतरा विषया न तथावधानाकर्षणाय प्रभवन्ति। उच्चतरः शब्दः सूक्ष्मशब्दापेक्षया शीघ्रमवधानमाकर्षति। तीव्रो विद्युत्प्रकाशो दीपप्रकाशापेक्षयाधिकमवधानभाजनम् भवति। सुगन्धापेक्षया तीव्रो गन्धः, मन्दस्मितापेक्षया च मुखर हास्यमवधानप्रयोजकं भवति।

२. एवं परिमाणाधिक्यमप्यवधानतारतम्ये प्रयोजकं भवति। कुटीरपरिमाणादधिकमाकर्षकं भवति प्रासादानां परिमाणम्। विज्ञापनेषुस्थूलानामक्षराणां प्रयोगोऽवधानस्याकर्षणायैव विधीयते। एव बालानां पुस्तकेष्वपि स्थूलतराणामक्षराणां प्रयोगस्तेषामवधानसौकर्यायैव क्रियते।

३. परिवर्तनम्—विषयस्य परिवर्तनमप्यवधानाकर्षणजनकं भवति। पठतो बालकस्य सविधे घटिकायन्त्रं सन्निहितमस्ति। तस्य गतिपरिचायकं टिक् टिक् शब्दं शृण्वन्नपि तत्रावधानं न ददाति। किन्तु यद्यकस्मादेव शब्दोऽयं निरुध्यते तदा सपद्येवावधानमाकृष्टं भवति तस्य परिवर्तनस्य निमित्तं चानुसन्धातुं प्रवर्तते बालः। एवं विषयस्य परिवर्तनमवधान-प्रयोजकं भवतीति पाठ्यपुस्तकेषु विद्यालयेषु च विषयाणां परिवर्तन-मावश्यकं भवति।

४. आवृत्तिः—विषयस्यावृत्तिरपि तत्रावधानप्रयोजिका भवति। अभ्यावृत्या यो विषयो बहुवारं सम्मुखे आयाति तत्रावश्यमवधानं भवति लोकस्येति कृत्वैव विज्ञापकाः समाचारपत्रादिषु मुहुर्मुहुः विज्ञापनानि प्रकाशयन्ति। अध्यापकाः पाठस्य विषयं, व्याख्यातारश्च व्याख्यानस्य प्रधानं विषयं भूयो भूय आवर्तयन्ति।

५. नूतनता—नूतनतापि नूनमवधानप्रयोजिका भवति। प्रत्यहमनु-भूयमानाद् भिन्नं नूतनं किमपि वस्तु दर्शनसमकालमेवावधानमावर्जयति। प्रत्यहं नूतनानां समाचाराणामुपलब्धिरेव समाचारपत्रेष्ववधानप्रयोजिका भवति। एवं नूतनः पुरुषः, नूतनं, पुस्तकं, नूतनं सर्वमपि वस्तुजातमवधा-नावर्जक भवतीति नवीनत्वमप्यत्रोपयुज्यते।

६-७. अवधानस्य बहिरङ्गेषु कारणेषु विरोधो गतिशीलत्वं चेति द्वयमन्यदपि निमित्तं कैश्चिदभ्युपगतम्। चित्रस्य वर्णाः सामान्यतो ऽवधानस्यावर्जका भवन्ति किन्तु यदि तत्र विरुद्धयोर्वर्णयोः समावेशो भवति तदा तच्चित्रं विशेषतोऽवधानमावर्जयति। लोकविपरीता आचारा व्यवहाराश्चापि यथा झटित्यवधानमावर्जयन्ति न तथा लोका नुरूपा इति कृत्वैव बहवो जना लोकोत्तरमाचारं वेषविन्यासादिक चाद्रियन्ते। गान्धिमहोदयो गृहस्थोऽपि कौपीनधारी, राजनीतिनायकोऽपि च दिगम्बरकल्प आसीदिति लोकोत्तरत्वमपि तत्र सर्वेषामवधानमावर्जयति स्म। एवं स्थिरपदार्थापेक्षया गतिशीलाश्चलायमानाः पदार्था सारल्येना-वधानमावर्जयन्ति। चित्रपटेषु स्थिरचित्रापेक्षया चलचित्रमधिकमवधा-नयोग्यं भवति। अत एव व्याख्यानावसरे व्याख्यातारोऽध्यापनावसरेषु चाध्यापका विविधमभिनयन्त एव श्रोतॄणामवधानमावर्जयन्ति।

**अन्तरङ्गमवधानसाधनम्—**

एतानि सप्तविधानि बहिरङ्गकारणान्यवधानस्य । तत्रान्तरङ्गं कारणं चाभिरुचिरेव प्रातिस्विकी । येषु विषयेष्वभिरुचिर्भवति लोकस्य तत्रैव तस्यावधानं भवति नान्यत्र । इयं हि रुचिर्न ज्ञानात्मिका नापि क्रियात्मिका किन्तु संवेदनरूपैव । ज्ञानं रुचिकरं भवितुमर्हति, अरुचिकरमपि भवितुमर्हति । न केवलं रुचिरूपं तत् । एवं क्रियापि अरुचिकरी रुचिकरी च भवितुमर्हति । एवं ज्ञानक्रियाभ्यां भिन्ना तज्जन्या च मनोभावनाभिरुचिपद्वाच्या भवति । सा चाभिरुचिर्नैसर्गिकी चार्जिता चेति द्विविधा भवति । नैसर्गिकी रुचिर्मूलप्रवृत्त्याप्ता भवति । स्वादिष्टे भोजने सर्वेषां प्राणिनां नैसर्गिकी अभिरुचिर्भवति । क्रीडायां द्वन्द्वप्रवृत्तौ च बालानां स्वाभाविकी अभिरुचिर्भवति । यत्र चाभिरुचिर्भवति तत्रावधानमनायासेनैव सम्पद्यते । अर्जिताभिरुचिः प्रयत्नसम्पाद्या भवति । हरितपीतादिवर्णानां, चित्राणां वावलोकने बालानां नैसर्गिकी रुचिरुपलभ्यते । ते विविधा वर्णाः, तानि च चित्राणि यद्यक्षर-रचनायां योज्यन्ते तदाक्षरेष्वपि बालानामर्जिता रुचिरुत्पद्यते सुखं च ते अक्षराणि गृह्णन्ति । एवमियमर्जिताभिरुचिस्तेषामक्षराभ्यासेऽवधानप्रयोजिका भवतीति बालानामक्षराभ्यासपुस्तकेषु विविधानां वर्णानां चित्रादीनां चोपयोगो विधीयते ।

तदयमत्र संग्रहः—

> हेतु-र्द्विधावधानस्य बाह्याभ्यन्तरभेदतः ।
> बाह्यः पञ्चविधस्तत्र एक आभ्यन्तरः पुनः ॥४॥
> विषयस्यायतितीव्रत्वं परिमाणं विवर्तनम् ।
> तदावृत्तिर्नवीनत्वं पञ्च बाह्या नियामकाः ॥५॥
> रुचिराभ्यन्तरो हेतुरवधाने प्रयोजकः ।
> द्विविधा सापि संप्रोक्ता नैसर्गिक्यर्जिता तथा ॥६॥
> रुचिः पूर्वानुभूतेषु स्वार्थसम्बन्धयोजनात् ।
> क्षीणा परिचयाधिक्यात् कौतुकान्नूतनेष्वपि ॥७॥

**अवधानस्य भेदाः—**

रुच्यपेक्षमवधानमिति रुचिद्वैविध्यादवधानमपि ऐच्छिकमनैच्छिकं चेति द्विविधं भवति । प्रयत्नं विनैव यदि क्वचिदकस्मादेवावधानं याति

तदनैच्छिकमवधानमुच्यते । कश्चिदरिक्तो ध्वनिः, तीव्रो गन्धः, चाकचिक्यजनक उग्र आलोको वा हठादेवावधानमाकर्षति इदं सहजमनैच्छिकमवधानम् । मात्रा, परिवर्तनं, स्वसम्बन्धश्चानैच्छिकस्यावधानस्य नियामकं तत्वत्रयम् । मन्दप्रकाशापेक्षया तीव्रः प्रकाशः, मध्यमशब्दापेक्षया तीव्रः शब्दः,मन्दवर्णापेक्षया च तीव्रो वर्णोऽनायासेनैववाधानमाकर्षतीति तत्रानैच्छिकेऽवधाने विषयाणां मात्रैव नियामिका । एवं परिवर्तनमप्यवधानाकर्षकं भवति । यदा बालोऽत्यर्थं रोदिति तदा तस्य सान्त्वनाय किमपि पुष्पादिकं क्रीडनकं वा नूतनं वस्तु तत्समक्षं निधीयते । तेन परिवर्तनेन तस्यावधानं तत्र केन्द्रितं भवति । ततश्च रोदनं विहाय स तत्र रमते । एवं स्वसम्बन्धविशेषोऽप्यवधाननियामको भवति । सर्वेऽपि गृहवासिनः बालकस्य सम्बन्धिनो भवन्ति किन्तु मातरि शिशूनां नैसर्गिकी प्रीतिः । मनोहरतमैः क्रीडनकैः क्रीडन्तोऽपि, मधुराः कथाः शृण्वन्तोऽपि बाला यदा मातरं पश्यन्ति तदा द्रुतमेवान्यत् सर्वं विधूय तेषामवधानं तत्र केन्द्रित भवति । अत्र सम्बन्धविशेषायत्तमवधाननियन्त्रणम् ।

अवधानस्य द्वितीयो भेद ऐच्छिकावधाननाम्ना व्यवह्रियते । अनैच्छिकेऽवधाने प्रयत्नस्यापेक्षा न भवति किन्त्वैच्छिकमवधानं सदैव प्रयत्नसापेक्षं भवति । जीवनस्य प्रमुखानि कार्याणि प्राय ऐच्छिकेनावधानेनैव सम्पन्नानि भवन्ति । इदमप्यवधानं पूर्वं स्थूलविषयं, ततः सूक्ष्मविषयं ततश्च भावात्मकमिति यथाक्रमं विकसितं भवति । १ पात्रस्य प्रस्तुतत्वं, २ विषयस्य नूतनत्वं, ३ विषयस्य प्राबल्यं, ४ पात्रस्य स्वस्थता चेति चतुष्टयमैच्छिकस्यावधानस्य नियामकं भवति ।

१. पात्रस्य प्रस्तुतत्वम्—प्रतिपाद्यविषयग्रहणाय मनसः प्रस्तुत्वमप्रस्तुतत्वं वा तत्रावधानस्य मुख्यं नियामकम् । यदि विषयग्रहणाय प्रस्तुतं मनस्तदा झटित्येव तत्रावधानं भजते नान्यथा । कस्याप्यागमनाय प्रतीक्षमाणश्चेत् कश्चिदवतिष्ठते तदा दूरादपि तस्य पदध्वनिं श्रुत्वा तत्रावधानं केन्द्रितं भवति । तत्र मनसः प्रस्तुतत्वमेवावधानप्रयोजकम् । अकस्मादेव कस्यचिन्मित्रं समायाति तदाऽसावधानविषयतां नाप्नोति । तस्य कण्ठध्वनिमपि निशम्य सहसा न विश्वसिति । शिक्षायां अवधानस्यायं नियमोऽतीव महत्वपूर्णोऽस्ति । अध्यापनात् पूर्वं बालानां चित्तवृत्तिविषयाभिमुखी सम्पादनीया । तदैव बालास्तस्य विषयस्य ग्रहणे समर्था भवन्ति नान्यथा ।

२. नवीनत्वम्—विषयस्य नवीनत्वमपि बालानामवधानाकर्षणे प्रमुखं निमित्तं भवति । नूतनं वस्तु स्वत एवावधानमाकर्षति । ततश्चैच्छिकेऽप्यवधाने विषयस्य नूतनत्वमवधानाकर्षणे सफलं भवति । विद्यालयेषु पाठ्यविषयस्य निर्धारितत्वात् प्रायो नूतनं वस्तु विहाय तदेवैकं वस्तु पुनः पुनरपि अध्यापनीयं भवति, तथापि निपुणा अध्यापका-स्तदेव वस्तु भूयो भूय अध्यापयन्तोऽपि शैलीभेदात् तत्र नूतनामावे-शयन्ति । येऽध्यापकाः शैलीभेदादेकमपि वस्तु नूतनत्वेनाध्यापयन्ति त एवाध्यापने सफला भवन्ति ।

३. विषयस्य प्राबल्यम्—यो हि पदार्थोऽवधानस्य विषयो भवति तस्य प्राबल्यं दौर्बल्यं चावधानस्य प्राबल्यदौर्बल्यप्रयोजकं भवति । विषया बाह्या आभ्यन्तराश्च द्विविधा अपि भवितुमर्हन्ति । गाढवर्णानि चित्राणि बालानामवधानाकर्षकाणि भवन्तीत्ययं बाह्यः प्रबलो विषयः । एवं परीक्षायां प्राथम्यलाभाय कश्चिद्बालकोऽत्यधिकं परिश्रमं करोति । अत्राभ्यन्तरः प्रबलो विषयः । दण्डभयात् पारितोषिकलोभाद्वापि बाला बहूनि कार्याणि कुर्वन्ति तत्रापि विषयाणां प्राबल्यमेव तेषामवधान-तारतम्यप्रयोजकं भवति ।

४. पात्रस्य स्वस्थता—अवधानकाले पात्रस्य शारीरिकं मानसं च स्वास्थ्यमनिवार्यमेव । शरीरेण मनसा च स्वस्थ एव जनोऽवधाने समर्थो भवति नास्वस्थः । अस्वस्थस्य बालकस्यावधानं कस्मिन्नपि विषये न भवति । स्वस्थानामपि पुरुषाणां मनः शरीरं च प्रातःकाले स्वस्थतरं भवतीति तस्मिन् काले सर्वेषामप्यवधानं सुकरं भवति ।

## ऐच्छिकस्यानैच्छिकत्वम्—

ऐच्छिकमवधानं पूर्वं यत्नसापेक्षं भवति । अनैच्छिकं प्रयत्ननिरपेक्षं रुचिसापेक्षं च भवति । किन्तु वस्तुतोऽवधानमात्रे रुचिर्निमित्तं भवतीति ऐच्छिकेऽप्यवधाने कालान्तरे प्रयत्ननिरपेक्षा रुचिरेव निमित्ततां भजते । अत एव बालानामैच्छिकमप्यवधानमभ्यासवशात् कालान्तरेऽनैच्छिकतां प्रपद्यते ।

ऐच्छिकमनैच्छिकं च द्विविधमवधानं पूर्वं प्रतिपादितम् । तत्रा-नैच्छिकमपि सहजमनैच्छिकं बाध्यमनैच्छिकं चेति द्विविधं भवति । तत्र येषामर्थानामुपस्थितौ जनानां सहजा मूलप्रवृत्तयश्चरितार्था भवन्ति

ते सहजतयैव लोकावधानयोग्या भवन्ति । न तत्रावधानाय यत्न अपेक्ष्यते इति तत्र सहजमनैच्छिकमवधानं भवति । किन्तु कदाचिदिच्छाविपरीतमपि बाध्यमानमिवावधानमनिष्टेषु विषयेषु आकृष्यते तद्बाधितमनैच्छिकमवधानं भवति। अध्ययने संलग्नश्छात्रोऽनभिमतमपि आकाशवाणीगानं श्रोतुं बलादिव प्रेर्यते । तद्बाधितमनैच्छिकमवधानं भवति । कदाचिद्बाह्योत्तेजनमन्तरापि आन्तरिकैः कारणैरप्रियेषु विषयेषु लोकस्यावधानं भवति बलान्निवार्यमाणमपि च तत्रैव सविशेषं केन्द्रितं भवति तन्मनोदौर्बल्यस्य ज्ञापकम् । तन्न चेन्निरुध्यते कालेन तदा बहुधोन्मादकरमपि जायते ।

एवमैच्छिकमवधानं सामान्यतः प्रयत्नसापेक्षं भवति । कस्मिन्नपि कार्यविशेषे पूर्वं प्रयत्नविशेषेणैवावधानं सुस्थिरं भवति । किन्तु दीर्घकालनैरन्तर्यसेवितादभ्यासात् तदप्रयत्नसाध्यमिव सहजं सम्पद्यते । पूर्वं दुष्करमप्यवधानमभ्यासे सति सुकरं जायते । तच्चैच्छिकमपि प्रयत्ननिरपेक्षमवधानमुच्यते ।

तदयमत्र संग्रहः—

ऐच्छिकमवधानं च तथानैच्छिकमेव च ।
अवधानं द्विधा प्रोक्तं रुचेर्द्वैविध्ययोगतः ॥८॥
मात्रया परिवर्तेन स्वार्थसम्बन्धहेतुतः ।
अनैच्छिकमवधानं हेतुत्रयनियन्त्रितम् ॥९॥
प्रस्तुतत्वं नवीनत्वं प्राबल्यं स्वास्थ्यमेव च ।
एतच्चतुष्टयं प्रोक्तमैच्छिकस्य नियामकम् ॥१०॥
ऐच्छिकं यत्नसापेक्षमनैच्छं रुचिसंश्रितम ।
सम्पूर्णं जायतेऽभ्यासादैच्छिकमप्यनैच्छिकम् ॥

## अवधानविषयकाणि परीक्षणानि—

अवधानस्य विस्तारादिविषये पाश्चात्यैर्मनोवैज्ञानिकैर्विविधानि परीक्षणानि कृतानि । तद्विवेचनमपीहोपयोगीति प्रदर्श्यते ।

क. अवधानस्य विस्तारः—युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति अस्नाकं नैयायिकानां सिद्धान्तः । किन्तु नवैर्वैज्ञानिकैरवधानस्य विस्तारविषये यानि परीक्षणानि कृतानि तैरिदं समर्थितं यदेकस्मिन् काले प्रायः पञ्च वस्तून्यप्यवधानविषयतां प्रतिपद्यन्ते । पञ्च विन्दवः,

पञ्च रेखाः, पञ्चाक्षराणि वा पलस्य शतांशकालपर्यन्तमपि सम्मुखे स्थाप्यन्ते चेत्तेषां सकृदपि ग्रहणं सम्भवति। एवं पञ्च शब्दा अन्ये वा पञ्च पदार्था अपि सकृत्प्रयत्नेनावधानविषयाः सम्भवन्ति। एवं पञ्च विषयपर्यन्तमवधानस्य विस्तारः परीक्षणैः समर्थितः। किन्तु प्रत्ने काले शतावधानिनोऽपि पुरुषा भवन्ति स्म इति श्रूयते। ते हि शतं शब्दान् सकृदुच्चारितान् गृहीतुं शक्नुवन्ति स्म। अद्यापि च दृश्यन्ते क्वचित् तथाविधा लोकोत्तराः पुरुषाः। तेषामवधानस्य विस्तारो लोकोत्तर असीदस्ति चेति विज्ञेयम्।

ख. अवधानस्य विचलनम्—मनसोऽवधानमेकाग्रता चेत्यनर्थान्तरम्। विषयान्तरपरिहारेण एकस्मिन्नेव विषये समाधीयते चेच्चित्तं तदा भवेत्येकाग्रम्। एकाग्रावस्थायां बहुकालं यावच्चित्तमेकमेवार्थमवलम्बत इति सामान्या लोकधारणा। किन्तु वैज्ञानिकपरीक्षणैरेतन्निर्धारितं यन्न चिरकालमेकत्रावस्थातुं प्रभवत्यवधानम्। एकाग्रावस्थायामपि विषयस्याङ्गोपाङ्गेषु विचलितं भवति चित्तं नैकत्र स्थितिपदं लभते। अविचलितरूपेण पञ्चपलमपि नैकत्रावधानस्य स्थितिःसुकरा भवति। इयं साधारणानां जनानां वार्ता। ये पुनर्योगिनो योगशास्त्रोक्तेन प्रकारेण चित्तैकाग्र्यं सम्पादयन्ति तेषां तु चित्तं चिरकालमप्येकत्राविचलितरूपेण समाहितं भवति।

ग. अवधानस्य विभागः—एकस्मिन् काले बहूनि कार्याणि कर्तुं शक्यन्ते न वा इत्यत्रापि परीक्षितं विज्ञैः। यत्रैच्छिकमवधानं नापेक्ष्यते तादृशानि बहून्यपि कार्याणि समकालमनुष्ठातुं शक्यन्ते। यथा गमनमालापश्चेति द्वयमपि समकालसाध्यं भवति। किन्त्वैच्छिकं प्रयत्नापेक्षं च कार्यद्वयं सकृदनुष्ठातुं सुकरं न भवतीति परीक्षणैर्निर्धारितम्। पूर्वं १ ३ ५ ७ इत्येवं क्रमेण विषमसंख्यानां गणना कञ्चित्कालं करणीया। ततो वर्णमालाया अक्षराणि तावत्कालपर्यन्तमेव लेख्यानि। तदनन्तरं उभयोर्योजनं विधाय संख्या, अक्षर संख्या, अक्षरं चेत्येवं क्रमेग तल्लेखने तावता कालेनातीव स्वल्पतरं कार्यं भवतीति प्रत्यक्षम्।

अवधाने बाधोपस्थितिः—विघ्नानामुपस्थितिः सर्वदैवावधानबाधिका भवतीति बहुशोऽनुभूतम्। किन्तु कदाचिद्विघ्नोपस्थितिरवधानस्य साधिकापि भवतीति परीक्षणैरवधारितम्। विघ्नैः पुनः पुनः प्रतिहन्य-

माना जनाः स्वकार्ये दृढसङ्कल्पा जायन्ते । सङ्कल्पप्राबल्येन च विघ्नान् विजित्य साफल्यमाप्नुवन्ति तत्र विघ्नोपस्थितिः सङ्कल्पदार्ढ्योपजनिकेत्यवधानसाधिका भवति न बाधिकेति ।

## अवधानवशीकारः—

अवधानस्य वशीकार एव जीवनसाफल्यप्रयोजको भवति । अनैच्छिकस्यावधानस्य बाहुल्यं विचारशक्तेश्चरित्रस्य च दौर्बल्यसूचकं भवति । प्रौढेषु बुद्धिमत्सु चैच्छिकस्यावधानस्य प्राबल्यं भवति । ऐच्छिकस्यावधानस्य वशीकारश्च तेषां योग्यतातिशयमभिव्यनक्ति जीवनसाफल्यं च सम्पादयति । अत्रावधानस्य वशीकारेऽधोङ्किताः सप्त हेतवो भवन्ति ।

१. ऐच्छिकस्यावधानस्य सहजेनावधानेन योगः—ऐच्छिकमवधानं प्रयत्नसाध्यमिति नादौ सुकरं भवति । तत्सौकर्यसम्पादनार्थमैच्छिकावधानविषयस्य सहजावधानविषयेण सह संयोगो विधीयते । यथा बालानां कृते अक्षराणां ग्रहणं प्रयत्नसाध्यमिति ऐच्छिकावधानस्य विषयः । वर्णानां चित्राणां च ग्रहणं सहजवधानस्य विषयः । बालानामक्षरग्रहणसौकर्याय वर्णानां चित्रैः सह योगं विधाय सचित्रमक्षरपुस्तकं प्रकाश्यते । नानावर्णयुक्तानि सचित्राण्यक्षराणि दृष्ट्वा बालानामवधानं तत्र केन्द्रितं भवति ।

२. रुचिवृद्धिः—येषु विषयेष्वभिरुचिचिर्भवति तत्र सर्वस्याप्यवधानं सुकरं भवति । तस्मादवधानस्य वशीकाराय अपेक्षिते विषये रुचिरुत्पादनीया भवति । तदुत्पादनहेतवोऽस्माभिः पूर्वं प्रदर्शिताः । अध्ययनात् पलायमाना अपि बहवश्छात्राः परीक्षासमीपे प्रायोऽध्ययनपारायणा जायन्ते तत्र प्रयोजनवशादभिरुचिवृद्धिरेव तेषामवधानप्रयोजिका भवति ।

३. विषयस्य परिवर्तनम्—विषयाणां परिवर्तनमपि अवधानवशीकारे प्रमुखं कारणं भवति । एकस्मिन् विषये चिरमवधातुं न प्रभवन्ति बालकाः । ते शीघ्रमेव तत्र श्रान्तिमनुभवन्ति । नूतनश्च विषयः सम्मुखमायाति तदा तेषामवधानं पुनरपि तत्र केन्द्रितं भवतीति कृत्वैव विद्यालयेषु विविधानां विषयाणां समावेशो विधीयते ।

४. क्रियायोगः—अवधानं हि क्रियात्मिका मनोवृत्तिरिति क्रियायोगात् सा परिपुष्टा भवति। पुस्तकाध्ययने यदावधानं स्थिरं न भवति तदा पुस्तकं परित्यज्य तद्विविचाराणां तद्विषयस्य लेखनं वा तत्रावधानजनकं भवति।

५. अभ्यासः—अवधानस्याभ्यासोऽप्यवधानवशीकारप्रयोजको भवति। अभ्यासाज्जटिलतरे ऽपि विषयेऽवधानं सुकरं सम्पद्यते। प्रारम्भे सर्वमपि कार्यं कठिनं प्रतीयते न च तत्रावधानं सुस्थिरं भवति। किन्तु चिरमाभ्यासवशात् कालान्तरे तदेव कार्यं सुकरं जायते तत्र च स्वयमेवाधानमपि सुस्थिरं भवति। अभ्यासपरित्यागे च सुकरमपि कार्यं दुष्करं जायते।

६. अप्रतिरोधः-यदावधानविक्षेपा उत्पद्यन्ते तदा प्रतिरोधदिशा तेषामवरोधो न हितावहः। किन्तु तदुपेक्ष्य रुचिकरस्य विषयस्य चिन्तनमेव हितावहम्। बलात् प्रतिरोधेऽनुष्ठीयमाने स विक्षेपविषयो निरन्तरमवधानविषयो भवति,नावधानं परित्यजति। किन्तु तदुपेक्ष्य विषयान्तरचिन्तने पुनः विस्मृतिविषयतामुपयातो विक्षेपविषयो नावधानस्य बाधको भवति। 'अभ्यास वैराग्याभ्यां तन्निरोधः' इति योगसूत्रे, अभ्यासो वैराग्यं चेति द्वयं चित्तवृत्तिनिरोधोपायत्वेन दर्शितम्। तत्र वैराग्येणावधानप्रतिबन्धको विषयस्रोतः खिलीक्रियते, अभ्यासेन चावधानप्रयोजको विवेकस्रोत उद्घाट्यत इति,उभयमत्रोपयुज्यतेऽवधानवशीकारे।

७. विक्षेपाणामङ्गतापादनम्-विक्षेपाणामङ्गतापादनमप्यवधानवशीकारे प्रधानं साधनं भवति। मनोविज्ञानस्याध्ययने प्रवृत्तस्य पुरुस्य विक्षेपकारकः कश्चिद्विषयस्तत्रावधानबाधकः समुपस्थितश्चेत् तर्हि तस्य विषयस्यापि मनोवैज्ञानिकं विश्लेषणं विधाय विचार आरम्भणीयः। तदा स विषयो मनोविज्ञानस्य विक्षेपतां विहाय तदङ्गतां प्रतिपद्यते। एवं विक्षेपस्याङ्गतापादनमप्यवधानस्य वशीकारे निमित्तं भवति।

तदयमत्र संग्रहः—

सहजेनावधानेन संयोग ऐच्छिकस्य च।
क्रियायोगो रुचेर्वृद्धिरभ्यासः परिवर्तनम् ॥१२॥
विक्षेपाङ्गतानयनं प्रतिरोधे न चाग्रहः।
अवधानवशीकारे हेतवः सप्त कीर्तिताः ॥१३॥

एकादशः परिच्छेदः

# प्रकृतिः ( आदत )

## प्रकृतिस्वरूपम्—

जन्तूनां शरीरेषु ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि अन्तःकरणं चेति त्रयं साधनं सृष्टं भगवता। तदनुरूपमेव ज्ञानमार्गः कर्ममार्गो भक्तिमार्गश्चेति सर्वव्यवहारमार्गत्रयं जीवनोद्देश्यप्रापकं परिकल्पितं भारतीये दर्शनशास्त्रे। नव्यैर्मनोवैज्ञानिकैरपि मनोव्यापाराणां ज्ञानपक्षः क्रियापक्षो भावनापक्षश्चेति पक्षत्रयं यत्परिकल्पितं तत्रापि ज्ञानकर्मान्तःकरणात्मकं साधनत्रयमेव व्यवस्थापकमिति विज्ञेयम्। मनोविज्ञानविषयभूतेषु त्रिविधेषु व्यापारेषु क्रियापक्षस्य १ सहजा क्रिया, २ मूलप्रवृत्तयः ३ प्रकृतिः, ४ इच्छिता क्रिया, ५ चरित्रं चेति पञ्चधा विभागः कृतः। तत्र सहजा क्रिया मूलप्रवृत्तयश्च विगतपरिच्छेदेषु विवेचिताः। तत्प्रसङ्गेन सामान्याः प्रवृत्तयः, क्रीडा, शिक्षणमवधानं चापि विशिष्य निरूपितम्। क्रियापक्षस्य तृतीयो विभागः प्रकृतिरूपोऽधुना प्राप्तावसर इतीह निरूप्यते।

## प्रकृति-अभ्यास-स्वभावानां भेदः—

प्रकृतिशब्दो ह्यत्र 'आदत' शब्दस्य पर्यायरूपेण प्रयुज्यते। स्वभावः, प्रकृतिरभ्यासश्चेति पदत्रयं प्रायः समानार्थकं प्रयुज्यते किन्तु तत्रास्ति सूक्ष्मो भेदः। सामान्यतो व्यापाराणां पुनः पुनरावृत्तिरभ्यास पदवाच्या भवति। दीर्घकालमासेवितः परिपुष्टश्चाभ्यासः प्रकृतिपदवाच्यतां याति। सा प्रकृतिरेव च परिपोषातिशयमुपगता स्वभावपदवाच्यतां याति। अभ्यासो अपरिपक्वो भवतीति व्यवधानेऽनभ्यासे च परिहीयते। प्रकृतिस्तदपेक्षया परिपक्वतरा भवतीति दुष्परिहरा भवति।

'सतीव योषित् प्रकृतिः सुनिश्चला<br>
पुमांसमभ्येति भवान्तरेष्वपि।'

इति माघकवेर्वाक्यं,

'प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति'

इति गीतावाक्यं च प्रकृतेः दुष्परिहार्यतामेव समर्थयतः। परिपोषातिशयं प्राप्ता प्रकृतिर्भवान्तरेष्वपि पुमांसमभ्येतीति सा

स्वभावपदवाच्या भवति । सहजा क्रिया मूलप्रवृत्तयश्च जन्मजाः स्वाभाविक्यः प्रवृत्तयः, प्रकृतिः पुनः न स्वाभाविकी जन्मजा वा किन्त्वभ्यासादुपार्जिता । विशिष्टानां व्यापाराणामभ्यावृत्या विधीयमानमनुष्ठानमभ्यासवशात् प्रकृतित्वमापद्यते । प्रकृतिवशात् क्रियमाणं कार्यं यान्त्रिककार्यवत् समानाकारं विचारानपेक्षं च भवति । मानवजीवने प्रकृतेरतीव महत्त्वपूर्णं स्थानं भवति । प्रकृतिरेव प्रधानतया मानवजीवनस्य सञ्चालनं करोति । पशुजीवने प्रायो मूलप्रवृत्तीनां प्राधान्यं भवति, प्रकृतिस्तत्र गुणीभूता । मानवजीवने पुनस्तद्विपरीतं मूलप्रवृत्तिर्गुणीभूता प्रकृतिरेव च प्राधान्येन नियामिका । केचन मनोवैज्ञानिका मानवजीवने मूलप्रवृत्तीनामस्तित्वं नाभ्युपगच्छन्ति सर्वथा प्रकृतिनियन्त्रितमेव मानवजीवनं व्याहरन्ति । तत्प्रकृतेः प्रभावातिशयमेव सूचयति । मानवानां मूलप्रवृत्तयः शिक्षणेन परिवर्तनमुपयान्ति । अभ्यासेन च तत्स्थाने प्रकृतेर्निर्माणं भवति । ततश्च मूलप्रकृतिस्थाने प्रकृतिरेव तत्र नियामिका जायते ।

तदयमत्र संक्षेपः—

अभ्यावृत्तिः क्रियायास्तु अभ्यासः परिकीर्तितः ।
अभ्यासः परिपुष्टश्च प्रकृतिस्तु प्रकीर्त्यते ॥१॥
जन्मजा प्रकृतिश्चैव स्वभाव इति कथ्यते ।
एवं त्रयोऽपि शब्दास्तु भिन्नार्थाः सूक्ष्मरूपतः ॥२॥
यान्त्रिकोऽयत्नसंसाध्यो व्यवहारः स्वभावजः ।
प्राकृतो व्यवहारोऽपि न विचारमपेक्षते ॥३॥
यान्त्रिकत्वे समानेऽपि जन्मजा सहजा क्रिया ।
मूलप्रवृत्तिरप्येवं प्रकृतिश्चार्जितो गुणः ॥४॥
दैहिकवपरिवर्त्या च कूटस्था सहजा क्रिया ।
मूलप्रवृत्तिः, संशोध्या प्रकृतिस्तत्फलं पुन ॥५॥

## प्रकृते रूपचतुष्टम्—

प्रकृतिवशात् क्रियमाणेषु कार्येषु समानत्वं, सुकरत्वं रोचकत्वं, अवधानानपेक्षित्वं चेति रूपचतुष्टयं सर्वत्र सुलभं भवति । मानवानां भाषणं, पठनं, लेखनं, शयनं, गमनं वेषविन्यासादिकं च सर्वमपि प्रायः प्रकृतिवशान्नियन्त्रितं भवति । अत एव यस्य-कस्य व्यक्तिविशेषस्य तानि-तानि सर्वाणि कार्याणि सदा समानरूपाण्येव भवन्ति । तत्सादृश्यवशा-

देव कस्यापि लेखं दृष्ट्वा लेखकस्यानुमानं सहजं भवति। गतिमात्रदर्शने नापि च झटिति प्रत्यभिज्ञायते पुरुषः।

समत्ववत् सुकरत्वमपि प्राकृतव्यवहाराणां द्वितीयं लक्षणम्। प्रकृत्या क्रियमाणानि कार्याणि अयत्नसाध्यानीव सुकराणि भवन्ति। आदावक्षराभ्यासकाले बाला अक्षरनिर्माणे महत्काठिन्यमनुभवन्ति। क्रमशोऽभ्यासाल्लेखनस्य प्रकृतिः सञ्जायते, ततश्च काठिन्यं विनैव प्रचुरं लिखन्ति। एवं व्याख्यातारो व्याख्याने आदौ काठिन्यमनुभवन्तोऽपि सञ्जातेऽभ्यासे धाराप्रवाहं भाषन्ते न च किञ्चिदपि काठिन्यमनुभवन्ति। एवं प्रकृतेर्मूलभूतोऽभ्यासो कठिनकठिनमपि कार्यं सुकरं सम्पादयति।

एवं रोचकत्वमपि प्राकृतस्य व्यवहारस्य तृतीयं लक्षणम्। प्रकृतिर्हि जर्वमपि कार्यजातं रुचिकरं जनयति। प्रारम्भेऽध्ययनादिकं सुकृतरूपं, मद्यपानादि दुष्कृतरूपं च सर्वमपि कार्यजातमरुचिकरं भवति। किन्त्वभ्यासे सञ्जाते तत्सर्वमपि तथा रुचिकरं सञ्जायते यथा तत्कार्यं विना पुरुषः क्षणमप्यवस्थातुं न शक्नोति। धूम्रपाने प्रथमं प्रवृत्तो जनस्तत्र महत्कष्टमनुभवति। किन्तु किञ्चित् कालानन्तरमहर्निशं धूम्रपानं कुर्वन्नपि न ततो विरमति। धूम्रपानं विना मलमपि न विमुञ्चति, भोजनमपि च तस्मै न रोचते।

अवधानानपेक्षित्वं च प्राकृतस्य व्यवहारस्य तुरीयं लक्षणम्। प्रकृतिवशाद् अभ्यासवशाद्वा जनः कठिनतरमपि कार्यं तथा सुगमतया कर्तुं पारयति यथा तत्र मानगप्यवधानस्य प्रयोजनं न प्रतीयते। द्विचक्रिका- (बाइसिकिल) चालन, टङ्कणाभ्यासे (टाइपिंग) च पूर्वमवधानमपेक्षितं भवति किन्त्वभ्यासे सञ्जाते तानि कार्याणि यान्त्रिकाणीव स्वत एव प्रवर्तन्ते न भवति तत्रावधानापेक्षा। अत एव परस्परमालपन्तः परिहासादिकं च कुर्वन्तोऽपि जना निर्विघ्नं द्विचक्रिकां चालयन्ति सुखं च तत्र यात्रां सम्पादयन्ति। एकदा कश्चित् सैनिको हट्टात् किमपि वस्तुजातं गृहीत्वा गच्छति स्म। परिहासपेशलेन केनापि जनेन तत्प्रकृतिपरिचितेन सैनिकानां भङ्गीमवलम्ब्य सावधान (अटैन्शन) इत्यात्मक आदेश उच्चैरुच्चारितः। तमादेशं श्रुत्वा स सैनिकः स्वाभ्यासवशात् प्रकृतिवशाद्वा हस्तस्थं पदार्थजातं विनिःक्षिप्य सैनिकोचितायां सावधानावस्थायां स्थितः संवृत्तः। प्रकृतिजं कार्यं सर्वथावधानानपेक्षं भवतीत्यत्रेदमुदाहरणमतीव मनोहरमस्ति। एवं प्राकृतेषु व्यवहारेषु पूर्वोक्तं रूपचतुष्टयं सर्वत्र सुलभं भवति।

तथा चोक्तम्—

सुकरत्वं समानत्वं रोचकत्वं तथैव च ।
अवधानानपेक्षित्वं प्राकृतेषु विशेषता ।।७.।

**प्रकृतिनिर्माणस्य नियमः—**

सत्प्रकृतीनां निर्माणं दुष्प्रकृतीनां परिवर्जनं च सर्वं प्रायोऽभ्यास-साध्यं भवति । अभ्यास एव परिपुष्टः कालेन प्रकृतित्वे परिणमति । किन्तु तत्रापि केचन विशिष्टा नियमा निर्धारिताः सन्ति । ते च प्रायः पञ्च-विधा नियमाः प्रकृतिनिर्माणनियामका अभ्युपगम्यन्ते । १ सङ्कल्पदार्ढ्या-दारम्भः २ अपवादविवर्जम्, ३ कालक्षेपं विना सद्योऽनुष्ठानम्, ४ अनु-ष्ठानाव्यभिचारि कथनम्, ५ निरन्तराभ्यासश्चेति पञ्च तत्र मुख्याः प्रकृति निर्माणस्य नियमाः ।

१—यदा सत्प्रकृतेर्निर्माणमसत्प्रकृते-र्वा परिवर्जनमभीष्टं भवेत् तदा सङ्कल्पिते विषये दृढतरं सङ्कल्पं सम्पाद्य तत्र प्रयतितव्यम् । सर्वैरुपायैः सर्वाभिश्च शक्तिभिः सर्वात्मना कार्यानुष्ठानेन तत्र परिपुष्टो-ऽभ्यासः प्रकृतिर्वा जायते, नान्यथा ।

२—अपवादविवर्जनमपि प्रकृतिनिर्माणे द्वितीयं निमित्तम् । सङ्कल्पितेषु कार्येष्वपवादा अप्यवसरेऽवसरे समुपस्थिता भवन्ति । अधुनाऽनिच्छतोऽपि मे प्रसङ्गोऽयं समायातस्ततः सङ्कल्पविपरीतं कार्यमिदं करोमि, इतः परं कदाप्येवं न करिष्यामि इत्येवं प्रकारैः प्रलोभनैर्ये सङ्कल्पविरुद्धमाचरन्ति तेषां सङ्कल्पदौर्बल्यं सत्प्रकृतिनिर्माणेऽसत्प्रकृतीनां परित्यागे वा बाधकं भवति । अत एव यत्किमपि सङ्कल्पितं स्यात् तत्रापवादस्य कोऽप्यवसरो न भवेदिति सर्वात्मनावधेयम् ।

तदेवं सङ्कल्पितस्यार्थस्य कालक्षेपमन्तरा सद्योऽनुष्ठानमपि प्रकृतिनिर्माणे तृतीयं प्रयोजकं भवति । ये जनाः केवलं सङ्कल्पं कुर्वन्ति समुपस्थिते च प्रथम एवावसरे तदनुष्ठानाय न यतन्ते तेषां सङ्कल्पबलमनुदिनं क्षीयते । दिनाद्दिनमुपेक्ष्यमाणं च सङ्कल्पितं कार्यं कदापि सिद्धिं न याति ।

न केवलं वाचिकं कथनमात्रं किन्तु कार्यरूपेण सङ्कल्पस्या-नुष्ठानमपि प्रकृतिनिर्माणे तुरीयं निमित्तं भवति । बालकानां सुलेखस्याभ्यासाय केवलमुपदेशमात्रं पर्याप्तं न भवति किन्तु कार्यरूपेण सुलेखस्य लेखनमेव फलदायकं भवति । 'धार्मिको भूयाः' इति वचन-मात्रेण न भवति कश्चिद् धार्मिकः तदनुकूलमाचरणमेव धार्मिकत्वं

सम्पादयति। अत एव सङ्कल्पानुकूलमवश्यमाचरणीयम्। अन्यथाभीष्टं फलं कथमपि नावाप्यते। निष्फला विचाराश्च मानवस्य चरित्रदौर्बल्यमुत्पादयन्ति येन स क्वपि साफल्यं नाप्नोति। सङ्कल्पानुकूलमाचरणं सफलाश्च विचारा मानवचरित्रस्याभीष्टं विकासं जनयन्ति। सुस्थिरां प्रकृतिं च निष्पादयन्ति।

निरन्तरोऽभ्यासोऽपि प्रकृतिनिर्माणे पञ्चमं निमित्तं भवति। अभ्यासदार्ढ्येनैव प्रकृतिर्निर्मीयते इति प्रकृतिनिर्माणार्थं प्रतिदिनमभीष्टस्य कार्यस्याभ्यासोऽवश्यं विधेयः। प्रतिदिनमनुष्ठीयमानः परिपुष्टोऽभ्यासः कालात्प्रकृतित्वमापद्यते। प्रकृतिनिर्माणस्य कार्यं प्रायः शैशवावस्थायामेव सुकरं भवति। यथा ह्यामघटे, रेखाचित्रादिसंस्कारः सुकरो भवति न परिपक्वे घटे तद्वदेव शैशवावस्थायामेव प्रकृतिनिर्माणं संस्काराधानं च सुशकं भवति नान्यास्ववस्थासु। अत एवाध्यापकैः शैशवावस्थायां बालानां सत्प्रकृतिनिर्माणाय प्रयतितव्यम्।

तथा चायमत्र संक्षेपः—

शुभप्रकृतिनिर्माणेऽशुभप्रकृतिवर्जने।<br>
नियमाः पञ्च निम्नस्थाः प्रकुर्वन्ति सहायताम् ॥७॥<br>
प्रारम्भो दृढसङ्कल्पादपवादविवर्जनम्।<br>
कालक्षेपं विना सद्योऽनुष्ठानं निश्चितस्य च ॥८॥<br>
नोपदेशो न सङ्कल्पोऽनुष्ठानं केवलं पुनः।<br>
चिरं निरन्तराभ्यासः प्रकृतेस्तु विधायकः ॥९॥<br>
आमे घटे यथा सर्वः संस्कारो मार्दवाहिता।<br>
शैशव एव बालानां प्रकृतेर्निर्मितिस्तथा ॥१०॥

## जीवने प्रकृतेरुपयोगः—

प्रकृते रूपचतुष्टयं पूर्वं निरूपितम्, तेन जीवने शिक्षायां च प्रकृतेरुपयोगोऽपि प्रतीयते। मानवजीवनस्य साफल्यं नूतनवस्तुशिक्षणायत्तं भवति। किन्तु नूतनं शिक्षणमपि तदैव सफलं भवति तदा तत्प्रकृतिरूपेण परिणमते। शिक्षणकाले बहवस्तादृशा अपि व्यापाराः क्रियन्ते येषां पारमार्थिकः कश्चिदपि लाभो न भवति केवलमभ्यासवशादेव तादृशेषु निरर्थकेषु व्यापारेषु प्रवर्तते जनः। सति च प्रकृतिनिर्माणे जनः सरलतयाभीष्टं कार्यं सम्पादयति न तत्र निरर्थकव्यापाराणामावृत्तिः क्रियते। तेन तत्र समयस्य शक्तेश्च निरर्थकोऽपव्ययो न भवतीति प्रकृतेः

प्रथमो लाभः। अनभ्यासदशायां कार्यानुष्ठाने बहूनि स्खलितानि जायन्ते येन द्रव्यस्य, समयस्य शक्तेश्च सर्वेषामेवापव्ययो भवति। किन्त्वभ्यासे सञ्जाते त्रुटीनां शङ्का निवर्तत इति द्वितीयो लाभः। किं च पूर्वं सर्वमपि कार्यजातमरुचिकरं कठिनं च प्रतीयते किन्तु तद्विषयकेऽभ्यासे प्रकृतिनिर्माणे च जाते तदेव कार्यमत्यर्थं रुचिकरं सरलं च जायत इति तृतीयो लाभः। कार्यस्य रुचिकरत्वाच्च तदनुष्ठाने न काठिन्यं भवति, न श्रमोऽनुभूयते नापि च श्रान्तिर्भवति इति चतुर्थो लाभः। प्रकृतिजं कार्यं यान्त्रिककार्यवत् स्वयमेव प्रवर्तते नावधानस्य तत्रोपयोग इति प्रकृतिसिद्धेन कार्येण सहैवावधानसाध्यं किमपि कार्यान्तरमप्यनुष्ठातुं प्रभवति जन इति पञ्चमो लाभः। प्रकृतिसिद्धेषु कार्येष्ववधानानुपयोगात् यान्त्रिकवत्स्वतोऽनुष्ठानसम्भवाच्च तत्र मानसी शक्तिर्व्ययं नायाति किन्तु सुरक्षितैवावतिष्ठत इति षष्ठो लाभः। एवं प्रकृतिनिर्माणे सति जीवने तस्य बहुविधा उपयोगाः सम्भवन्तीति प्रकृतिरत्यन्तमुपयोगिनी मानवजीवने।

तथा चोक्तम्—

> कार्यं सारल्यमायाति त्रुटिशङ्का न जायते।
> कार्यं च रोचतेऽत्यर्थं न श्रान्तिरनुभूयते ॥११॥
> मानसी रक्ष्यते शक्तिर्नावधानमपेक्ष्यते।
> लाभाः प्रकृतिनिर्माणाज्जीवने षड्विधाः स्मृताः ॥१२॥

**शिक्षायामुपयोगः—**

प्रकृतिनिर्माणाज्जीवने बहुविधा लाभा भवन्तीति पूर्वं प्रतिपादितं, तेनैव शिक्षायामपि प्रकृतेरुपयोगः सिद्ध्यति। शुभप्रकृतीनां निर्माणादेव बालानां जीवनस्य विकासः साफल्यं च सम्भवति। यो बालः शैशवास्थायां समुचितानां शुभप्रकृतीनामर्जनं करोति स कचिदपि कार्ये काठिन्यं नानुभवति कठिनकठिनेष्वपि कार्येषु सोत्साहं प्रवर्तते साफल्यं चाधिगच्छति। यदा दिनचर्यापालनस्याभ्यासः सञ्जायते तदा बालाः सर्वमपि कार्यजातं निश्चिते समये स्वयमेवानुष्ठातुं प्रवर्तन्ते न निर्देशमपेक्षन्ते ततश्च तेषामध्ययनं विद्याभ्यासो व्यायामो मनोरञ्जनादिकं सर्वमपि कार्यजातं समुचितेन रूपेण सम्पादितं भवति। तेन स्वल्पेनैव कालेन तेषां सर्वाङ्गपूर्णा समुचिता शिक्षा सञ्जायते।

न केवलं विद्याभ्यासे प्रकृतेरुपयोगः किन्तु चरित्रनिर्माणेऽपि प्रकृतीनां महानुपयोगोऽस्ति। बाल्यावस्थायां ये संस्कारा ब्रह्मचारिणां निर्मीयन्ते ते यावज्जीवनं तेषां व्यवहारं सञ्चालयन्ति तैरेव तेषां चरित्रं निर्मितं भवति। यथा नवे भाजने लग्नः संस्कारः सुस्थिरो भवति एवं सुकुमारमतीनां शिशूनां बाल्यावस्थायामाधीयमानः संस्कारो यावज्जीवनं सुस्थिरो भवति। प्रकृतीनां समष्टिरेव च चरित्रमुच्यत इति प्रकृतीनां चरित्रनिर्माणेऽपि महानुपयोगः। अत एव बाल्यकाल एव शुभप्रकृतीनां साधने शिक्षकैः प्रयतितव्यं येन ब्रह्मचारिणां जीवनं सुन्दरं चरित्रं चोच्चतरं भवेत।

**प्रकृतीनां वर्गीकरणम्:—**

शिक्षणदृष्ट्या त्रिभिः प्रकारैः प्रकृतीनां वर्गीकरणं क्रमस्ति। सहजा वैनयिकाश्च प्रकृतय इति प्रथमो वर्गः। स्वीयाः परकीयाश्च प्रकृतय इति द्वितीयो वर्गः। सरला जटिलाश्च प्रकृतय इति तृतीयो वर्गः। तत्र प्रथमे वर्गे वातावरणवशादन्योन्यसंसर्गवशाच्च बालानां बहुविधाः प्रकृतयः स्वयमेव निर्मीयन्ते ताः सहजाः प्रकृतय उच्यन्ते। न तासां निर्माणे बालानामभिभावकानां वा तत्र कश्चनापि प्रयत्नोऽपेक्ष्यते। बहुधा तादृश्यः प्रकृतयोऽज्ञातरूपेणैव बालेषूपसर्पन्ति। कदा कथं च ता बालानां चरित्रमुपसंक्रान्ता इति तैरपि न ज्ञायते। स्थानासने वचनगमने वेषविन्यासादिकं च बहुविधं व्यवहारमज्ञातरूपेणैव परेषामनुकरणाच्छिक्षते बालस्तच्च क्रमात् तत्प्रकृतिरूपेण परिणमति। सा सर्वापि सहजा प्रकृतिरुच्यते।

१. सहजा वैनयिकी च प्रकृतिः—विनयाच्छिक्षाभ्यासादागता च वैनयिकी प्रकृतिः। गुरूणां निर्देशाद्यासां प्रकृतीनामाधानं बालेषु भवति ता विनयाद् गुरूपदेशादायाता इति वैनयिक्यः प्रकृतय उच्यन्ते। समयस्य परिपालनं स्वच्छतायाः निर्वाहः, शिष्टाचारः इत्येवमाद्याः शुभप्रकृतयो विनेयानां विनयाधानादेव प्रायो जायन्ते। तन्निर्माणार्थं कदाचिद् प्रोत्साहनं कदाचिद् भर्त्सनं वाश्रीयते। महता प्रयत्नेन तासामाधानं भवति स्वल्पयाप्युपेक्षया स्वल्पेनापि प्रमादेन तासां विलोपश्च जायते। एताः प्रकृतयो यावत्सबहुमानमाद्रियन्ते तावदेव तिष्ठन्ति स्वल्पामप्युपेक्षां दृष्ट्वा विलुप्यन्त इति, 'गङ्गातीरमपि त्यजन्ति मलिनं ते राजहंसा वयम्' इतीयमभियुक्तोक्तिस्तत्र चरितार्था भवति।

२. स्वीयाः परकीयाश्च प्रकृतयः—स्वीयपरकीयभेदेन द्वितीयं वर्गीकरणं प्रकृतीनाम्। काश्चित् प्रकृतयो बालैः स्वयमेव निर्मीयन्ते ताः स्वीया उच्यन्ते। ता एव मुख्यतया बालानां चरित्रनिर्माणे सहायिका भवन्ति। याश्च प्रकृतयोऽन्येषां निर्देशादाहिता भवन्ति ताः परकीया उच्यन्ते ताश्च चरित्रनिर्माणे तथा नोपयुज्यन्ते यथा स्वीयाः प्रकृतय उपयुज्यन्ते। स्वीयाः प्रकृतयः स्वरुचिवशाज्जायन्त इति जीवने सर्वत्र सर्वकालं च तासा प्रभावः परिलक्षितो भवति। किन्तु परकीयाः प्रकृतयः परेषां निर्देशादेव जायन्ते न तत्र बालानां स्वाभाविक्यभिरुचिः प्रत्युत कदाचित् तद्विपरीतमपि बहुविधं कार्यं बालैरनुष्ठेयं भवति चिराभ्यस्तमपि यन्न प्रकृतित्वमापद्यते। न च कथमपि चरित्रनिर्माणे तदुपयुक्तं भवति। येषां गुणानामाधानाद्बालानामिच्छाशक्तिः सुदृढा भवति त एव चरित्र-निर्माण उपयुक्ता भवन्ति ये पुनर्गुणा बालानामिच्छाशक्तिं दुर्बलां कुर्वन्ति तेन चरित्रोपयोगिनो न वा गुणपदवाच्या भवन्ति। यथा रुचिकरं स्वेच्छापूर्वकं च कृतं भोजनमेव स्वास्थ्यकरमायुष्करं च भवति नारु-चिकरमनिच्छापूर्वकं गृहीतं वा। एवं स्वरुचिमनुरुध्य स्वयमेवोपार्जिता प्रकृतिर्जीवने चरित्रनिर्माणे चोपयोगिनी भवति न रुचिविपरीतं बलादाहिता परकीया प्रकृतिस्तत्र कथमप्युपयुज्यते।

३. सरला जटिलाश्च प्रकृतयः—सरलजटिलभेदेन प्रकृतीनां तृतीयं वर्गीकरणम्। वातावरणवशेन शिक्षाभ्यासवशेन वा जायमानाः सामान्याः प्रकृतयः सरलाः प्रकृतय उच्यन्ते। द्वन्द्वजाः सन्निपातसमुद्भवाः वा प्रकृतयो जटिला उच्यन्ते। जटिलाः प्रकृतयः पुरुष एवमेव संक्रान्ता भवन्ति न तासां कारणं किमपि ज्ञायते। नापि तासां परिहारोपायः कश्चित्प्रतीयते। यथा यथा तत्परिहाराय चेष्टते जनस्तथा-तथा तासां जटिलतापि वर्धते न च मोक्षोपायमधिगच्छति जनः। प्रायो ऽशुभप्रवृत्तय एव जटिला भवन्ति। ततो मोक्षाय यतमानोऽपि पुरुषस्त-न्मोक्षोपायं न प्राप्नोति। भर्त्सनया दण्डेन वा तत्र कश्चिदपि लाभो न भवति।

## मनोविश्लेषणं प्रकृतीनां परिहारकम्—

जटिलप्रकृतीनां पर्यालोचनेनाधुनिकैर्मनोविश्लेषणनिपुणैर्मनोवैज्ञा-निकैर्मनोविश्लेषणमेव तदुपायत्वेन निर्धारितम्। एभिर्मनोवैज्ञानिकैः

प्रकृतिनिर्माणस्य नूतन एव सिद्धान्तः स्थापितः। पूर्वमभ्यास एव प्रकृतेर्मूलं मन्यते स्म । परिपुष्टश्चाभ्यास एव प्रकृतित्वमापद्यते इति प्राचीनानां मनोवैज्ञानिकानां सिद्धान्तः । किन्तु नवीनैर्मनोवैज्ञानिकैः स सिद्धान्तो मूलत एव परिवर्तितः। तन्मते संवेग एव प्रकृतेर्मूलं नाभ्यासः । यथ मूलप्रवृत्तीनां सम्बन्धः संवेगैः सह भवत्येवं प्रकृतीनामपि मूलं कस्मिंश्चित् संवेगे निहितं भवति। यदा कस्मादपि कारणात् संवेगोत्तेजनं भवति तदैव प्रकृतिजं कार्यं भवति। संवेगशैथिल्ये च प्रकृतिजं कार्यमपि विलुप्यते यथा विद्युद्धारासम्बन्धादेव विद्युद्दीपं प्रकाशते धाराविच्छेदे च सद्य एव निर्वाति तथा संवेगविच्छेदे प्रकृतिजं कार्यमपि स्थातुं नोत्सहते। अत एव दुष्प्रकृतीनां परिहाराय नवैर्मनोवैज्ञानिकैर्मनोविश्लेषणनिमित्तकाः परिहारोपाया आविष्कृताः। न केवलं प्रकृतीनामेव किन्तु बहूनां रोगाणामपि मनोविश्लेषणनिमित्तकश्चिकित्साक्रमोऽप्येभिराविष्कृतः। बहवः शारीरा मानसाश्च रोगा मनोग्रन्थीनां निर्माणादाविर्भवन्ति। यावच्च तेषां मनोग्रन्थीनामुच्छेदनं न भवति तावत् प्रचुरेऽप्यौषधिप्रयोगे रोगशान्तिर्न सम्भवति। अयं मनोविश्लेषणवादिनां मनोवैज्ञानिकानां सिद्धान्तः।

जटिला हि प्रकृतयो मनोग्रन्थीनां निर्माणादेव भवन्ति । यथा हि विभिन्नयोः परम्परासम्बद्धयो-र्द्वयो-र्बहूनां वा रज्जुखण्डानां योसन्देको रज्जुग्रन्थिनिर्मीयते, एवं परस्परासम्बद्धयोर्भिन्नयो, र्व्यापारयोः समकालघटनलक्षणात् साहचर्यात् कदाचित्तयोःसंयोगात्मको ग्रन्थिर्मनस्युत्पद्यते। तद्ग्रन्थिवशाच्च यदा तयोरेकं कार्यं भवति तदा वस्तुतस्ततोऽसम्बद्धमपि ग्रन्थिवशात् सम्बद्धमिव कार्यान्तरमपि सहैवोत्पद्यते । तयोः कार्ययोर्न कश्चिदपि प्रत्यक्षः सम्बन्धो भवतीत्यपरस्योत्पत्तावाश्चर्यं प्रतीयते तत्कारणानवगमाच्च तत्परिहाराय बहुषूपायेष्वलम्ब्यमानेष्वपि साफल्यं न भवति। एताः ग्रन्थिमूलिकाः प्रकृतयो जटिला प्रकृतय उच्यन्ते। तेषां ग्रन्थीनामुच्छेदमन्तरा जटिलानां प्रकृतीनामन्यःकश्चिदपि परिहारोपायो न सम्भवति । ततो मनोविश्लेषणनिपुणा मनोवैज्ञानिका एव अनिष्टप्रकृतीनां निमित्तभूतं मनोग्रन्थिं ज्ञात्वा तदुच्छेदनद्वारा तत्परिहारे साफल्यं प्राप्नुवन्ति । तदेवमियं मनोविश्लेषणात्मिका मनोवैज्ञानिकी चिकित्सापद्धतिरप्याविष्कृतास्ति । मनोविश्लेषणप्रधानेषु मनोविज्ञानग्रन्थेष्वस्याश्चिकित्साया बहून्युदाहरणान्युपलभ्यन्ते। तेषु कानिचिदत्रापि तत्परिचयार्थमुदाह्रियन्ते ।

श्री हैडफ़ील्डमहोदयस्य सविधे तादृशः कश्चिदातुरः समायातः यः प्रत्यहं रात्रौ त्रिवादन समये निद्राया भङ्गादवतीव खिन्नो जायते स्म। तस्मिन्नेव समये प्रतिदिनं निद्राभङ्गो जायत इति मुहुर्विचारयन्नपि तत्कारणं न जानाति स्म, नापि तस्मिन्। समये निद्रालाभे समर्थो भवति स्म। तस्य पूर्वामितिवृत्तमनुरुन्दधता हैडफ़ील्डमहोदयेन लब्धं यदेकदासौ आमातिसारेण ग्रस्त आसीत। तदा रात्रौ त्रिवादनकाले तस्योदरे भयङ्करं शलमुत्पन्नं येन मरणत्रासमिवानुभवन् स महता क्लेशेन तस्मात्द्रोगाद्विमुक्तिमलभत। तस्मिन्नवसरे त्रिवादसमये तस्य यो निद्राभङ्गः समजायत तस्य वस्तुतः शूलेन सह सम्बन्ध आसीत्। किन्तु तस्यान्तर्मनसि शूलस्थाने त्रिवादनकालेन सह निद्राभङ्गस्य सम्बन्धः सञ्जातः। तयोः सम्बन्धाद्यो मनोग्रन्थिरुत्पन्नः। स एव तस्य प्रात्यहिकस्य निद्राभङ्गस्य कारणमासीत्। यदैतद् विज्ञातं तदैव स मनोग्रन्थिरद्धिन्नस्ततश्च तस्य रोगिणस्तद्दुःखमपि विनष्टम्।

श्रीमता हेडफ़ील्डमहोदयेन 'साइकालोजी एण्ड मारल्स' नाम्नि पुस्तकेऽन्यदप्येकमुदाहरणं दर्शितम्। एकः पुरुषः कस्मिंश्चित् चिकित्सालये परिचारिकाकार्यं [नर्स] करोति स्म। तत्रैव स्थितयाऽन्यया परिचारिकया सह तस्य परिचयः स्नेहसम्बन्धश्च सञ्जातः। परं स यदा तां प्रेयसीं परिचारिकां पश्यति स्म तदा तस्याः कपोले मुष्टिप्रहारं कर्तुं स कथमुत्सुको भवतीति स स्वयमपि न जानाति स्म। प्रत्यहमेवं तादृशं मानसं क्लेशमनुभवन् स चिकित्सार्थं मनोवैज्ञानिकस्य शरणमगच्छत्। हेडल्फ़ील्डमहोदयेन तस्य पुरातनमितिवृत्तमनुसन्दधता परिज्ञातं यदन्यस्मिन्नवसरेऽय पुरुषोऽन्यस्मिंश्चिकित्सालये परिचारिकाकार्यं [ नर्सं ] करोति स्म। किन्तु तत्र यदैका स्त्रीपरिचारिका समायता तदा तया अस्य पुरुषस्य कार्यं गृहीतं अयं च सेवाकार्याद्विमुक्तः सञ्जातः। एवं जीविकापहरणादस्य तां परिचारिकां प्रति महानाक्रोश आसीत्। तस्य प्रतिशोधार्थमेव स तस्याः परिचारिकाया मुखे मुष्टिप्रहारं कर्तुं वाञ्छति स्म। तत्र मुष्टिप्रहारस्य वस्तुतस्तया परिचारिकया सह सम्बन्ध आसीत्। किन्तु तस्यान्तर्मनसि व्यक्तिविशेषं विहाय परिचारिकया सह मुष्टिप्रहारस्य सम्बन्धः सञ्जातः। अनयोरसम्बद्धयोरर्थयोः सम्बन्धान्मनसि मनोग्रन्थिरुत्पन्नः। तद्ग्रन्थिनिहितादौपाधिकात्साहचर्यादेवात्र प्रेयसीं परिचारिकां दृष्ट्वापि मुष्टिप्रहारस्य भावना उद्बुद्धा भवति स्म। यदास्य ग्रन्थेः परिज्ञान जातं तदैव स

अन्यदप्येकमुदाहरणं तत्रैव पुस्तके प्रदत्तमस्ति। एका स्त्री कामविकारकाले सदैव स्वस्कन्धे महतीं पीडामनुभवति स्म। यदा कामातुरा सा पतिसम्भोगाय स्पृहयति तदैव दुःसहा स्कन्धपीडा तत्र विघ्नमुत्पादयति स्म। पीडानिवारणाय बहुविधा उपायाः कृताः परं साफल्यं नाधिगतम्। अन्ततो मनोवैज्ञानिकस्य शरणमायाता। तेन तदीयमितिवृत्तमनुसन्दधता विज्ञातं यदेकदा तस्याः स्कन्धे महानाघातः सञ्जात आसीत्तेन सात्यन्तं व्याकुलाभवत्। तस्मिन् काले एका परिचारिका तामेकान्ते नीत्वा तस्याः परिचर्यां कृतवती। किन्तु तस्मिन्नवसरे सा परिचारिका तस्याः कामवासनामुत्तेजयितुमपि प्रयतते स्म। तस्याः कामवासनायाः पीडया सह वास्तविकः कोऽपि सम्बन्धो नासीत् किन्तु तस्या मनसि कामवासनायाः पीडायाश्च सम्बन्धमाश्रित्य मनोग्रन्थिरुत्पन्नः। तद्वशादेव कामवासनासमुद्भवे स्कन्धपीडाविर्भवति स्म। यदा मनोविश्लेषणपद्धत्या मनोग्रन्थिरयमुद्भिन्नस्तदैव कामवासनायाः स्कन्धपीडायाश्च सम्बन्धोऽपि विच्छिन्नः। न च तदनन्तरं तादृशः सम्बन्धस्तया कदाप्यनुभूतः।

एवंविधानि बहून्युदाहरणानि मनोविज्ञानग्रन्थेषूपलभ्यन्ते। तैरेतज्ज्ञायते यज्जटिलानां प्रकृतीनां परिहारस्तत्प्रयोजकानां मनोग्रन्थीनामुद्भेद एवं सम्भवति नान्यथा। तथा चोक्तम्—

सहजा वैनयिकी वा स्वीया परकीयाऽथवा।
सरला जटिला चेति प्रकृतेस्तु वर्गास्त्रयः ॥१२॥
काकतालीयसम्बन्धाद् भिन्नं कार्यद्वयं यदा।
अन्तर्मनसि सम्बद्धं, ग्रन्थिरुत्पद्यते तदा ॥१३॥
मनोग्रन्थिवशाज्जाता प्रकृतिर्जटिला तु या।
मनोविश्लेषणं तत्र मोक्षोपायोऽस्ति केवलः ॥१४॥
विद्युद्दीपो यथा धारासम्पर्कादेव दीप्यते।
तद्विच्छेदे च निर्वाति जटिला प्रकृतिस्तथा ॥१५॥
मनोग्रन्थिवशादेव स्वकार्यं कुरुते सदा।
ग्रन्थिभेदे न तत्कार्यं पुनः क्वाप्युपलभ्यते ॥१६॥
मनोविश्लेषणं तस्माज्जटिलानां विनाशने।
साधनं केवलं नव्यैर्मनोवैज्ञानिकैर्मतम् ॥१७॥

## द्वादशः परिच्छेदः

# इच्छिता ( विचारात्मिका ) क्रिया

### इच्छितक्रियाया वैशिष्ट्यम्—

क्रियापश्चान्मनोव्यापाराणामध्ययने उपक्रान्ते सहजक्रिया—मूल-प्रवृत्ति-प्रकृतिरूपेषु त्रिष्ववान्तरविभागेषु निरूपितेषु इच्छितक्रियात्मकश्चतुर्थो विभागः प्राप्तावसर इतीदानीं तन्निरूपणम् । पूर्वोक्तेभ्यो विभागेभ्योऽयं विभागः सर्वथा भिन्नोऽस्ति । सहजा हि जन्मजाता यान्त्रिकी च क्रिया न विचारापेक्षणीति विचारात्मिका इच्छिता क्रिया ततो भिन्नैवेति निर्विवादम् । मूलप्रवृत्तिर्यद्यपि न यान्त्रिकी क्रिया किन्तु बुद्धिव्यापारमपेक्षते तथापि सा जन्मजा । तत्रत्यो बुद्धिव्यापारोऽपि सामान्यतो जन्मज एव, नानुभवाश्रितः । कण्टकेन पादभेदे जाते हस्तस्तन्निष्कासनाय प्रधावति । कस्मिंश्चिदनिष्टे पदार्थे नासिकायां प्रविष्टे सति छिक्का तन्निष्कासनाय स्वत एव प्रवर्तते । नेत्रयोर्धूलिप्रवेशे सञ्जाते स्वत एव प्रवृत्तोऽश्रुप्रवाहस्तां प्रवाहयति । सर्वाण्यप्येतानि सहजक्रियाया उदाहरणानि, तत्र न विचारावकाश इति विचारानपेक्षिणी सहजक्रिया स्वत एव प्रवर्तते । आसन्नप्रसवाः पक्षिणो नीडनिर्माणं कुर्वन्ति, तन्निर्माणार्थं बुद्धिपूर्वकमेव तृणाहरणादि व्यापारं कुर्वन्ति । किन्तु तेषां स व्यापारो जन्मज एव, नानुभवाश्रित इति मूलप्रवृत्त्यन्तभूतोऽयं व्यापारोऽपि विचारात्मिकाया इच्छितक्रियाया भिन्न एव । प्रकृतिरूपस्तृतीयो भेदोऽपि विचारात्मिकाया इच्छितक्रियाया विलक्षण एव । बुद्धिपूर्वापि क्रिया चिराभ्यासवशाद् यदा प्रकृतित्वमापद्यते तदा सा यन्त्रिकीव भवति । तदा तत्र नावधानापेक्षा न च विचारापेक्षा भवति । अतो विचारात्मिका-इच्छिता क्रिया ततोऽपि भिन्ना भवति । मानवानां जीवनप्रयत्नपूर्वकाः स्वल्पा एव व्यापाराः सहजक्रियात्मका भवन्ति । मूलप्रवृत्तयश्च प्राधान्येन पशूनां जीवनव्यापाराणां नियन्त्रणं कुर्वन्ति न मानवव्यापाराणाम् । मानवानां व्यापाराः प्रकृत्या, विचारात्मिकया क्रियया च नियन्त्रिता भवन्ति । तत्रापि विचारात्मिका क्रियैव मानवजीवने मुख्यतो नियामिकेति सा चतुर्ष्वप्येतेषु मनोव्यापारेषु मुख्यतमेति पृथङ् निरूपणमर्हति ।

इच्छाशक्तिर्हि मानवस्येच्छितानां व्यापाराणां नियामिका भवति। इच्छा, इच्छाशक्तिश्चेति मनोविज्ञाने भिन्नं पदार्थद्वयम्। कमपि भोग्यं, विषयं पदार्थं वा प्राप्तुं समीहते जनस्तस्य सा भोगतृष्णैव इच्छापदवाच्या भवति। ततश्चेच्छापदं सामान्यतो भोगतृष्णाबोधकं भवति। इच्छाशक्तिः पुनस्ततो भिन्ना तन्नियामिका च भवति। कदाचित् कार्ययोर्द्वयोर्विरोधे समुपस्थिते सति इदं वा करवाणि इदं वेति जनानां मनो दोलायितं भवति। तदा प्रबला इच्छाशक्तिरेवान्यतर-समर्थनेन जनानां व्यापारं नियन्त्रयति। भारतीयनात्मवादिनां मते तादृशेषु प्रसङ्गेष्वात्मैव कर्तव्याकर्तव्ययोरवधारको व्यापाराणां नियामकश्च भवति। किन्तु नव्यानां वैज्ञानिकानां नये आत्मैव नास्ति ततस्तत्कार्यं इच्छाशक्त्यायत्तं जातम्। तादृशेषु व्यामोहप्रसङ्गेष्विच्छाशक्तिरेव मानवव्यापाराणां नियामिका भवतीति ते व्यापारा इच्छितव्यापारानाम्ना इच्छितक्रियापदेन वा व्यवह्रियन्ते।

तथा चोक्तम्—

सहजा मूलवृत्तिस्तु जन्मजा न विचारजा।
विचारजा ततो नूनं भिन्नैव चेच्छिता क्रिया ॥१॥
प्रकृतश्चार्जिताप्येषा यान्त्रिकीवाथ जायते।
नावधानाश्रिता तस्मादिच्छिताऽतोऽपि भिद्यते ॥२॥
इच्छाशक्तिश्च इच्छा च भिद्येते परस्परम्।
इच्छा भोगस्य तृष्णैव इच्छाशक्तिः नियामिका ॥३॥
आत्मवादे नियन्तृत्वमात्मन एव केवलम्।
नात्मैवास्तीति विज्ञाने इच्छाशक्तिर्नियामिका ॥४॥

## इच्छाशक्तेर्नियामकत्वम्—

विचारात्मकानां व्यापाराणामिच्छाशक्तिरेव नियामिका भवती-त्यस्यार्थस्य स्पष्टीकरणाय निम्नाङ्कितं निदर्शनमुपयुक्तं प्रतीयते। एकेन बालकेन स्वजन्मदिवसस्यावसरे दश मुद्रा उपहाररूपेण प्राप्ताः। स एतासां मुद्राणां यथेच्छमुपयोगं कर्तुमिच्छति। पूर्वं तेन विचारितं यदहं नूतनवस्त्राणां निर्माणे एतासां मुद्राणां विनियोगं करोमि। क्षणान्तरे कस्याप्यावश्यकस्य पुस्तकस्याभावं स्मृत्वा तत् पुस्तकं क्रेतुमिच्छति।

मुद्रास्तस्य सविधे परिमिता एव सन्ति । उभयोः कार्ययोः सम्पादनं ताभिर्न सम्भवतीति केवलमेकमेव कार्यं सम्पादनीयमापद्यते । यदि वस्त्रनिर्माणे मुद्राणां विनियोगं करोति तदा पुस्तकं न लभ्यते, यदि च पुस्तकं क्रीणाति तदा वस्त्राणि न निर्मीयन्ते । एवं परस्परविपरीतं तदिच्छाद्वयं तन्मनसि द्वन्द्वं जनयति । तेन तस्य बाह्यव्यापारोऽवरुध्यते स न पुस्तकं क्रीणाति नापि वस्त्राणि । कञ्चित्कालं व्यामोहाविष्टः स उभयोः परिणामं परिकल्प्य तयोस्तारतम्यं विचारयति । तस्मिन् विचारावसरे तदीया इच्छाशक्तिर्यत्राभिनिविशते स एव परिणामश्चारुतरः प्रतीयत इति तस्मिन्नेव पक्षे निर्णयं कृत्वा तदनुकूलमाचरति । एको बालक एतस्यामवस्थायां वस्त्रपक्षे निर्णयं कर्तुमर्हति परश्च बालकस्तस्यामेवावस्थायां पुस्तकपक्षे निर्णयं कर्तुमर्हति । सर्वथाप्ययं निर्णय इच्छाशक्तिमनुसरति । ततश्च तादृशेषु अन्तर्द्वन्द्वप्रसङ्गेषु इच्छाशक्तिरेव नियामिका भवतीति सर्वा विचारात्मिका इच्छिताः क्रिया इच्छाशक्त्यायत्ता इच्छाशक्तिनिर्णयानुसारिण्यश्च भवन्ति ।

## निर्णयस्य स्वरूपम्—

अन्तर्द्वन्द्वप्रसङ्गेषु इच्छाशक्तेर्निर्णयमाश्रित्यैव प्रवर्तन्ते विचारात्मका इच्छिता व्यापारा इति निश्चितं चेत तर्हि निर्णयोऽयं कथं भवतीति प्रश्नः समुदेति । पूर्वस्मिन्नुदाहरणेऽस्माभिर्दृष्टं यत् १. बालकस्य वस्त्रविषयिणी एका इच्छा जाता, २. ततश्च पुस्तकविषयिणी तद्विपरीता द्वितीया इच्छा समुत्पन्ना । ३ ततश्च मनस्यन्तर्द्वन्द्वस्य स्थितिः समुत्पन्ना । ४. ततश्च कञ्चित्कालं व्यामोहाविष्टं दोलायमानं चाभवत् तस्य मनः । ५. तत इच्छाशक्तिप्रभावादन्यतरस्मिन् पक्षे निर्णयः सञ्जातः । ६. निर्णयानन्तरं,च तदनुरूपमाचरति सः । एवं विचारात्मकस्य व्यापारस्य प्रक्रियायां प्रायःषडङ्गानि समुपलभ्यन्ते स्टाउट-महोदयेन निश्चयात्मिकायाः प्रक्रियायास्तदेव षडङ्गमित्थं निरूपितम्—

१. एकस्या इच्छाया उत्पत्तिः ।

२. ततस्तद्विपरीतायाः परस्या इच्छाया उत्पत्तिः ।

३. उभयोरिच्छयोर्द्वन्द्वस्याविर्भावः ।

४. मनसो व्यामोहो दोलयमानता च ।
५. इच्छाशक्तिवशादन्यतरस्मिन् पक्षे विनिर्णयः ।
६. निर्णयानुरूपमाचरणम् ।

गाल्टमहोदयेन हावर्डमहोदयेन च निश्चयात्मकप्रक्रियायाः षडङ्गस्थाने पञ्चैवाङ्गानि स्वीकृतानि । तानि च पञ्चाङ्गानि निम्नाङ्कितानि सन्ति—

१. वृत्तिद्वयस्य चेतनासमक्षमुपस्थितिः ।
२. उभयोरपि सम्पूर्तिकल्पना तद्विवेचनं च ।
३. सम्भावितयोः परिणामयोः परिकल्पनं मूल्याङ्कनं च ।
४. मूल्योस्तारतम्यतुलना निर्णयश्च ।
५. निर्णयस्य कार्यान्वितिः ।

अस्मिन् मते एतदेव वैशिष्ट्यं यत् स्टाउटमहोदयेन विरोधिन्योर्द्वयोरिच्छयोरुत्पत्तिः पृथक् पृथक् परिगृहीता अत्र चोभयोरपि समुत्पत्तिर्युगपदेव दर्शिता । किन्तु सामान्य एवायं भेदो न विशेषावधानयोग्यो भवतीत्युपेक्ष्यः ।

तदयमत्र संग्रह—

१ इच्छा पूर्वमुदेत्येका २ विपरीता ततः परम् ।
३ द्वन्द्वोत्पत्तिश्च ४ व्यामोहो ५ निर्णयः ६ तत्क्रियान्वितिः ॥५॥
निश्चयस्य षडङ्गानि प्रोक्तानि स्टाउटेन वै ।
सर्वत्रैतानि लभ्यन्ते निर्णयापेक्षिके स्थले ॥६॥
१ वृत्तिद्वयसमाहारः २ तयोः सम्पूर्तिकल्पना ।
परिणाम-विचारोऽथ तयोर्मूल्याङ्कनं तथा ॥७॥
४ तुलना निर्णयश्चैव ५ निर्णयस्य क्रियान्वितिः ।
गाल्टेनैतानि पञ्चैव प्रोक्तान्यङ्गानि निश्चये ॥८॥

## निर्णयस्य प्रकाराः—

उपरिनिर्दिष्टया प्रक्रियया यो निर्णयो लभ्यते सोऽपि पञ्चविधः सामान्यतयोऽस्ति । निर्णयस्याधोऽङ्किताः पञ्च प्रकाराः परिगणिताःसन्ति—

१. विवेकयुक्तो निर्णयः ।
२. आकस्मिको निर्णयः ।
३. संवेगप्रधानो निर्णयः ।
४. बाध्यो निर्णयः ।
५. पुनर्विचारात्मको निर्णयः ।

१. विवेकयुक्तो विनिर्णयः—यदा कार्यद्वयस्य इच्छाद्वयस्य वा विरोध उपस्थितो भवति, तदा इच्छाशक्तिर्बलादन्यतरस्मिन् पक्षे निर्णयं विधाय तदनुरूपमाचरति जन इति पूर्वस्मिन्निदर्शने स्पष्टम् । एवंविधेऽवसरे उभयोरिच्छयोर्विरुद्धत्वादेकस्या एवेच्छायाः पूर्तिः सम्भवतीति परस्या दलनमावश्यकम् । एवमुभयोः पक्षयोर्लाभालाभं विचार्य यदान्यतरस्मिम् पक्षे निर्णयः क्रियते तदा पञ्चाङ्गसमन्वितः स निर्णयो विवेकयुक्तो निर्णय उच्यते । ये जना स्वजीवनस्य सिद्धान्तान् विशेषरूपेण निर्धारयन्ति तेषां निर्णयाः सदैव विवेकयुक्ताः सरलाश्च जायन्ते । निश्चितैः सिद्धान्तै-र्जीवने सञ्चाल्यमाने सति यदा निर्णयस्यावसरा उपस्थिता भवन्ति तदा सिद्धान्तानुसारं सुविचारितो विवेकयुक्तो निर्णयः शीघ्रमेव प्राप्यते तत्र किञ्चिदपि काठिन्यं न भवति । यस्य च पुरुषस्य कोऽपि जीवनसिद्धान्तो निश्चितो न भवति स कमपि विवेकयुक्तं निर्णयमाशु कर्तुं न पारयति । तस्य भूयान् कालः प्रचुरा शक्तिरन्तर्द्वन्द्व एव व्ययमेति । अत एव तस्य कार्याणि शक्त्यभावादपूर्णान्येव तिष्ठन्ति ।

सामान्यतोऽस्माकं सर्वेऽपि निर्णया विवेकयुक्ता एव भवन्तीति सर्वेऽपि जना विश्वसन्ति । किन्तु तन्न सत्यम् । अस्माकं विरल एव निर्णयः पूर्णतया विवेकयुक्तो भवति । यस्य च सर्वेऽपि निर्णया विवेकयुक्ताः स्युस्तादृशः पुरुषोऽपि जगति विरल एव । अस्माकमधिकांशा निर्णयाःप्रसुप्ताभिर्वासनाभिः संस्कारैश्च नियन्त्रिता भवन्ति न विवेकेनेति विवेकेनैव कार्यमनुष्ठातुं कृतसङ्कल्पा अपि जनाः प्रायः प्रवञ्चनापतिता भवन्ति ।

२. आकस्मिको निर्णयः—यदोभयोः पक्षयोर्लाभालाभं सम्यग विचार्यान्यतरस्मिन् पक्षे निर्णयः क्रियते तदा पञ्चाङ्गो विवेकयुक्तोऽयं निर्णयोऽभिधीयते । स कालापेक्षो भवति । उभयोः पक्षयोस्तारतम्य-

विवेचनाय कश्चित् कालस्तत्रापेक्ष्यते । किन्तु कदाचित् तादृशा अवसरा अपि समुपस्थिता भवन्ति यत्र विचारक्षमः काल एव नावशिष्यते । तत्र सद्य एव निर्णयःकर्तव्यो भवति । स एवाकस्मिको निर्णय उच्यते । अस्माकं परिवारे कस्यापि विवाहोऽस्ति । विवाहस्य सूचनाद्यैव प्राप्ता । श्व एव विवाहस्य तिथिर्वर्तते । तत्र गमनसाधनभूतं बाष्पयानं त्वरितमेव यास्यति । तादृशेऽवसरे सद्य एव निर्णयः कर्तव्यो भवति स निर्णय आकस्मिको निर्णय उच्यते । कदाचित् तद्विपरीतं क्वचिद् गन्तुं समुत्सुकोऽपि जनरोऽकस्मादेव विपरीतं निर्णयं करोति सोऽप्याकस्मिको निर्णयः । पत्र पञ्चाङ्गप्रयोगस्यावसरो न भवति, हेतुश्च वाह्यो भवतीति वैशिष्ट्यम् ।

३. संवेगात्मको निर्णयः—विवेकयुक्ते निर्णये निर्णयस्य पूर्वोक्ताः पञ्चापि स्थितय आयान्ति ता उत्तीर्य मनो निर्णयं करोति । आकस्मिके च निर्णये तद्विपरीतं सर्वासां स्थितीनामवसरो न भवति । आकस्मिक-निर्णयवत् संवेगात्मकोऽपि निर्णयो ऽकस्मादेव जायते । किन्तु तयोरयं भेदोऽस्ति यदाकस्मिके निर्णये निर्णयस्य प्रयोजिका वाह्या परिस्थिति-र्भवति किन्तु संवेगात्मके निर्णये तस्य कारणमान्तरं भवति । वाह्य-कारणवशाद्यदा निर्णयेऽपेक्षितानां पञ्चानामपि कोटीनामुत्तरणमन्तरैव कोऽपि निर्णयः क्रियते स आकस्मिको निर्णय उच्यते । यदा चान्तरस्य संवेगस्य प्रभावान्निर्णयापेक्षितानां पञ्चानामपि कोटीनां प्राप्तिमन्तरैव मध्येऽकस्मादेव निर्णयः क्रियते स संवेगात्मको निर्णयोऽभिधीयते । कस्मिंश्चित् समाजे प्रतिष्ठिता जनाः समवेताः परस्परमालपन्ति । तत्र केनापि पुरुषेण किमपि लज्जाकरमपमानजनकं वाचरणं विहितम् । तद्व्यवहारममृष्यमाणेन केनचिद्रोषावेशात् तत्कपोले चपेटकः प्रदत्तः । अत्राकस्मादुद्भूत आन्तरः क्रोधात्मकः संवेग एव तादृशस्य व्यवहारस्य निमित्तं भवति । क्रोधावेशात् स उभयोः पक्षयोर्गुणावगुणौ विचार-यितुं न प्रभवति । सपद्येव निर्णयं करोति, तत्क्षणमेव च तथाचरति । अयमप्याकस्मिको निर्णयो भवति । किन्त्वनयोरयमेव भेदो भवति, यदाकस्मिके निर्णये वाह्यकारणवशात्तादृशो निर्णयो विधीयते । संवेगा-त्मके च निर्णये आभ्यन्तरसंवेगवशात् तादृशो निर्णयः क्रियते । येषा-मिच्छाशक्तिर्दुर्बला भवति, ये वाऽविवेकिनो भवन्ति तेषां जीवने

तद्विधानां निर्णयानां प्राचुर्यं भवति । यदा संवेगः शाम्यति तदा जनस्तादृशे निर्णये पश्चात्तापं करोति खेदं चानुभवति ।

४. बाध्यो निर्णयः—यदा कस्मिन्नपि विषयविशेषेऽन्यतरस्मिन् पक्षे निर्णयं कर्तुं प्रयतमानोऽपि जनः समर्थो न भवति तदा स्वेच्छया परेच्छया वा, उचितोऽनुचितो वा, यः कश्चिदपि निर्णयो भवेत्तमेव स्वीकरोति । स बाध्यो निर्णय उच्यते । तादृशेऽवसरे कदाचिद् भाग्यपरीक्षाविधिमप्यवलम्बते । कदाचिन्निर्णयार्थं कार्षापणमुत्पातयति । तस्य कार्षापणस्य मुखभागं पृष्ठभागं वा पतितं दृष्ट्वाऽन्यतरस्मिन् पक्षे निर्णयं करोति । अयं बाध्यो निर्णय उच्यते । पूर्वोक्तयोराकस्मिकसंवेगात्मकयोर्निर्णययोश्चरित्रविकासस्य न्यूनता हेतुर्भवति । बाध्ये चास्मिन् निर्णये दूषितं चरित्रं निमित्तं भवति । येषां चरित्रं सुविकसितं सुदृढं च भवति तेषां निर्णयेष्वपि एवंविधानां त्रयाणामपि निर्णयानामभावस्तु न भवति तथापि तेषां तत्र न्यूनतैव भवति ।

५. पुनर्विचारात्मको निर्णयः—पुनर्विचारात्मकोऽपि पञ्चमो निर्णयभेद उपलभ्यते । यदा पूर्वोक्तपद्धत्या कमपि विवेकयुक्तं निर्णयं कर्तुं प्रस्तुतोऽपि जनः सद्यःसमुत्पन्ननूतनपरिस्थितिवशात् स्वीयं सम्भावितं पूर्वनिर्णयं विहाय विपरीतं निर्णयं करोति स पुनर्विचारात्मको निर्णय उच्यते । अत्रापि परिवर्ततो निर्णयोऽकस्मादेव भवतीति आकस्मिक एवायं निर्णयः । तथाप्याकस्मिकान्निर्णयादयं भिद्यते । आकस्मिके निर्णये विचारशक्तेर्दौर्बल्यं निमित्तं भवति पुनर्विचारात्मके निर्णये च तस्याः परिपक्वता प्रयोजिकेति तयोर्भेदः ।

तदयमत्र संग्रहः—

एको विवेकयुक्तः स्यात् पर आकस्मिकः स्मृतः ।
संवेगात्मा तृतीयः स्याच्चतुर्थो बाध्यनिर्णयः ॥९॥
पुनर्विचाररूपोऽपि निर्णयः पञ्चमो मतः ।
एवं पञ्चविधो विज्ञै निर्णयोऽयं निरूपितः ॥१०॥
तेषां विवेकयुक्तस्तु पञ्चाङ्गो निर्णयो मतः ।
त्रिषूत्तरेषु पञ्चाङ्गप्रयोगो नाथ लभ्यते ॥११॥

बाह्य आकस्मिके हेतुः संवेगात्मनि चान्तरः ।
तुल्येऽप्याकस्मिकत्वांशे भेदो हेतुकृतस्तयोः ॥१२॥
विचारशक्तेर्दौर्बल्यमाकस्मिकप्रयोजकम् ।
तस्या एव पुनर्हेतुः पञ्चमे परिपक्वता ॥१३॥
चरित्रस्यैव दोषाच्च जायते बाध्यनिर्णयः ।
सूक्ष्मो भेदोऽक्षमैतेषां निर्णयानां निरूपितः ॥१४॥

## इच्छाशक्तेर्दौर्बल्यम् :—

मानवानां विचारात्मिकाः सर्वा अपि क्रिया इच्छाशक्त्यैव नियम्यन्त इति मानवस्य चरित्रनिर्माणाय प्रबला सुदृढ़ा चेच्छाशक्तिरपेक्षिता भवति। सर्वदावधानेनेच्छाशक्तिः सुदृढ़ा भवति। ये सदा स्वकार्यं सावधानतया कुर्वन्ति तेषामवधानं तत्रैकाग्रं सञ्जायते। ततश्च चित्तैकाग्र्यादिच्छाशक्तिरपि प्रबला भवति। किन्तु येषांमिच्छाशक्तिर्दुर्बला भवति तेषामवधानं काप्येकाग्रतां नाप्नोति। तेषां मनश्चचलं सर्वदैवेतस्ततो धावति। न ते स्वस्थतया विचारयितुं पारयन्ति नापि साधुतया किमपि कार्यं सम्पादयितुं प्रभवन्ति। तत्रेच्छाशक्तेर्दौर्बल्यस्य मुख्यतया निम्नाङ्किताास्त्रयः प्रकाराः परिगण्यन्ते—

१. कस्मिंश्चिदावेशविशेषे प्रवाहः।
२. आग्रहातिशयः क्वचित्।
३. सदा दोलायमानत्वम्।

१. आवेशविशेषे प्रवाहः—आवेशप्रवाहात्मकमिच्छाशक्तेः प्रथमं दौर्बल्यं बालकेषु प्राधान्येनोपलभ्यते। बालानां विचारशक्तेरभावादावेशे प्रवाहः स्वाभाविकः सुकरश्च भवति। यथा-यथा विचारशक्तिर्वृद्धिं याति तथा-तथा आत्मनियन्त्रणसामर्थ्यमपि जनस्य वर्धते। ततश्चावेशप्रवाहेऽपि न्यूनता सम्पद्यते। अत एव अवस्थया प्रौढोऽपि जनो यदि आवेशेनोह्यमान एव व्यापारेषु प्रवर्तते तदा सोऽपि बालकल्प एव भवति। तस्य कार्यं चापि बालचापलपदेन व्यवह्रियते। यश्च बालोऽपि आवेशप्रवाहादात्मानं रक्षति आत्मनियन्त्रणं च विदधाति स प्रौढकल्प आख्यायते। अत एव प्रौढत्वं वस्तुतो न आयुष्यापेक्षं भवति किन्त्वात्मनियन्त्रणापेक्षम्। यो यथा-यथात्मनियन्त्रणं करोति स तथा-तथा प्रौढत्वं

आपद्यते । ये चात्मनियन्त्रणक्षमा न भवन्ति अनायासेनैव चावेश-प्रवाहे प्रवहन्ति ते प्रौढ़ा अपि बाला एव व्यवह्रियन्ते विज्ञैः । केचन जना यावज्जीवनं सदैवावेशवशवर्तिनो भवन्ति । तेषामिच्छाशक्तिदुर्बला भवति । ते परेषां शुभमशुभं वा निर्देशं विचारं विनैव गृह्णन्ति । तदिदं सर्वमपीच्छाशक्ति दौर्बल्यादेव भवति ।

२. आग्रहातिशयः क्वचित्—अयमपीच्छाशक्तिदौर्बल्यस्यैव द्वितीयं रूपम् । इच्छाशक्तिप्राबल्यमाग्रहश्चात्यन्तं भिद्येते । विवेकानुसारं क्रियाणां सञ्चालन एवेच्छाशक्तेः प्राबल्यं भवति नाग्रहे । परिस्थित्यादि-वशात् समये-समये क्रियाणामाचरणानां च परिवर्तनमपेक्षितं भवति । यो जनस्तदावश्यकं परिवर्तनं कर्तुं न पारयति स जीवनसंग्रामे साफल्यं नाप्नोति । आग्रहग्रहिलाः पुरुषाः प्रायस्तादृशे परिवर्तने समर्था न भवन्ति । के हिताहितमवगणयन्तः स्वाभिनिवेशानुसारमेव व्यवहरन्ति । तेषां बुद्धिरपि बालबुद्धिकल्पा भवति । बालको यदा रुष्टो भवति तदा कस्याप्युचितमनुचितं वा किम. . न शृणोति । यथा-यथा च तं दुराग्रहा न्निवारयितुं यतन्ते तथा-तथा तस्याग्रहो वर्धते । एवं प्रौढ़ानामप्याग्रहा-तिशयस्तेषां बालत्वख्यापनायैव भवति । न केवलमशिक्षितानामेव दुराग्रहप्रवृत्तिरुपलभ्यते किन्तु विचारशीलानामपि कदाचिदाग्रहप्रवृत्ति-स्तान, विवेकभ्रष्टान् विदधाति । ततश्च ते न केवलमात्मन एवाहितं कुर्वन्ति किन्तु स्वाश्रितानामन्येषां जनानां, स्वसन्त स्वराष्ट्रस्याप्यहितं साधयन्ति । राजशक्तिसम्पन्ना यदि दुराग्रहपतिता भवन्ति तदा सकल-मपि राष्ट्रं विनश्यति, सर्वेऽपि च देशवासिनस्तस्य दुराग्रहस्य फलमनु-भवन्ति । राष्ट्रकर्णधाराणां दुराग्रह एव महायुद्धानां हेतुर्भवति ।

३. सदा दोलयमानत्वम्—सदैव चेतसो दोलायमानत्वमपीच्छा शक्तेर्दौर्बल्यस्य तृतीय रूपम् । यथा क्वचिदाकस्मिकनिर्णयस्य दुराग्रहस्य वा प्रवृत्तिर्भवति एवमेव क्वचिद् विचारातिरेकस्य प्रवृति-र्लभ्यते । केचन पुरुषाः कस्यापि विषयस्य सद्यो निर्णयं विधातुं न प्रभवन्ति । ते स्वल्पस्यापि विषयस्य क्षुद्रस्यापि च कार्यस्य निर्णयं कर्तुमसमर्थाश्चिरं विचारयन्ति । तेषां पुरुषाणां सर्वापि कर्तृत्वशक्तिर्विचारणे एव

परिसमाप्यते ततश्च यदा निर्णयानन्तरं कार्यानुष्ठानस्यावसर आयाति तदा ते तत्रात्मनोऽयोग्यत्वमनुभवन्ति । कदाचिच्च निर्णयविलम्बेन कार्यानुष्ठानसम्भवमेव जायते । ये जनाः चिरं विचारयन्ति शीघ्रं च कस्यापि विषयस्य निर्णयं विधायानुष्ठानं कर्तुं न पारयन्ति ते दीर्घसूत्रिण उच्यन्ते । दीर्घसूत्रिणो जनाः किमपि कार्यं कर्तुं समर्था न भवन्ति न च जीवने साफल्यं प्राप्नुवन्ति । झटिति विवेकयुक्तो निर्णयस्तदनुरूप-आचारः सफलतायाः प्रयोजकौ भवतः तत्समर्थस्यैव जनस्य जीवनं सफलं भवति ।

तथा चोक्तम्—

क्वचित्प्रवाह आवेशे आग्रहातिशयः क्वचित् ।
व्यामोहोऽथ त्रयं ज्ञेयमिच्छादौर्बल्यसम्भवम् ॥१५॥

## स्वतन्त्रतावादो नियतिवादश्च—

इच्छाशक्तेः सामर्थ्यविषये स्वतन्त्रतावादो नियतिवादश्चेति मतद्वयमुपलभ्यते । स्वतन्त्रतावादिनां मते इच्छाशक्तिर्हि इच्छाभ्यो वासनाभ्यश्च भिन्नास्ति । सैव जनस्य तृष्णानामिच्छानां वा नियन्त्रणं करोति । यदा द्वयोरिच्छयोर्विरोधाद् द्वन्द्व उत्पद्यते तदा प्रबलामिच्छा-मनुसृत्यैव निर्णयो भवति । तत्रेच्छाशक्तिरेव निर्णयनियामिका भवति । अयं स्वतन्त्रतावादिनां सिद्धान्तः । नियतिवादिनां मते निर्णयो नाध्यात्मशक्तेः कार्यं किन्तु प्रकृतिनियन्त्रितो भवति । इच्छाशक्तिर्हि न स्वतन्त्रा काचिदाध्यात्मिकी शक्तिरत एव स्वतन्त्रतावादो अवैज्ञानिक एवाभ्युपेयः । विज्ञानवादिनां मते आभ्यन्तरजगतो वाह्यजगतो वा कापि घटना कार्यकारणभावं नातिक्रामति । कारणानुरूपं हि कार्यं भवति । भौतिके जगति दृश्यते यच्छक्तिद्वयविरोधे प्रबलैव शक्तिः स्वकार्ये समर्था भवति न दुर्बला । तदनुरूपमेवाभ्यन्तरे जगत्यपि शक्तिद्वयविरोधे प्रबला इच्छैव बिजयिनी भवति । तदनुकूल एव च निर्णयो भवति । कार्यकारणभावानुगतोऽयं निर्णयो नियतिवादे एव सम्भवति न स्वतन्त्रतावादे । अत एव स्वतन्त्रतावादो अवैज्ञानिकः ।

स्वतन्त्रतावादिनो हि चैतन्यवादिनो भवन्ति नियतिवादिनश्च जडवादिनो भवन्ति । इच्छाशक्तिस्वातन्त्र्येऽपि सा पूर्वपरिणामैः संस्कारैश्च प्रभाविता एव भवति निर्णये, ततो न सर्वथा स्वतन्त्रा ।

तदुक्तम्—

इच्छाशक्तिः स्वतन्त्रता वा नियत्या वा नियन्त्रिता ।
निर्णये, मतभेदोऽयं जड़चैतन्यवादयोः ॥१७॥
तत्र स्वातन्त्र्यवादे सा भिन्नैवेच्छादिभिर्मता ।
द्वन्द्वे वाथ विरोधे वा इच्छयोः सा नियामिका ॥१८॥
पक्षान्तरे तु कार्यं वै सर्वं हेतुनियन्त्रितम् ।
अत इच्छाव्यवस्थापि बलाद्धेतोर्नियन्त्रिता ॥१९॥
बाह्यशक्ति - विरोधे वै बाधते प्रबला पराम् ।
एवमिच्छापि या ज्येष्ठा बाधते दुर्बलां तु सा ॥२०॥
चैतन्यवादिनः प्रायः इच्छास्वातन्त्र्यवादिनः ।
ब्रुवते ये ऽस्वतन्त्रां तु जडवादिन एव ते ॥२१॥
इच्छा सर्वा नियत्यैव तन्मते तु नियन्त्रिता ।
इच्छास्वातन्त्र्यपक्षोतो नवै वैज्ञानिको मतः ॥२२॥
स्वातन्त्र्येऽप्यथ शक्तिः सा संस्कारैर्निर्णयैस्तथा ।
प्रभाव्यते ततो नूनं न स्वतन्त्रास्ति सर्वथा ॥२३।

---

## प्रश्नाः

१. इच्छाशक्तेः किं स्वरूपम् । काश्च तस्या विशिष्टाः क्रिया ।
२. निर्णयप्रक्रिया सविस्तरं निरूपणीया ।
३. कतिविधा निर्णयाः । संवेगात्मको निर्णयः सोदाहरणं प्रदर्शनीयः ।
४. निर्णयस्य पञ्चाङ्गानि षडङ्गानि च निरूपणीयानि ।
५. इच्छाशक्तिदौर्बल्यं कतिविधम् । सविस्तरं निरूपणीयम् ।
६. स्वतन्त्रतावादानियतिवादयोर्भेदः प्रतिपादनीयः ।

## त्रयोदशः परिच्छेदः

# चरित्रम

### चरित्रस्य माहात्म्यम्—

मनोव्यापाराणां क्रियापक्षस्य चतुर्ष्ववान्तरविभागेषु निरूपितेषु चरित्रात्मकस्य पञ्चमविभागस्य निरूपणं प्रसङ्गप्राप्तमितीह तद्विधीयते। चरित्रं हि मानवजीवनस्य सारभूतं मुख्यं वस्तु। 'अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः' इतीयमभियुक्तोक्तिर्वृत्तापरपर्यायस्य चरित्रस्य माहात्म्यमुद्घोषयन्ती तस्य लोकोत्तरमुत्कर्षमभिव्यनक्ति। चरित्रवन्तो जनाः सर्वेषां पूजाभाजनानि भवन्ति। विपरीतास्वपि परिस्थितिषु ते कदापि हतोत्साहा न भवन्ति प्रत्युत साफल्याय बद्धपरिकराः कृत-सङ्कल्पाश्च ते द्विगुणितेनोत्साहेन विघ्नानां सामुख्यं विदधति। यथा-यथा च विघ्नास्तन्मार्गे आयान्ति तथा-तथा तेषां चरित्रं दीप्यते। सामान्या जना वातावरणानुकूलं व्यवहरन्ति चरित्रधनाः पुनर्वातावरणं नानुगच्छति किन्त्वनुकूलं प्रतिकूलं वा समुचितं न्यायानुमोदितं च कार्यं सोत्साहमारभन्ते। वातावरणं च स्वयमेव तदनुरूपं जायते। चरित्रहीना दुर्बलचरित्रा वा जनाः सदैव साहसहीना भवन्ति। ते सदैव वातावरण-स्यानुकूल्यमेवान्वेषयन्ति। स्वदोषाज्जायमानामसफलतां चान्येषां शिरसि स्थापयन्ति।

### चरित्रस्य लक्षणम्—

मनोविज्ञानदृशा चरित्रशब्दोऽतीव व्यापकः शब्दोऽस्ति। मनुष्यस्य सर्वेऽपि संस्कारा अत्रान्तर्भूता भवन्ति। केचन संस्कारा ज्ञाता केचनाज्ञाताश्च भवन्ति। ते सर्वेऽपि चरित्रान्तर्गता भवन्ति। केवलं संस्काराणा समूहमात्रमेव चरित्रं न भवति किन्तु परस्परमन्विताः सुसम्बद्धाश्च संस्काराश्चरित्रपदवाच्यतामायान्ति। चरित्रवतां सर्वासां क्रियाणां नियन्त्रणं समन्वितसंस्काररूपात् सिद्धान्तादेव भवति। मैगडूगलमहोदयेन स्थायिभावानां समूहश्चचरित्रमित्युक्तम्। मूलप्रवृत्ति-प्रकरणे विविधा स्थायिभावाः पूर्वं प्रदर्शिता अग्रे च संवेगनिरूपण-प्रसङ्गे दर्शयिष्यन्ते। त एव मानवानां विविधासु क्रियासु प्रवृत्ति-

निमित्ततामुपयान्ति । तेषु केचिदुत्कृष्टाः केचिच्च निकृष्टा भवन्ति स्थायिनो भावाः । उत्कृष्टा स्थायिभावाः उत्कृष्टेषु व्यापारेषु निकृष्टाश्च निकृष्टेषु कार्येषु प्रवर्तयन्ति जनान् । इमे स्थायिनो भावा विविधैः पदार्थैः सह पुरुषाणां सम्बन्धं द्योतयन्ति । भूयोऽनुभूतिसाम्यं स्थायिभावस्य जनकं भवति । एकस्मिन् विषये भूयो भूयः समानाकारानुभूतिस्तत्र रागद्वेषात्मकं संस्कारं जनयति । क्वचिद् रागात्मकः स्नेहात्मको वा क्वचिद् द्वेषात्मको घृणात्मको वा संस्कारः स्थायिभाव उच्यते । स एव मानवचरित्रस्य मूलं भवति । एवमुत्कृष्टानां निकृष्टानां च संस्काराणां समष्टि-र्मानवजीवने भवति । सैव चरित्रपदवाच्या भवतीति उत्कृष्टं निकृष्टं चोभयविधमपि चरित्रं सम्भाव्यते । किन्तु यदात्र चरित्रवान् पुरुष इति पदं प्रयुज्यते तदा उत्कर्षातिशये मतुप-प्रत्ययस्य विधानाद् प्रशस्तचरित्रयुक्त एव जनो गृह्यते न निकृष्टचरित्रः । यस्यान्तःकरणे उत्कृष्टानां स्थायिभावानां प्राचुर्यं भवति स एव प्रशस्तचरित्रत्वात् चरित्रवानित्युच्यते । अत एव बालानां मनसि प्रशस्तानां स्थायिभावानामाधानं यथा भवति तथा प्रयतितव्यम् ।

मैगडूगलमहोदयेन स्थायिभावसमूहस्य चरित्रत्वप्रतिपादनात् स्थायिभावैः सह चरित्रस्याभेदः स्थापितः । यद्यपि तस्यायं सिद्धान्तो न सर्वसम्मतः तथापि स्थायिभावानां चरित्रे महत्वपूर्णं स्थानं विद्यत इति निर्विवादम् । मानवजीवने भूयान् भागः स्थायिभावैर्नियन्त्रितो भवति । मूलप्रवृत्तिव्यतिरिक्तः प्रकृतिरूपोऽर्जितक्रियात्मको व्यापारो वा भवेत् विचारात्मक इच्छितक्रियारूपो व्यापारो वा भवेत् स सर्वोऽपि स्थायिभावै-रेव सञ्चाल्यते । विचारा यदा स्थायिभावतां प्रतिपद्यन्ते तदैवाचारं प्रभावयन्ति नान्यथा । एवं मानवजीवनस्योत्कृष्टतमाः सिद्धान्ता अपि यावत् स्थायिभावतां न प्रतिपद्यन्ते तावत्तेषामाचरणे कश्चिदपि प्रभावो न भवति । प्रायो विपत्तिकाले सिद्धान्तवादिनामपि बुद्धिर्व्यामोहिता भवति । तथाहि—

प्रायः समापन्नविपत्तिकाले
धियोऽपि पुंसां मलिनीभवन्ति ।

इत्यभियुक्तोक्तिरिममेवार्थं प्रतिपादयति । विपत्तिकाले पुरुषो विवेकविपरीतमेवानुतिष्ठति । स रागद्वेषयोर्नियन्त्रणं कर्तुं न पारयति ।

तत्र मानवस्य मूलप्रकृतिरेवापराध्यति। तन्नियन्त्रणार्थं स्थायिभावानामावश्यकता भवति। अत एव दार्शनिकापेक्षया भक्ता दृढचरित्रा भवन्ति। दार्शनिकेषु ज्ञानमार्गानुयायिषु विचारशक्तिप्राधान्यं भवति किन्त्वात्मनियन्त्रणशक्तिस्तथा न भवति। भक्तिमार्गानुयायिषु पुनर्भक्तेषु आत्मनियन्त्रणशक्तेः प्राधान्यं भवतीति तेषां चरित्रं सुदृढं भवति। दार्शनिकेषु स्थायिभावानां दौर्बल्यं, भक्तेषु च तेषां प्रबल्यमेवात्र कारण भवति। यः पुरुष उत्कृष्टं चरित्रं कामयते तेनोत्कृष्टाः स्थायिभावा अवश्यमेवोपार्जनीयाः। अत एव बालानां चरित्रनिमार्णाय ते, उत्कृष्टानां स्थायिभावानामर्जने प्रवर्तनीयाः।

## चरित्रं प्रकृतिश्च—

स्थायिभावानां समूहश्चरित्रमिति यथा मैगडूगलमहोदयस्य सिद्धान्तस्तथान्येषां मते प्रकृतिपुञ्ज एव चरित्रमिति सिद्धान्तोऽपि दृश्यते। स्थायिभाववत् प्रकृतयोऽपि उत्तमा अधमाश्च भवन्तीति सर्वासां प्रकृतीनां समूहश्चरित्रं भवति। किन्तु नीतिशास्त्रे प्रशस्तानां प्रकृतीनां पुञ्ज एव चरित्रपदवाच्यो भवति। यासां प्रकृतीनां निर्माणे मानवस्य स्वीया इच्छाशक्तिः प्रयोजिका भवति ता एव प्रशस्ताः प्रवृतयो भवन्ति, ता एव च चरित्रनिर्माणे उपयुज्यन्ते, इति प्रकृतिप्रकरणे प्रतिपादितचरम्। मूलप्रवृत्तीनां परिवर्तनेनैव तासां प्रकृतीनां निर्माणं भवति न नैसर्गिकेन जीवनयापनेन। पशूनां जीवनं नैसर्गिकं मूलप्रवृत्तिनियन्त्रितं च भवतीति तत्र चरित्रनिर्माणं न भवति। मानवानां विचारान्विता ऐच्छिका व्यापारा एव मूलप्रवृत्तीनां परिवर्तनं विधाय चरित्रनिर्माणं कुर्वन्ति। अत एव मैगडूलमते चरित्रनिर्माणाय यथा प्रशस्तानां स्थायिभावानामार्जनमावश्यकं तथान्येषां मते प्रशस्तानां प्रकृतीनामर्जनं चरित्रनिर्माणायापरिहार्यं भवति। एवं स्थायिभावानां समूहश्चरित्रं प्रकृतीनां पुञ्जश्चरित्रमिति मतद्वयं चरित्रलक्षणविषये समुपलभ्यते।

तथा चोक्तम्—चरित्रं स्थायिभावानां समूह इति डूगलः।
प्रकृतीनां पुनः पुञ्जश्चरित्रन्तु परैर्मतम् ॥१॥
स्थायिभावास्तु संस्काराः प्रकृतयस्तन्मूलिकाः।
ततः संस्काररूपं हि वृत्तं कर्मानुसारि च ॥२॥

## चरित्रनिर्माणोपायाः—

'यन्नवे भाजने लग्नः संस्कारो जायते दृढः' इत्यभियुक्तोक्तिमनुसृत्य बाल्यावस्थायामेव संस्काराधानं चरित्रनिर्माणं च सुकरं भवतीति शैशव एव शिक्षकैस्तत्र सचेष्टैर्भाव्यम्। चरित्रनिर्माणं शिक्षायाः प्रधानमुद्देश्यम्। अत एव प्राचीना गुरुकुलशिक्षापद्धतिश्चरित्रनिर्माणस्य प्राधान्यं व्यवस्थापयन्ती विद्याभ्यासव्यवस्थां विदधाति। चरित्रनिर्माणस्य १ उपदेशो २ अनुकरणं, ३ निर्देशो ४ दण्डः, ५ प्रोत्साहनं ६ अभ्यासश्चेति षट् मुख्यसाधनानि अम्नायन्ते।

तथा चोक्तम्—

उपदेशोऽनुकरणं निर्देशो दण्ड एव च।
प्रोत्साहनमथाभ्यासो वृत्तनिर्माणसाधनम् ॥३॥

१. उपदेशः—उपदेशो हि चरित्रनिर्माणसाधनेषु प्रथमं साधनम्। स च प्रत्यक्ष-परोक्षपरोक्षभेदाद् द्विविधो भवति। तत्र परोक्षोपदेशो हि काव्यनाटकेतिहासोपन्यासादिसाहित्यमुखेन दीयते। न केवलमितिवृत्तनिर्वाहेण काव्यादीनां साफल्यं भवति किन्तु सरसतापादनेन कृत्याकृत्यप्रवृत्तिनिवृत्तिद्वारेण चरित्रनिर्माणमपि तेषां मुख्यं प्रयोजनम्। अत एव—

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥

इत्यादौ काव्यस्योपादेयत्वं चतुर्वर्गसाधनत्वं च प्रतिपादितम्। किन्तु कैश्चित् तत्र काव्यादिषु शृङ्गारातिशयाधानेन साहित्यस्य चरित्रनिर्माणसाधनत्वमुपेक्षितप्रायम्। सत्साहित्यं हि मनसो दुर्भावान् विनाश्य सद्भावानामाधानं करोति। अत एव अरस्तू-महोदयेन 'सङ्गीतं हि मनसो दुर्भावान् रेचयति' इत्युक्तम्। यत्साहित्यं यच्च सङ्गीतं दुर्भावानां रेचनं सद्भावानां चाधानं करोति तदेव यथार्थं साहित्यं सङ्गीतं च भवति। तद्भिन्नं सर्वमपि शृङ्गारप्रधानं साहित्यादिकं हेयं हानिकरं च भवतीति वर्ज्यम्।

बालानां साहित्यं कथात्मकं कवितात्मकं च भवति। कथाः प्रायः कल्पिताः भवन्तीति कैश्चित् तासां चरित्रनिर्माणेऽनुपयोगित्वं हेयत्वं च प्रतिपादितम्। किन्तु कल्पनाप्रधाना अपि कथा अप्रत्यक्षोपदेशेऽत्यन्तमुप-

युज्यन्ते इति पञ्चतन्त्रादिकथासु स्पष्टं प्रतीयते। पञ्चतन्त्रकारेण विष्णुशर्मणा सुकुमारमतयो राजकुमाराःकथामुखेनैव स्वल्पेन कालेन राजनीतिविशारदाः कृताः, इति कथानामुपदेशसाधनत्वमनुपममसन्दिग्धं चास्ति। एवमुत्तमाः कविता अपि बालानामप्रत्यक्षोपदेशे प्रत्यक्षोपदेशेऽपि वात्यन्तमुपयुक्ता भवन्ति। इतिहासादीनामप्यप्रत्यक्षोपदेशे महत्वमसन्दिग्धम्। रामादिवत्प्रवर्तितव्यं न रावणादिवदिति कृत्याकृत्यपरिज्ञानमितिहासादिना सम्यग् भवति। एवं साहित्यादिसाधनैः परोक्ष उपदेशो बालानां चरित्रनिर्माणेऽत्यन्तमुपयुज्यत इति निर्विवादम्।

किन्तु प्रत्यक्षोपदेशविषये विदुषां वैमत्यमस्ति। आधुनिका मनोवैज्ञानिकाः प्रत्यक्षोपदेशमार्गं नाद्रियन्ते। तन्मते प्रत्यक्षोपदेशेन बालानां लाभो न भवति कदाचिद्धानिरपि सञ्जायते। प्रत्यक्षोपदेशेन कदाचिदनिष्टवस्तूनां परिज्ञानं सुकरतया सञ्जायते। ब्रह्मचर्यं पालनीयं, चौर्यं न विधेयमित्येवमादिना प्रत्यक्षोपदेशेन येषां विधिर्निषेधो वा विधीयते तद्विपरीतमनिष्टमर्थजातं तेषामवधानगोचरतामुपैति। यदा चाध्यापकस्य स्वकीयं चरित्रमपि दूषितं भवति तदा तन्मुखेन प्रदत्तः प्रत्यक्षोपदेशो विपरीतमेव प्रभावं जनयति। अत एव रूसोमहोदयः प्रत्यक्षोपदेशस्य प्रत्याख्यानं करोति। तन्मते नैतिकी शिक्षा न देया। बालाः सत्यासत्ययोर्भेदं कर्तुं नार्हन्तीति तेषां कृते नैतिकोपदेशोऽन्धविश्वासतुल्य एव भवति। विवेकशक्तिश्च तेषां हीयते। अत एव कदाचिदनैतिकं कार्यमपि कर्तुं प्रवर्तन्ते।

किन्तु नैतिकशिक्षायाः प्रत्यक्षोपदेशस्य चायमत्यन्तविरोधो न समीचीनः। चरित्रनिर्माणे तेषामपि महत्वपूर्णं स्थानं विद्यते। चरित्रहीना अध्यापका उपदेशप्रदानेऽधिकारिणो न भवन्तीति सत्यम्। किन्तु तादृशो जनोवस्तुतोऽध्यापकपदयोग्य एव न भवति। यत्र बालानां श्रद्धा नास्ति तस्यानुशासनेऽपि ते न तिष्ठन्ति किमुत तदुपदेशग्रहणे। अतो योग्या एवाध्यापका बालानां शिक्षायां नियोक्तव्याः। ते च प्रत्यक्षेण नैतिकोपदेशेनापि बालनां चरित्रनिर्माणे महदुपकुर्वन्ति।

चरित्रनिर्माणे नव्यानां मनोवैज्ञानिकानामनुसन्धानं महत्वपूर्णमस्ति। तन्मते बालानां सदाचारप्रवृत्तिः स्वयमेवोदेति। दण्डेन भयेन

वा सा कथमपि नोदेति । बाल्ये शिशवो हि प्राय आत्मपरायणा भवन्ति । आत्मनः सुखायैव तेषां सर्वोऽपि व्यापारो भवति । किन्तु प्रौढावस्थायां ते स्वार्थं विहाय परार्थप्रधानाः सञ्जायन्ते । सर्वोत्कृष्ट आनन्दो न स्वार्थसाधने किन्तु परार्थानुष्ठानेएव भवतीति प्रौढ़ावस्थायां ते स्वयमेवानुभवन्ति ।

२. अनुकरणम्—बालानां चरित्रनिर्माणेऽनुकरणमपि प्रधान साधनं भवति । उपदेशापेक्षया दृष्टान्तः सद्यःफलप्रदो भवति । बालानामनुकरणयोग्या दृष्टान्ता बालानां वातावरणेऽप्युपलभ्यन्ते । इतिहासादिभ्यश्चापि गृहीतुं शक्यन्ते । अध्यापकानां चरित्रमप्यनुकरणीयं भवति बालानां कृते । तस्मादध्यापका आदर्शचरिता एव नियोक्तव्याः । बालानां चरित्रे सर्वतोऽधिकः प्रभावः सहवासिनां मित्राणां च भवति । अनुकरणस्य गतिर्हि जलप्रवाहगतिमनुकरोति । यथा जलस्य प्रवाहोर्ध्वप्रदेशान्निम्नप्रदेशाभिमुखो भवति एवमनुकरणमपि उच्चस्तरीयाद्बालकान्निम्नस्तरीयेषु बालकेषु प्रसर्पति । अत एव यो बालकः कक्षायां श्रेष्ठतमो भवति तस्यानुकरणं कर्तुमन्ये यतन्ते । ये च सोत्साहं प्रयतन्ते तेषूत्तमानां गुणानामाधानं भवत्येव । महापुरुषाणामनुकरणमपि गुणाधानकरं भवति ।

३. निर्देशः—निर्देशोऽपि चरित्रनिर्माणस्य तृतीयं मुख्यं च साधनमस्ति । सामान्यप्रवृत्तिप्रसङ्गे निर्देशानां [१]व्यक्तित्वनिर्देशः, [२]सामूहिको निर्देशः, [३]आत्मनिर्देशश्चेति त्रयो भेदा दर्शिताः । ते सर्वे चरित्रनिर्माणे उपयोगिनो भवन्ति । प्रत्यक्षोपदेशो हि वचनसापेक्षो व्यक्तित्वनिरपेक्षश्च भवति । कश्चिदपि जनो कीदृशमप्युपदेशं दातुं प्रभवति । यश्च वाग्व्यापारकुशलो भवति स वाचिकमुपदेशं सरलतया दातुमर्हति । निर्देशश्च व्यक्तित्वाश्रितो वचननिरपेक्षश्च भवति । यस्य व्यक्तित्वं सम्पन्नं तत एव निर्देशो गृह्यते न व्यक्तित्वहीनात् । उपदेशो हि दीयते निर्देशश्च स्वत एव गृह्यते । चेतनं मन एवोपदेशस्य क्षेत्रम् । निर्देशक्षेत्रं चाचेतनं मनो भवतीत्युपदेशनिर्देशयोर्भेदः । किन्तु निर्देशस्यातिशयितः प्रयोगो नोचितः । तर्कबुद्ध्यभावे हि निर्देशः कार्यं करोति । अतो निर्देशप्राचुर्ये बालानां विवेकशक्तिर्हीयतेऽन्धविश्वासश्च वर्धते । एवं निर्देशातिशयप्रभावात् तेषां मानसी शक्तिरपि दुर्बला भवति । एवमिदं स्पष्टं यद्बालानां

प्रारम्भिकावस्थायामनुकरणं निर्देशश्चोपयुज्येते किन्तु यदा विवेकशक्ते र्विकासो भवति तदानयोः साधनयोरुपयोगो न्यूनतामानेयः।

४. दण्डः—चरित्रनिर्माणसाधनेषु दण्डश्चतुर्थं साधनम्। दण्डेन दण्डभयेन वा बालानामशुभप्रवृत्तीनां निवारणं पुरस्कारादिलोभेन च तत्र शुभगुणानामाधानं सुकरं भवतीति प्रातिस्विकोऽनुभवः। अत एवात्र दण्ड-ग्रहणेनैव पुरस्कारादिप्रोत्साहनसाधनानामपि ग्रहणं भवतीति विज्ञेयम्। शिक्षायां चरित्रनिर्माणे च दण्डपुरस्कारयोः किं स्थानं भवतीत्यत्र विदुषां विप्रतिपत्तयः सन्ति। प्रत्नानां मते दण्डपुरस्कारयोश्चरित्रनिर्माणे प्रमुखं स्थानं भवति। 'लालनाश्रयणे दोषास्ताडनाश्रयणे गुणाः' इतीयमभियुक्तो-क्तिः प्रत्नानां दण्डविषयकं दृष्टिकोणमुपस्थापयति। न केवलं भारते वर्षे किन्तु सर्वेष्वपि देशेषु पुराकाले दण्डप्रधानैव शिक्षाव्यवस्थासीत्। किन्तु अष्टादशे शते फ्रांसदेशोद्भूतेन रूसो-नाम्ना विख्यातेन विदुषा शिक्षायां महत्वपूर्णं परिवर्तनं कृतम्। तेन दण्डप्रधानेयं शिक्षाव्यवस्था समूलमुत्सादिता। बालको जन्मतोऽसुरप्रभावितो भवति। दण्डव्यवस्था आसुरप्रभावाद्विमोच्य तत्र दैविका भावा सन्निवेश्यन्ते इति तत्पूर्ववर्तिनां खीष्टीयानां मतमासीत्। किन्तु रूसोमहोदयेन तद्विपरीतमेतत् स्थापितं यत्, जगन्निर्मातुः सकाशादुत्पन्नः पदार्थः सदैव पवित्रः शुद्धश्च भवति। मानवसंसर्गाच्च तत्र मालिन्यमायाति। अतो बालका जन्मतो शुद्धाः पवित्रा दिव्यगुणविशिष्टाश्च भवन्ति। अत एव दण्डव्यवस्थया बालानां कश्चिदपि सुधारो न क्रियते प्रत्युत तेषां दिव्या गुणा अपह्रियन्ते। तन्मते आसुरीशक्तिर्हि न बालेषु प्रत्युत दण्डपरायणेष्वध्यापकेषु सन्निहिता भवति। सैव तान् सुकुमाराणां बालानां ताडने प्रवर्तयति। दण्डप्रयोगेण भयभीतो बालः कातरो विवेकहीनश्च जायते। सद्गुणा बालेषु वाह्यदेशा दानीय नारोप्यन्ते किन्तु बुद्धिविकासानुसारं स्वत एवाविर्भवन्ति।

रूसोमहोदयस्यैव विचाराणां समर्थनं जर्मनदेशोद्भूतेन प्रसिद्धेन शिक्षाविशारदेन हर्बर्ट-महोदयेनापि कृतमस्ति। तन्मते आत्मनियन्त्रण-शक्तेरभिवृद्धिरेवानुशासनस्य मुख्यं प्रयोजनम्। ततश्च बालानामात्म-नियन्त्रणसामर्थ्यमुद्बोधयितुं यो दण्डो दीयते स तु तेषां चरित्रनिर्माणे उपयुज्यते। यश्च दण्डः केवलं भयोत्पादनार्थं दीयते स हितावहो न

भवति प्रत्युत हानिकर एव सम्पद्यते। आधुनिकं मनोविश्लेषणविज्ञानमपि रूसोमहोदयस्य दण्डसम्बन्धिनो विचारान् समर्थयति । कठिनेनानुशासनेन बालेषु विविधानां दुर्गुणानामाविर्भावो भवति । तद्विपरीतं सहानुभूति–र्बालेषु विविधानां गुणानामाधानं करोति। तत्रात्मविश्वासं चोत्पादयति । यथा दण्डोऽवगुणान् शमयति तथा सहानुभूतिः तत्र सद्गुणानादधाति। केवलं दुर्गुणानां दमनादेवात्मनियन्त्रणं नायाति । किन्त्वात्मनियन्त्रणार्थं सद्गुणानां विकासोऽपरिहार्यो भवति। तद्विकासार्थमवगुणानां परिहारोऽपि सहानुभूतिभावनयैव करणीयः। स्नेहेन प्रोत्साहनेन च तेषु सद्गुणानांमाधानं कर्तव्यम्। अस्य सर्वस्यायमेवाभिप्रायो यच्छिक्षायां दण्डस्य न्यूनतमः प्रयोगः करणीयः। किन्तु दण्डस्य सर्वथा परित्यागोऽपि नोचितो भवति । समीचीनासमीचना वा सर्वा अपि प्रवृत्तयः प्रोत्साहनेन वर्धन्ते प्रतिबन्धेन च क्षीयन्त इति मनोविज्ञानस्य सुनिश्चितः सिद्धान्तः। अत एव दण्डविधिना कुप्रवृत्तीनां दमनमप्युचितमेव भवति।

रूसोमहोदेयन प्राकृतिकशिक्षायाः सिद्धान्तः प्रतिपादितोऽस्ति । तस्यायमभिप्राय यदनुचितानामाचरणानां प्रतिविधानं प्रकृतिः स्वयमेव करोति। प्राकृतिकी च शिक्षा कृत्रिमशिक्षा पेक्षया सुदृढा भवतीति प्राकृतैरेव साधनैः शिक्षणीयाः शिशवो न कृत्रिमैः साधनैः । अग्नेः स्पर्शो न कर्तव्य इत्यत्राग्निस्पर्शादुत्पन्नो दाह एव सर्वोत्तमः शिक्षकः। यो हि बालः सकृदप्यग्निं स्पृशति स स्वयमेवानुभवति यदग्निस्पर्शो न कर्तव्यः । एवमेवौदरिकः पुरुषोऽत्यर्थं भुक्त्वा यदोदरपीडया आक्रान्तो भवति तदा स स्वयमेवानुभवति यदतिभोजनमनुचितं भवति । एवं यदा प्रकृतिरेव जनान् शिक्षयति तदा किमन्यैः दण्डविधानैः प्रयोजनम् । किन्तु रूसोमहोदयस्यायं सिद्धान्तो न समीचीनः । यदि बालकोऽग्निस्पर्शान्न निवार्यते तदा कदाचिदतिमात्रं दग्धः स विकलाङ्गोऽपि जायेत मृत्युं वापि प्राप्नुयात् । एवमौदरिको यद्यतिभोजनान्न निवार्येत विषूचिकाग्रस्तो जीवनादपि विमुक्तो भवेदिति प्राकृतशिक्षापक्षोऽयं न समीचीनः । किञ्चप्रकृतेर्योऽयं शिक्षाक्रमः सोऽपि दण्डप्रधान एवेति दण्डस्य विरोधोऽप्यनुपपन्नः। अतो दण्डस्यापि चरित्रनिर्माणे उचितं स्थानमस्त्येव। न सर्वथोपेक्षायोग्यो दण्डः।

**दण्डस्य प्रकाराः—**

दण्डस्य १ प्रतिकारको दण्डः, २ प्रतिबन्धको दण्डः ३ सुधारकश्च दण्ड इति त्रयो भेदाः समाम्नाताः । तेषां स्वरूपपरिज्ञानमपि दण्डस्य यथावत् प्रयोगे महदुपकारकं भवतीति तेषां परिचयोऽत्र दीयते ।

१. प्रतिकारको दण्डः—अपराधस्य प्रायश्चित्तानुष्ठानं हि दण्डस्य मुख्यं प्रयोजनम् । किन्तु यो दण्डः केवलं प्रतिकारबुद्ध्या दीयते स प्रतिकारको दण्ड उच्यते । यथा केनापि बालकेन कस्यापि परस्य बालकस्य किमपि वस्तु चोरितं, तत्प्रतिकाराय तेनापि बालकेन पूर्वस्य बालकस्य किमपि वस्त्वन्तरमपहृतम् । एवं एकेन कश्चिद्बालकः ताडितः । तत्प्रतिकारार्थं तेनान्यै-र्बालकैः सह मिलित्वा प्रथमो बालकस्ताडितः । अयं प्रतिकारात्मको दण्ड उच्यते । एतेन दण्डस्य मुख्यं प्रयोजनं न सिद्ध्यति । अपराधिना स्वापराधमनुभूय प्रायश्चित्तानुष्ठानं हि दण्डस्य मुख्यं प्रयोजनम् । तच्चास्यां दशायां सिद्धं न भवति । प्रतिचौर्यात् प्रतिताडनाच्चापराधिनः प्रतिहिंसाप्रवृत्तिरेवोद्बोधिता भवति न प्रायश्चित्तभावना । अतोऽयं दण्ड-प्रकारो न समीचीनः । किञ्चात्र दण्डव्यवस्था कदाचिद् वादिप्रतिवादि-पक्षयोरेव हस्ते भवति, न मध्यस्थस्येत्यतो ऽप्यसमीचीनोऽयं दण्डपक्षः । अस्य दण्डस्य सम्बन्धश्च व्यक्तिगत एव भवति न सामाजिकः ।

२. प्रतिबन्धको दण्डः—अपराधस्य पुनरावृत्तिनिवारणमेव प्रति-बन्धकदण्डस्य प्रयोजनम् । यदा बालकः कमप्यपराधं करोति, तस्य दण्डं च न प्राप्नोति तदा तस्य सा, अपराधप्रवृत्तिर्वर्धते बद्धमूला च भवति । स स्वयमपि भूयो भूयस्तदाचरणे प्रवर्तते । तदुदाहरणेन चान्येष्वपि बालकेषु सा प्रवृत्तिः प्रसर्पति । ततश्च सामाजिकी हानिर्भवति । अतोऽत्रा-पराधस्य पुनरावृत्तिप्रतिबन्धक उपायोऽन्विष्यते । तद्बुद्ध्या यो दण्डो दीयते स प्रतिबन्धको दण्ड उच्यते । प्रतिबन्धकदण्डे सामाजिकपक्षस्य प्राधान्यं भवति । प्रतिकारके दण्डे च व्यक्तिपक्षस्य प्राधान्यं भवतीत्यनयोर्भेदः ।

तथा चोक्तम्—

प्रतिकारात्मको दण्डः प्रतिबन्धक एव च ।
दण्ड. सुधारकश्चेति दण्डभेदास्त्रयो मताः ॥४॥

चौर्ये तस्यापि चौर्यं च ताडने तस्य ताडनम् ।
प्रतिकारप्रधानत्वाद् दण्ड आद्योऽयमुच्यते ॥५॥
प्रायश्चित्तानुभूतिर्हि मता दण्डप्रयोजनम् ।
तन्न सिद्धं भवत्यत्र प्रतिहिंसा च दीप्यते ॥६॥
अपराधस्तु नावृत्तो भवेत् तेन परेणवः ।
इति बुद्धया कृतो दण्डः प्रतिबन्धक उच्यते ॥७॥
वैयक्तिकी निवृत्तिर्हि उद्दिष्टा प्रतिकारके ।
सामाजिकी निवृत्तिश्च प्रतिबन्धप्रयोजनम् ॥८॥

३. सुधारको दण्डः—चरित्रे सद्‌गुणानां सन्निवेशार्थं यो दण्डो विधियते स सुधारको दण्डोऽभिधीयते । वस्तुतस्तु सर्वेषामपि दण्डानां सुधार एव परमं प्रयोजनं, तथापि प्रतिकारक-प्रतिबन्धकौ दण्डौ निषेधमुखेन कार्यं कुरुतो यावत् सुधारको दण्डो विधिमुखेन गुणाधानं विदधाति । किञ्चास्मिन् प्रकारे बालकस्य पूर्ववृत्तं विहाय तस्य भाविनो जीवनस्य सुधारे एव मुख्यतयावधानं दीयते । सुधारकदण्डस्य लक्षणत्रयं प्रतिपादितमस्ति । १ अत्रापराधी जनः स्वयमपि दण्डस्यावश्यकतामनुभवति । मयापराधः कृत इति यो दण्डो दीयते स उचित एव । इति बुद्धिर्यदापराधिनो भवति तदा स सुधारको दण्डो भवति । २ किञ्चापराधीदमप्यनुभवति यदयं दण्डो द्वेषवशान्न दीयते किन्तु मम सुधारार्थं हितार्थं च दीयते । ३ किञ्च सुधारात्मको दण्डो बालकेषु पश्चात्तापं प्रायश्चित्तभावनां च जनयति । एवं त्रिभिर्लक्षणैर्विशिष्टो दण्ड एव सुधारकदण्डपदेन व्यवह्रियते ।

तदुक्तम्—

पश्चत्तापयुतो यत्र स्वयं दण्डोपयोगिताम् ।
द्वेषाभावं च विज्ञाय दण्डं गृह्णाति बालकः ॥ ९ ॥
सोऽयं सुधारको दण्डो गुणाधानाय कल्पते ।
तस्य विधिमुखादेव प्रवृत्तिश्चैव जायते ॥ १० ॥

दण्डस्य नियमाः—बालकानां चरित्रनिर्माणे दण्डस्योपयोगितामाधातुं तद्व्यवस्थाविषये पञ्चविधा नियमा अपि विद्वद्भिरवधारिताः सन्ति । ते च निम्नाङ्किताः सन्ति—

१. दण्डप्रदानात् पूर्वं अपराधस्य सिद्धिः करणीया। यावदपराध-सिद्धिर्न भवति तावद् दण्डव्यवस्थापि न करणीया। निरपराधस्य दण्ड-व्यवस्थायां बालकस्यात्मसम्मानभावना कुण्ठिता भवति। शिक्षके च तस्यादरभावः शिथिलो भवति। अपराधिनो बालकस्य कथनं सावधान-तया पूर्वं श्रोतव्यं, ततश्चोभयोः पक्षयोस्तारतम्यं सम्यग् विचार्यैव दण्ड-व्यवस्था विधेया।

२. यादृशो यावांश्चापराधोऽस्ति परिमाणे प्रकारे च तदनुरूप एव दण्डो विधेयः, इति दण्डव्यवस्थाया द्वितीयो नियमः। एकेन बालकेन चौर्यं कृतं, अन्येन च पैशुन्यम्। तयोरुभयोरपि समरूपो दण्डो न विधेयः। चौर्यस्य प्रचुरो दण्डः,पैशुन्यस्य च तदपेक्षया न्यूनो दण्ड उचितो भवति। अयं दण्डस्य परिमाणविषयको नियमः।

३. एवं दण्डस्य प्रकारविषयेऽपि दण्डापराधयोरानुरूप्यमावश्यकं भवति। यदि कश्चिद्बालको विलम्बाद्विद्यालये आगतः। स विद्यालयानन्तरं कञ्चित्कालं विद्यालय एव निरोद्धव्यः। यो बालकः क्रीडाक्षेत्रे कलहं करोति स क्रीडाक्षेत्रान्निष्कासनीयः। एवं दण्डापराधयोः प्रकारसाम्यं साधितं भवति। मैकनमहाशयेन चरित्रगठननाम्नि पुस्तके लिखितं यदौदरिकः बुभुक्षया, उद्दण्डो नम्रताशिक्षणेन, अलसः कार्यनियोजनेन असावधानश्च स्वत्रुटीनां सुधारेण दण्डनीयः। एवमपराधदण्डयोः साम्यं सम्पादित भवति।

४. अपराधसमकालमनतिविलम्बेनैव दण्डव्यवस्था विधेया इति तुरीयो नियमः। एवं दण्डापराधयोः सम्बन्धः स्थापितो भवति। ततश्च तस्यापराधस्य पुनरावृत्तिः परिहृता भवति। विलम्बाद्विधीयमाने दण्डे दण्डापराधयोः सम्बन्धो न स्थाप्यत इति तस्य तादृशः प्रभावो न भवति। किञ्च दीर्घेऽन्तरालेऽपराधी स्वानपराधत्वसाधनाय विविधानुपायान् रचयति। यथा च दण्डापराधयोर्नैरन्तर्यमपेक्षितं तथा दण्डास्यानिवार्यत्वमप्यपरिहार्यम्। तुल्येऽपराधे एको दण्ड्यते परो न दण्ड्यते चेत्, तदा बालको दण्डास्यापरिहार्यत्वं नानुभवति। दण्डमोक्षोपायांश्च चिन्तयति।

५. दण्डस्य कादाचित्क एव प्रयोगो विधेयः। भूयो भूयो न दण्ड-नीया बालाः। अभ्यावृत्त्या दण्डव्यवस्थायां विधीयमानायां बालानां

सुधारो न भवति प्रत्युत तत्रात्महीनत्वभावनायाः समुत्पत्तिर्भवति। दण्डस्य भयं च न भवति। ततश्च तेऽधिकमुद्दण्डा भवन्ति।

एवं दण्डः सामान्यतश्चरित्रनिर्माणे निषेधात्मकमेव प्रभावं जनयतीति शिक्षायां दण्डस्य परिमित एव प्रयोगो विधेयः। दण्डो हि दुष्कर्मणो जनान्निवारयितुमेव प्रभवति। सद्गुणाधाने दण्डस्य नोपयोगः।

तथा चोक्तम्--

पूर्वं दोषस्य संसिद्धिः, दण्डे तदनुरूपता।
परिमाणे प्रकारे च, सद्यो वितरणं तथा॥ ११॥
भूयो भूयश्च दण्डस्य प्रयोगो नैव सम्मतः।
एते नियामकाः पञ्च, दण्डस्य परिकीर्तिताः॥ १२॥
निषेधात्मकमेवास्य, रूपं दण्डस्य कीर्तितम्।
दोषान्निवारयत्येव, गुणाधाने न युज्यते॥ १३॥

### ५. प्रोत्साहनम्—

चरित्रनिर्माणे प्रोत्साहनस्य पुरस्कारादेश्चापि महत्वपूर्णं स्थानं भवति। यथा दण्डव्यवस्था दोषाणां निवारणे समर्था भवति एवं प्रोत्साहनं तत्र शुभगुणानामाधानेऽत्यन्तमुपयुक्तं भवति। यथा वृक्षाणां परिपोषणाय सौन्दर्याय च कर्तनच्छेदनं खाद्यं चोभयमप्यावश्यकं भवति एवं बालानां चरित्रनिर्माणेऽप्युभयमुपयुक्तं भवति। तत्रापि कर्तनच्छेदनापेक्षया खाद्यस्यैव प्राधान्यं वृक्षपरिपोषणे भवत्येवमत्रापि दण्डापेक्षया प्रोत्साहनस्यैव प्राधान्यमास्थीयते। यः कश्चिदप्यध्यापको बालकस्य सत्प्रवृत्तीनां प्रोत्साहनं न विदधाति दण्डप्रयोगमेव च कुरुते स तस्याधिकं हितं साधयितुं न प्रभवति। प्रोत्साहनेन कदाचिद्दरिद्रा अपि बालकाः सफला उत्कृष्टाश्च जायन्ते। एकोऽतीव हृष्टः पुष्टश्च दशमकक्षाया बालकः, पठने औदासीन्यादतीव दुर्बल आसीत्। नद्यां सन्तरणकलायां क्रीडादिषु चातीव चतुर आसीत्। नद्यां निमज्जतां बहूनां जनानां तेन समुद्धारः कृत आसीत्। दशमकक्षायाः परीक्षावसरे कक्षाध्यापकेन तद्विषये मुख्याध्यापकः सूचितो यदयं बालकः परीक्षाप्रवेशायोग्यो नास्तीति परीक्षातो निरोद्धव्यः। मुख्याध्यापकेन स बालक आहूतः।

सन्तरणादिविषयिकीं चर्चां कृत्वा तेनोक्तं यत् त्वया नद्यां निमज्जतां बहूनामुद्धारः कृतः । किन्त्विदानीं त्वमेव निमज्जसि, कस्ते उद्धारं करिष्यति । तदनन्तरं च कक्षाध्यापकस्य परीक्षानिरोधसम्बद्धा सम्मतिः श्राविता । पुनश्च प्रोत्साहनानन्तरं पृष्टः किन्ते नाम परीक्षार्थिषु प्रेषणीयं न वा । बालकेनोक्तं अहं परिश्रमं कृत्वा सर्वमपि कार्यं साधुतया करिष्यामि । मे नाम प्रेषणीयमेव । मुख्याध्यापकेनोक्तं यदेकमासानन्तरं ते पुनः परीक्षणं भाविता । तत्रोत्तीर्णश्चेत् तदा ते नाम प्रेषयिष्यते । सौभाग्यान्मासानन्तरं परीक्षायां सर्वेषु विषयेषूत्तीर्ण आसीत् । वार्षिकपरीक्षायां च स द्वितीयश्रेण्यामुत्तीर्णः । एवं प्रोत्साहनेन बहूनां छात्राणामभ्यासे प्रगतिराशातीतश्च सुधारः सञ्जात इति बहुशोऽनुभूतम् । अतश्चरित्रनिर्माणे प्रोत्सहानमत्यन्तं हितावहं भवतीति निश्चितम् ।

## ६. अभ्यासः—

चरित्रनिर्माणसाधनेष्वन्तिमो मुख्यतमश्चाभ्यासः । चरित्रस्य निर्माणं वस्तुतोऽभ्यासाश्रितमेव भवति । उपदेशो, निर्देशो, अनुकरणं, दण्डः, प्रोत्साहनं चेति सर्वाण्यप्यन्यानि साधनान्याभ्यासपरत्वेनैवोपादीयन्ते । अभ्याससाधने एव तेषां परिनिष्पत्तिर्भवति । बालको यथाभ्यासं करोति तथैव तस्य चरित्रं सम्पद्यते । चरित्रस्य दार्ढ्यमिच्छशक्तिदार्ढ्याश्रितं भवति । इच्छाशक्तिदार्ढ्यं चाभ्यासाश्रितं भवतीत्यभ्यास एव चरित्रनिर्माणस्य प्रधानं साधनम् । आत्मविश्वासश्चरित्रस्याधारभित्तिः । यत्र आत्मविश्वासस्य न्यूनता भवति तत्र चरित्रदौर्बल्यं सञ्जायते । आत्मविश्वासश्चाभ्यासात् समुदेति । ततोऽपि चरित्रनिर्माणेऽभ्यास एव प्रधानं निमित्तं भवति । ये बालकानां चरित्रनिर्माणेऽधिकृताः समुत्सुकाश्च तैरिदं सम्यगवधयं यत् केवलमुपदेशमात्रेण बालकानां कोऽपि लाभो न भवति । स्वल्पमप्युपदिष्टमाचरितं च महते फलाय कल्पते । परिज्ञानमाचरणं चेत्युभयं भिन्नं वस्तु । कर्तव्यस्य ज्ञानमुपदेशमात्रेणापि सम्भवति । पुस्तकादीनां पठनमात्रादपि कर्तव्याकर्तव्यपरिज्ञानं भवति । परमाचरणमभ्यासादेव निर्मितं भवति । अभ्यासे काठिन्यं भवति किन्त्वध्यवसायिनो बाला

काठिन्यानां साम्मुख्यं विदधति। विजयं च तत्र लभन्ते। विघ्नानां विजयेनैव चरित्रस्य स्थैर्यं विकासश्च भवति। अभ्यासे प्रायो बाह्यमाभ्यन्तरं चेति द्विविधं काठिन्यमुपस्थितं भवति। बाह्या विघ्ना जटिलसमस्यारूपेण सम्मुखमायान्ति। शारीरिकैर्मानसैश्च व्यापारै-स्तन्निवारणं क्रियते। यो हि धैर्येणोत्साहेन च विघ्नानां साम्मुख्यं विदधति तस्य चरित्रमतीव सुदृढमुज्ज्वलं च जायते। आभ्यन्तराश्च विघ्ना भय-प्रलोभनरूपेण सम्मुखमायान्ति। यो भयप्रलोभनादिषु मानसेषु संवेगेषु विजयं प्राप्नोति तस्य चरित्रं देवोपमं स्पृहणीयं च जायते। स एव जीवनस्य साफल्यं चाधिगच्छति।

तदयमत्र संग्रहः—

अभ्यासोऽत्र चरित्रस्य मुख्यं निर्माण साधनम्।
तत्पराण्येव सर्वाणि साधनानि मतानि वै ॥१४॥
इच्छाशक्तेः सुदाढर्यं च आत्मविश्वास एव च।
मूलद्वयं चरित्रस्य अभ्यासादेव जायते ॥१५॥
निर्देशः केवलो नैव नोपदेशोऽपि केवलः।
अभ्यासेन विना क्वापि दृष्टश्चारित्र्यदायकः ॥१६॥
अभ्यासे निरतानां च मार्गे विघ्ना भवन्ति ये।
इच्छाशक्तेस्तु प्राबल्यात् क्षणाच्चूर्णी भवन्ति ते ॥१७॥
यद्वा विघ्नसहस्राणि तेषां मार्गगतानि वै।
सोपानत्वं समायान्ति क्रमोत्कर्षकराणि च ॥१८॥
अतो बाल्ये विनेया ये सदभ्यासे कृतादराः।
यौवनेऽक्लिष्टव्यापारा उदयं यान्ति ते सदा ॥१९॥

## प्रश्नाः

१—चरित्रस्य लक्षणं सोपपत्तिकं लेख्यम्।
२—चरित्रनिर्माणस्य कानि साधनानि।
३—प्रत्यक्षोपदेशस्य चरित्रनिर्माणे किं स्थानम्।
४—दण्डप्रोत्साहनयोश्च चरित्रनिर्माणे क उपयोगः।
५—दण्डस्य भेदा नियमाश्च प्रतिपादनीयाः।

## चतुर्दशः परिच्छेदः

# संवेदनम्

### संवेदनस्य स्वरूपम्—

मनोव्यापाराणां क्रियापक्षो, ज्ञानपक्षो भावना पक्षश्चेति पक्षत्रयं पूर्वं प्रदर्शितमासीत्। तत्र विगतपरिच्छेदेषु क्रियापक्षे सप्रपञ्चं निरूपिते सतीदानीं ज्ञानपक्षः प्रसङ्गप्राप्तः। तत्रापि च १. संवेदनं [निर्विकल्पकं प्रत्यक्षं], २ प्रत्यक्षं [सविकल्पकं प्रत्यक्षं], ३ स्मरणं, ४ कल्पना, ५ विचारः श्चेति पञ्च मुख्या अवान्तरभेदाः सन्ति। ते यथाक्रममग्रे निरूपयिष्यन्ते। तत्र च प्रथमं संवेदनमत्र निरूप्यते।

संवेदनं हि सर्वेषु ज्ञानेषु प्रथमं सरलतमं च ज्ञानमस्ति। इन्द्रियार्थयोः सन्निकर्षात् प्रथमं नामजात्यादिरहितं वस्तुमात्रावगाहि ज्ञानमुत्पद्यते। तदेवात्र संवेदनपदवाच्यं भवति। भारतीये दर्शने तन्निर्विकल्पकं प्रत्यक्षज्ञानमुच्यते। वाच्यवाचकयोर्नामार्थयोर्नित्यः सम्बन्धः। एकसम्बन्धिज्ञानं चापरसम्बन्धिस्मारकं भवतीति नियमात् दर्शनसमकालमेव वस्तुनो नामादिकं स्मृत भवतीति सर्वमपि व्यवहारदशापन्नं ज्ञानं नामजात्यादियुतं पूर्वसंस्कारसम्बद्धं च भवतीति सविकल्पकमेव सञ्जायते। तथापि बालविज्ञानं मूकानां विज्ञानं च निर्विकल्पकस्योदाहरणरूपेण प्रस्तूयते।। बाला यदा घटिकायन्त्रादिकं पश्यन्ति तदा वस्तुग्रहणविषये तेषां प्रौढानां च ज्ञानं तुल्यमेव भवति। घटिकाया वर्तुल आकारः, तन्मुखे चित्रिता अङ्काः तन्मध्यवर्ति च सूचिकाद्वयं, सर्वमपि बालैरपि तेनैवरूपेण गृह्यते येन रूपेण प्रौढै गृ ह्यते। किन्तु बालास्तन्नामादिकं न जानन्तीति नामजात्यादिरहितं भवति तेषां ज्ञानम्। तदेव च निर्विकल्पकं ज्ञानमुच्यते। निर्विकल्पकेन नामजात्यादिरहितेन ज्ञानेन च कश्चिदपि व्यवहारो न सम्भवतीति व्यवहारकालेऽवश्यं नामजात्यादिप्रयोगोऽपेक्ष्यते। प्रौढानामप्याद्यं ज्ञानं वस्तुमात्रावगाहित्वेन निर्विकल्पकमेव भवति। क्षणान्तरे तत्र नामजात्यादिसम्बन्धात् सविकल्पकत्वं जायते। अर्थज्ञानकाले सर्वमपीन्द्रियजं ज्ञानं निर्विकल्पकमेव भवति। ततश्च व्यवहारकाले नामजात्यादिसंवलितं तत् सविकल्पकं जायते। तदेवं भारतीये दर्शने

निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमाम्नातम् । बौद्धैः पुनः निर्विकल्पकस्यैव प्रत्यक्षत्वमभ्युपेतं, न सविकल्पकस्य । 'कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्' इति, कल्पनया नामजात्यादियोजनया विरहितं निर्विकल्पकमेव प्रत्यक्षं भवति तन्मते, न कल्पनासंवलितं सविकल्पकम् ।

नव्यैर्मनोवैज्ञानिकैः पुनरुभयविधमपि ज्ञानं स्वरूपतोऽङ्गीकृतम् । तत्र चाद्यं संवेदननाम्ना द्वितीयं च प्रत्यक्षनाम्ना व्यवहृतम् । संवेदनमाद्यमिन्द्रियजन्यं ज्ञानं भवति । तस्य पूर्वैरुत्तरैर्वा संस्कारैः सह कोऽपि सम्बन्धो न भवति । यदा चास्य ज्ञानस्य पूर्व-संवेदनसंस्कारैः सह सम्बन्धो जायते तदा तत् प्रत्यक्षपदवाच्यं सञ्जायते, न संवेदनपदवाच्यता तस्यावशिष्यते । पूर्वसंस्कारैः सम्बद्धं संवेदनं विशेषरूपेणार्थस्य ग्राहकं सञ्जायत इति सार्थकमभिधीयते । एवं संवेदनं सार्थकं न भवति । यदा पूर्वसंस्कारसम्बन्धात् तस्य सार्थकत्वं जायते तदा तत् प्रत्यक्षपदवाच्यं भवति ।

निम्नवर्गस्य प्राणिनां स्थितिः—संवेदनशक्तिर्हि सर्वेष्वपि प्राणिषु भवति । किन्तु निम्नवर्गस्य प्राणिनां केषाञ्चित् शरीररचना मनुष्यादीनां शरीररचनातो भिद्यते । मानवशरीरे संवेदनसाधनानि पञ्च ज्ञानेन्द्रियाणि सन्ति । तानि च यथास्थानं शरीरे विनिवेशितानि सन्ति । तस्मिन् स्थलवि-शेषे प्रसृता ज्ञानतन्तवो दृष्ट्यादिसंवेदनादिरूपस्य संवेदनविशेषस्य ग्राहका भवन्ति । किन्तु निम्नवर्गे तादृशा अपि प्राणिनः सन्ति येषां पञ्च ज्ञाने-न्द्रियाणि नोपलभ्यन्ते । यथा सर्पाणां कर्णौ न भवतः । ते चक्षुर्भ्यामेव पश्यन्ति, शृण्वन्ति च अतस्ते चक्षुःश्रवस उच्यन्ते । वर्षासु केंचुआख्या ये प्राणिनो दृश्यन्ते तेषु न नेत्रे भवतः, न नासिका नापि कर्णौ । केवलं त्वगिन्द्रियं रसनेन्द्रियं चेतीन्द्रियद्वयमेव भवति । अमीवाख्यश्च एकघटकः प्राणी सर्वैरपीन्द्रियैर्विरहितो भवति । तस्य केवलमुदरमात्रं भवति । नान्यत् किञ्चिदपि इन्द्रियं तत्र लभ्यते । तथापि तत्र विविधात्मकं संवेदन प्रतीयते । उच्चवर्गस्थप्राणिनां ज्ञानतन्तवो भिद्यन्ते । तेषां विशिष्टा एव तन्तवो विशिष्टानां रूपादीनां ग्राहका भवन्तीति तत्र ज्ञानेन्द्रियाणि विभक्तानि सन्ति ।

तथा चोक्तम्—

आद्यमिन्द्रियजं ज्ञानं नामजात्यादिवर्जितम् ।
वस्तुमात्रावाहित्वा-न्निर्विकल्पकमुच्यते ॥ १ ॥
क्षणान्तरे च संस्कारै-र्नामजात्यादियोजनात् ।
तन्निर्विकल्पकं ज्ञानं सविकल्पं प्रजायते ॥ २ ॥
ज्ञानकाले तु प्रत्यक्षं निर्विकल्पकमेव हि ।
व्यवहारे च नामादि-योजनात् सविकल्पकम् ॥ ३ ॥
मनोविज्ञानशास्त्रे तत् संवेदनमुदीर्यते ।
पूर्वोत्तरैरसम्बद्धं संस्कारैस्तन्निरर्थकम् ॥ ४ ॥
पूर्वोत्तरैश्च संस्कारैः सम्बद्धं जायते यदा ।
तदा प्रत्यक्षवाच्यं तत् सार्थकं च निगद्यते ॥ ५ ॥
एकमेवेन्द्रियं क्वापि क्वापि चैवेन्द्रियद्वयम् ।
किन्तु संवेदनं सर्वं निम्नवर्गस्य प्राणिषु ॥ ६ ॥

**संवेदनोपयोगः—**

मानवानामन्येषां च प्राणिनां सर्वमपि ज्ञानं संवेदनाश्रितमेव भवति। आद्यमिन्द्रियजं संवेदनज्ञानं, ततश्च पूर्वसंस्कारैः सम्बद्धं प्रत्यक्षं जायते। यस्य किमपीन्द्रियं नास्ति तस्य तद्विषयकं ज्ञानमपि न भवति, संवेदनासम्भवात् । जन्मान्धानां रूपज्ञानमसम्भाव्यमेव । बधिराणां च शब्दज्ञानं न सम्भवति। अन्येषां शब्दं श्रुत्वा बालस्तदनुकरणं विधाय शब्दोच्चारणं कर्तुं प्रयतते । यस्य श्रोत्रेन्द्रियं जन्मत एव नास्ति स नान्येषां शब्दं श्रृणोति, नापि वा तदनुकरणरूपेण शब्दोच्चारणं शिक्षते। अत एव जन्मतो बधिरो, मूकोऽपि जायते । अत एव प्राणिनां जीवने संवेदनस्य महत्त्वपूर्णं स्थानं भवति। विभिन्नेषु प्राणिषु विभिन्न-प्रकाराणां संवेदनानां शक्तिस्तारतम्ययुक्ता भवति। यथा कुक्कुराणां घ्राणसंवेदनं संवेदनान्तरेभ्यस्तीव्रतरं भवति । ते हि घ्राणसंवेदनेनैव वस्तूनां परिचयं प्राप्नुवन्ति । गृध्राणां दृष्टिसंवेदनं विशिष्यते। ते हि दूरवर्तिनमपि पदार्थजातं दूरत एव पश्यन्ति। शशकानां श्रोत्रसंवेदनमतीव तीव्रं भवति। एवं विभिन्नेषु प्राणिषु विशिष्टं संवेदनमधिकं विकसितं भवति। संवेदनशक्तेस्तारतम्यमिदं वंशपरम्परागतमभ्यासाद्वा सञ्जायते।

येषामेकमिन्द्रियमुपहतं भवति तेषां तद्विषयकं संवेदनं तु न सम्भवति किन्तु संवेदनान्तरे तेषां वैशिष्ट्यं सञ्जायते। यथान्धानां श्रोत्रसंवेदनं तीव्रं, बधिराणां वा दृष्टिसंवेदनमधिकं भवति।

तदुक्तम्—

> सर्वेषामेव ज्ञानानां मूलं संवेदनं मतम्।
> यत्र तन्नास्ति तज्ज्ञानं सम्पूर्णं नैव जायते॥ ७॥
> संवेदनक्षमत्वं च भिन्नं भिन्नेषु प्राणिषु।
> वंशानुक्रमसम्बन्धाद् अभ्यासाद्वापि जायते॥ ८॥

## संवेदनभेदाः—

संवेदननानां प्रकारकृतः परिमाणकृतश्चेति द्विविधो भेदः प्रतीयते। रूपसंवेदनं रससंवेदनाद् भिद्यते। रससंवेदनं च शब्दसंवेदनाद् भिन्नं भवति। अयं संवेदनानां प्रकारकृतो भेदः। एवं नीलपीतादिवर्णानां भेदोऽपि दृष्टिसंवेदनस्य प्रकारकृतो भेदः। अयं प्रकारकृतो भेद इन्द्रियभेदाधीनो भवति। रूपसंवेदनस्य रससंवेदनाद् यो भेदः स तज्जनकस्येन्द्रियस्य भेदादेव जायते। संवेदनस्य प्राबल्यमप्राबल्यं वा परिमाणभेदाद् गृह्यते। मन्दः शब्दस्तीव्रशब्दाद्, मन्दश्च गन्धस्तीव्रगन्धाद्विभिद्यते। अयमेव परिमाणभेदो, न प्रकारभेदः। अयं च परिमाणभेद उत्तेजनायाः सामर्थ्याश्रितो भवति। तीव्रा समुत्तेजना तीव्रं शब्दसंवेदनं जनयति, मन्दा च मन्दं संवेदनमुत्पादयति। कदाचिदयं परिमाणभेदः प्रकारभेदरूपेणापि परिणमति। यदा काचिदुत्तेजना नियतां मर्यादामतिक्रामति तदा तज्जन्यं संवेदनं परिमाणतो भिन्नमपि प्रकारान्तरत्वमुपयाति। यथोष्णस्याःपिण्डस्य वर्णोऽरुणो दृश्यते। किन्तु तापातिरेके तस्य वर्णः शुक्लः सञ्जायते।

एवं १. प्रकारभेदात् २. परिमाणभेदाच्छक्तिभेदाद्वा संवेदनं द्विधा विभक्तं भवति। किन्तु तद्व्यतिरिक्तं देशकालभेदादपि संवेदनं भिद्यते। या ह्युत्तेजना शरीरेऽधिकदेशव्यापिनं संवेदनं जनयति साल्पदेशव्यापकसंवेदनाद् भिन्नमेव संवेदनं जनयति। यथोष्णसूचिकासम्बन्धाच्छरीरे यदुष्णात्मकं स्पर्शसंवेदनं जायते ततः, उष्णरूप्यकसम्पर्काज्जायमानं संवेदनं

भिन्नमेव भवति । सूचीसम्पर्कजनितस्य संवेदनस्याल्पदेश एव प्रभावो, रूप्यकसम्पर्काच्चाधिकदेशव्यापकः प्रभावः । अत एवात्र संवेदनयोर्देशकृतो व्यापकताकृतो वा भेदः । एवं क्षणमात्रस्थायिनः शब्दसंवेदनाद् दीर्घकालस्थायिनः शब्दसंवेदनस्य भिन्नत्वमनुभवसिद्धं भवति । देशकालकृतौ भेदाविमौ पूर्वोक्ताभ्यां भेदाभ्यां भिन्नावेव । तौ स्वगतौ गुणकृतौ च संवेदनभेदौ । इमौ च देशकालकृतौ भेदौ । तदेवं स्वगतभेदाद् गुणकृतभेदाद्वा भिन्नावेव देशकालकृतौ भेदौ ।

तथा चोक्तम्—

प्रकारात् परिमाणाच्च भेदः संवेदने द्विधा ।
इन्द्रियभेदजः पूर्वो ज्ञेयभेदात् तथा परः ॥ ९ ॥
रूपसंवेदनं भिन्नं रससंवेदनाद् यथा ।
यथा वा मन्दशब्दाच्च तीव्रः शब्दो विभिद्यते ॥ १० ॥
देशकालविभेदात्तु परं भेदद्वयं मतम् ।
एवं संवेदनस्यात्र भेदः प्रायश्चतुर्विधः ॥ ११ ॥

## संवेदनवर्गीकरणम्—

आद्यमिन्द्रियजन्यं ज्ञानं संवेदनपदवाच्यं भवतीति पूर्वमुक्तम् । तानि च संवेदनजनकानि ज्ञानेन्द्रियाणि पञ्च भवन्तीति संवेदनमपि मुख्यतः पञ्चविधम् । भारतीये दर्शने विषयसम्बन्धात् संवेदनानां विभागः कृतोऽस्ति । मनोविज्ञानेऽपि चात्र इन्द्रियसम्बन्धाश्रितोऽयं संवेदनविभागो दृश्यते । चक्षुः, श्रोत्रं, त्वक्, घ्राणं, रसनं चेति पञ्च ज्ञानेन्द्रियाण्युच्यन्ते । तदनुसारं मनोवैज्ञानिकैः १ दृष्टिसंवेदनं, २ श्रोत्रसंवेदनं, घ्राणसंवेदनं, ४ रससंवेदनं, ५ स्पर्शसंवेदनं चेति पञ्चविध इन्द्रियप्रधानः संवेदनविभागः कृतोऽस्ति । भारतीये दर्शने रूप-रस-गन्ध-स्पर्श-शब्दाः पञ्च ज्ञानेन्द्रियाणां विषयाः समाम्नाताः । तदनुसारं च १ रूपसंवेदनं २ रससंवेदनं,, ३ गन्धसंवेदनं, ४ शब्दसंवेदनं; ५ स्पर्शसंवेदनं चेति विषयप्रधानो विभागः कृतोऽस्ति । अयं नामभेद एव न वस्तुभेदः । उभयोस्तुलनात्मकं चित्रमधो दीयते—

| मनोवैज्ञानिकं नाम | इन्द्रियम् | भारतीयं नाम |
| --- | --- | --- |
| १. दृष्टिसंवेदनम् | चक्षुरिन्द्रियम् | रूपसंवेदनम् |
| २. रससंवेदनम् | रसनेन्द्रियम् | रससंवेदनम |
| ३. घ्राणसंवेदनम् | घ्राणेन्द्रियम् | गन्धसंवेदनम् |
| ४. श्रोत्रसंवेदनम् | श्रोत्रेन्द्रियम् | शब्दसंवेदनम् |
| ५. स्पर्शसंवेदनम् | त्वगिन्द्रियम् | स्पर्शसंवेदनम |

भारतीय दर्शने पञ्चविध एवायं संवेदनविभागोऽस्ति । किन्तु मनोवैज्ञानिकैः स्पर्शसंवेदनस्यापि निम्नाङ्कितश्चतुर्विधोऽवान्तरविभागः कृतोऽस्ति—

अ. पीडासंवेदनम्
ब. मर्दनसंवेदनम्
स. उष्णसंवेदनम्
द. शीतसंवेदनम् ।

एवं मुख्याः पञ्च संवेदनविभागाः । ततो भिन्ना अन्येऽपि त्रयो भेदा मनोवैज्ञानिकैः कृताः सन्ति । ते च निम्नाङ्किताः सन्ति—

६ गतिसंवेदनम्
७ समत्वसंवेदनम् ।
८ देहान्तर्वर्तिक्रियासंवेदनम् ।

तदयमत्र संग्रहः—

ज्ञानेन्द्रियाणि पञ्चैव, तथा संवेदनान्यपि ।
दृष्टि-श्रोत्र-रस-घ्राण-स्पर्शसंवेदनं तथा ॥ १२ ॥
शीतोष्णस्पर्शभेदाच्च पीडनान्मर्दनात्तथा ।
स्पर्शसंवेदनं चापि चतुर्धा भिद्यते पुनः ॥ १३ ॥
शरीरान्तःक्रियाणां च समत्वस्यगतेस्तथा ।
संवेदनत्रयं चैतद् योजयित्वाष्टधा मतम् ॥ १४ ॥

**नेत्ररचना—**

तत्र रूपसंवेदने दृष्टिसंवेदने वा चक्षुरिन्द्रियं मुख्यं साधनम् । अतो रूपसंवेदनप्रक्रियापरिज्ञानाय चक्षुरिन्द्रियस्य सामान्यं परिज्ञानमपेक्षितं भवति । प्राणिनां मुखमण्डले यदिदं दीप्यमानं नेत्रद्वयमवलोक्यते तन्न केवलं वदनालङ्कृतिमात्रं, किन्तु रूपसंवेदनसाधनमपि

तद्देव भवति । नेत्राभ्यां रूपस्य संवेदनं कथं भवतीत्यस्य परिज्ञानं तद्रचनापरिज्ञानेन सम्यक्तया भवितुमर्हतीति नेत्ररचनाया वर्णनमत्र प्रसङ्गे विधीयते । नेत्रगोलकस्य रचना निम्नाकितेषु चित्रेषु सम्यक्तया दृश्यते ।

नेत्र गोलस्य चित्रम्

नेत्रे सामान्यतः श्वेतो भागः, तन्मध्ये कृष्णो भागः, तन्मध्ये चैको बिन्दुरिव दृश्यते। तत्र श्वेतो भागो अपारदर्शी भवति। स एव मुख्यतो नेत्रगोलकस्य निर्माणं करोति। तदन्तर्गतः कृष्णो भागः कनीनिका-पदवाच्यो भवति। तस्य कृष्णं रूपं न वास्तविकं रूपम्। तत् कार्ष्ण्यं वस्तुतो तन्मध्यवर्तिन उपतारकस्य रूपं भवति। तच्च कनीनिकायाः पारदर्शित्वादत्र प्रतीयते। कनीनिकापृष्ठवर्ती द्वितीयो भाग उपतारकपदवाच्यो भवति। तमध्ये पुत्तलिकापदवाच्यं छिद्रमेकं दृश्यते। स बाह्यगोलकस्य तृतीयो

भागः । इदं वाह्यतो दृश्यमानस्य भागत्रयस्य विवेचनम् । सम्पूर्णं नेत्र-गोलकं मण्डलाकारं भवति । तस्याग्रिमो भागः किञ्चिदुन्नतो भवति स एवोन्नतो भागो नेत्ररूपेण वहि-र्दृश्यते।तस्यैव इमे त्रयो भागाः वर्णिताः। किन्तु दृश्यमानाद्भागात् प्रचुरतरो नेत्रगोलकस्य मुख्यो मण्डलाकारो भागोऽन्तर्निहितोऽस्ति वहिर्न दृश्यते । सम्पूर्णं मण्डलाकारं नेत्रगोलकमपि भागत्रयात्मकं भवति—

१. वाह्यपटलं श्वेतपटलं वा
२. मध्यपटलम्
३. अन्तःपटलम् ( रैटीना )

नैत्रगोलकस्य वाह्यतमो भागः श्वेतपटलमुच्यते । स च गोलकस्य ५।६ भागं व्याप्नोति । स भागः पारदर्शको न भवति तन्मध्ये कृष्णवर्णो यो भागो दृश्यते स कनीनिकापदवाच्यो भवति । कनीनिकायाः पृष्ठदेशे उपतारकास्य प्रकाशनियामको मार्गः स्थितो भवति । कनीनिका पार-दर्शिका भवति । तत्र योऽयं कृष्णो वर्णःप्रतीयते स न कनीनिकायाः प्राकृतो वर्णः किन्तूपतारकस्य वर्णः कनीनिकायाः पारदर्शकत्वात्तत्र

नैत्रार्धं चित्रम्

प्रतीयते । उपतारकस्य मध्यभागे एकं छिद्रं भवति तच्च पुत्तलिकापद-वाच्यं भवति । उपतारकं प्रकाशस्य नियामकं भवति । यदा तीव्रप्रकाशस्य

चक्षुषा संयोगो भवति तदा उपतारकस्थाः सूक्ष्मांशाः पुत्तलिकायाः सङ्कोचं कुर्वन्ति । एवं मन्दप्रकाशे त एव तस्या विस्तारमपि कुर्वन्ति । एवं पुत्तलिकायाः सङ्कोचेन विकासेन चापेक्षित एव प्रकाशोऽन्तः प्रवेष्टुमर्हति नाधिकः । उपतारकस्य पृष्टभागे तालमेकं ( लैन्स ) भवति । ततो मध्यपटलमायाति । इदमन्धकारमयं भवति । तदनन्तरमन्तःपटलमायाति । इदमन्तःपटलमेव रैटीनापदवाच्यं वस्तुग्राहकं च भवति । दृष्टिग्राहिणीनां नाडीनामग्रिमो भागो मुख्यतया रैटीनापदेनोच्यते । स चाभ्यन्तरपटलस्य १।३ तृतीयांशे विस्तृतो भवति । तन्मध्यभागे च पीतबिन्दुः ( फौबिया ) भवति । यदात्रोत्तेजनं भवति तदा प्रबलं दृष्टिसंवेदनं भवति । यस्मात्केन्द्रस्थानात्दृष्टिवाहिन्यो नाड्यो मस्तिष्कभागमुपसर्पन्ति स भागो अन्धविन्दु नाम्ना व्यवह्रियते । तत्र मनागपि रूपसंवेदनं न जायते इत्यस्मादेव कारणात् तस्य अन्धबिन्दुरित्यन्वर्था संज्ञा भवति ।

सूचिकानां दण्डानां च चित्रम्

( रेटिना ) भागः दण्डाकारैः सूचिकाकारैश्च भागैर्विर्निमितो भवति । तत्र दण्डभागाः प्रकाशदीप्तिं रूपं वा गृह्णन्ति । सूचिकाश्च वर्ण-

ग्राहिका भवन्ति। अन्धबिन्दुस्थले न दण्डा भवन्ति न वा सूचिकाः। ततस्तत्र किमपि न दृश्यते। पीतबिन्दुस्थले सूचिका एव भवन्ति न दण्डाः। अतः पीतबिन्दुस्थल एव वर्णानां ग्रहणं भवति।

तदयं नेत्ररचनासंग्रहः—

अग्रभागोन्नतं किञ्चिन्मण्डलं नेत्रगोलकम्।
बाह्य-मध्या-भ्यन्तराख्य-पटलत्रयनिर्मितम् ॥१॥
अपारदर्शकं शुभ्रं पटलं दृश्यते बहिः।
मध्ये तस्योन्नतो भागो वर्तते पारदर्शकः ॥१६॥
कनीनिकापदवाच्यो न कृष्णो वस्तुतस्तु सः।
उपतारकवर्णो वै तत्र कृष्णः प्रतीयते ॥१७॥
कनीनिकायाः पृष्ठे ऽथ प्रकाशस्य नियामकम्।
कृष्णे मध्यपटले च भवत्येवोपतारकम् ॥१८॥
उपतारकमध्यस्थं छिद्रं भवति पुत्तली।
ततस्तालं भवत्येकं प्रतिबिम्बनियामकम् ॥१६॥
दृष्टिसंवेदनग्राहि-नाडीनामग्रिमस्ततः।
रैटीनाख्यप्रदेशश्च अन्तःपटलमध्यगः ॥२०॥
अन्तःपटलभागोऽयं दण्ड-सूचि-विनिर्मितः।
प्रकाशग्राहका दण्डाः सूच्यश्च वर्णग्राहिकाः ॥ २१ ॥
तन्मध्ये पीतबिन्दुश्च तीव्रसंवेदनाकरः।
तत्रैव मुख्यतो दृष्टाः सूचिका वर्णग्राहिकाः ॥ २२ ॥
यस्मात् केन्द्राद्विनिर्गत्य नाड्यस्तु दृष्टिवाहिकाः।
मस्तिष्कमुपसर्पन्ति अन्धबिन्दुः स उच्यते ॥ २२ ॥
अन्धबिन्दुस्थले तत्र न दण्डा नापि सूचिकाः।
ततो वर्णः प्रकाशो वा अन्धबिन्दौ न गृह्यते ॥ २२ ॥
एषा संक्षेपतः प्रोक्ता नेत्रयो रचना मया।
दृष्टिसंवेदनस्याथ प्रक्रियाग्रे निरूप्यते ॥ २४ ॥

**मायाप्रदीपः चित्रपेटिका च—**

चक्षुषो रचनाशैलीमनुसृत्यैवाधुनिकैर्वैज्ञानिकै मायाप्रदीपः ( मैजिक लैन्टर्न ) चित्रपेटिका ( कैमरा ) च निर्मिते स्तः।

तयोः प्रक्रियापि दृष्टिसंवेदनप्रक्रिया-परिज्ञाने सौकर्यमापादयतीति परिशीलनीया भवति । व्याख्यातारो हि स्वविषयस्य स्पष्टीकरणाय चित्राणां परिदर्शनं कारयितुमिच्छन्ति । किन्तु स्वल्पस्य चित्रस्य विशाले श्रोतृमण्डले परिदर्शनमतीव दुष्करमिति तत्सौकर्याय मायाप्रदीपमुपयुञ्जते । स्वल्पमपि चित्रं मायाप्रदीपः उन्नतोदरतालसाहाय्येन श्वेतपटे विशालाकारे परिणमयति । मायाप्रदीपस्य चित्रमथोऽङ्कितमस्ति—

मायाप्रदीपस्य चित्रम्

अत्र मायाप्रदीपचित्रे (च)चिह्नितस्थाने, प्रदर्शनीयं चित्रं काचपटले ३¼×३¼ आकारे निर्मितं निहितमस्ति । 'क' चिह्नितमुन्नतोदरं तालमस्ति यद्धि प्रदर्शनीयस्य चित्रस्य दीर्घीकृतमाकारं श्वेतपटे प्रदर्शयति । उन्नतोदरेण तालेन निर्मितं चित्रं सदैव परिवर्तितं विपरीतं वा भवतीति वस्तुतः श्वेतपटे सरलमनुरूपं च चित्रमुपलब्धुं मायादीपे विपरीतं चित्रं स्थाप्यते ।

## चित्रपेटिका—

एवं चित्रपेटिकाया श्चित्रमपि अग्रिमपृष्ठेऽङ्कितमस्ति ।

अत्रापि 'ल' चिह्नितस्थाने उन्नतोदरं तालमेकं निहितमस्ति । 'प' चिह्नितस्थाने च काचनिर्मिता चित्रग्राहिकाधारभित्तिरस्ति । चर्मनिर्मितायामस्यां पेटिकायां तालस्य काचभित्तेश्चान्तरं यथेष्टं कर्तुं शक्यत इति चित्रग्रहणकाले तालस्य समुचिते स्थाने सन्निवेशः क्रियते । यथा चक्षुषि तालस्य पुरस्तात् पुत्तलीरूपं स्वल्पतरं छिद्रं भवति

तथैव चित्रपेटिकायामपि तालस्य पुरस्तात् प्रकाशप्रवेशाय स्वल्पतरं छिद्रं भवति। चित्रग्रहणकाले तच्छिद्रमाच्छाद्यते येनाभ्यन्तरे प्रकाशस्य

चित्रपेटिकायाश्चित्रम्

प्रवेशो न स्यात्। छिद्रमाच्छाद्य पेटिकायां चित्रभित्तिः (प्लेट) यथा-स्थानं सन्निवेश्यते। इयं चित्रभित्तिरपि काचनिर्मिता भवति। तत्र च किञ्चिद्रासायनिकं द्रव्यं लिप्तं भवति यत्र प्रकाशसंसर्गेण क्षणेनैव सम्मुखस्थं चित्रमङ्कितं भवति। अत एव यदा चित्रभित्तिरियं पेटि-कायां सन्निवेश्यते तदा पेटिकाया मुखच्छिद्रमाच्छादितं भवति। ततश्च यस्मिन् क्षणे चित्रं गृह्यते तदा क्षणमात्रमेव तन्मुखमुद्घाट्यते। तेन वस्तुनः प्रतिक्षिप्तः प्रकाशश्चित्रभित्तिं स्पृशति वस्तुचित्रं च तत्राङ्कितं भवति। किन्तु प्रकाशविज्ञानस्य सामान्यनियमानुसारमुन्नतोदरेण तालेनाङ्कितं चित्रं सदैव विपरीतं भवतीति चित्रपेटिकायामपि चित्र-

भित्तौ विपरीतमेव चित्रमङ्कितं दृश्यते। चित्रभित्तिमन्धप्रकोष्ठे नीत्वा रासायनिकैः द्रव्यैः प्रक्षाल्य च प्रकाशविकार्यं लेपनद्रव्यमपनीयते। ततश्च यत्र चित्रमङ्कितमस्ति स भागः कृष्णवर्णो, अवशिष्टश्च भागः श्वेतो दृश्यते। ततश्च विपरीतमिदं चित्रं यदा चित्रपत्रे मुद्र्यते तदा तत् पुनरपि अनुरूपं जायते। एषा चित्रपेटिकायां चित्रग्रहणस्य प्रक्रिया भवति।

**दृष्टिसंवेदनप्रक्रिया—**

चित्रपेटिकासदृश्येव नेत्रयोः संवेदनप्रक्रिया। घटादौ वस्तुनि प्रकाशस्य रश्मयः पतन्ति, ततश्च प्रतिक्षिप्ता नेत्रदेशं प्राप्नुवन्ति। नेत्रे उपतारकमध्यस्थं पुत्तलीरूपं यच्छिद्रमस्ति तन्मुखेनान्तः प्रविशन्ति रश्मयः। तत्रस्थं तालं प्राप्य ततो विनिर्गताश्च अन्तः पटले[रेटीनाख्यप्रदेशे] चित्रं जनयन्ति। अन्तः पटलं [रेटीना] ह्यत्र चित्रभित्तिस्थानीयं भवति। यथा चित्रभित्तावङ्कितं चित्र विपरीतं भवति तथैवान्तः पटले [रेटीयां] अङ्कितं चित्रमपि विपरीतं भवति। किन्तु यथा चित्रभित्ते सकाशात् चित्रपत्रेऽङ्कितं चित्रं पुनरनुरूपं जायते एवं [रेटीनायां] अन्तः पटले विपरीतमङ्कितं चित्रं यदा मस्तिष्कस्य ज्ञानकेन्द्रे मुद्रितं भवति तदा तदपि अनुरूपं सञ्जायते। एवं वाह्यवस्तूनां चाक्षुषं परिज्ञानं दृष्टिसंवेदनं वोत्पद्यते।

तथा चोक्तम्—

प्रतिक्षिप्ताः पदार्थेभ्यो रश्मयो नेत्रदेशगाः।
निर्गत्य पुत्तलीच्छिद्रात् तालं पृष्ठस्थमागताः॥ २५॥
तालमध्याद्विनिर्गत्य रेटीनां प्राप्नुवन्ति च।
विपरीतं ततस्तत्र चित्रं भवति निर्मितम्॥ २६॥
मस्तिष्के ज्ञानकेन्द्रेऽथ प्रतिबिम्बोऽनुरुपतः।
समुत्पन्नः करोत्यत्र दृष्टिसंवेदनं स्फुटम्॥ २७॥

**द्वयोर्नेत्रयोस्तुल्यं संवेदनम्—**

पूर्वोक्तया प्रक्रियया द्वयोर्नेत्रयो रेटीनाप्रदेशे पृथक् पृथक् वस्तु चित्रितं भवति। किन्तु मस्तिष्के एकस्य वस्तुनो नेत्रद्वयहेतुकं ज्ञानद्वयं

नोत्पद्यते । तत्रैकस्य वस्तुन एकमेव ज्ञानं जायते । प्रतिम्बद्वयस्यैकमेव ज्ञानं जायत इत्यत्र नेत्रयोः पेश्यो नियामिका भवन्ति । उभयोर्नेत्रयोर्गतिः पेशीनां षट्केन नियम्यते । ताः पेश्य एवोर्ध्वमधस्तिर्यक् च नेत्रयोः सञ्चालनं कुर्वन्ति । ता एवोभयोर्नेत्रयोश्चित्रं समानस्थाने केन्द्रयन्ति । अतस्तत्रोभयोर्नेत्रयो-र्माध्यमेनैकमेव वस्तुज्ञानं दृष्टिसंवेदनं चोदेति ।

## वर्णसंवेदनम्—

प्रतिबिम्बग्राहिका रेटीना, दण्डैः सूचीभिश्च निर्मिता भवति । तत्र दण्डाः सामान्यप्रकाशस्य, सूच्यश्च वर्णग्राहिका भवन्तीति पूर्वमुक्तम् । सूर्यस्य रश्मिषु सप्त वर्णा भवन्ति । काचनिर्मितेन त्रिपार्श्वेन ( प्रिज्म ) सूर्यरश्मीनामिमे वर्णा यदा विश्लेषिता भवन्ति तदा तत्र १ वार्तालुको ( बैंगनी ) २ नीलः, ३ पीतः, ४ नभस्यः (आसमानी ), ५ हरितः, ६ पीतः, ७ नारङ्गकश्चेति सप्त वर्णा अनेनैवानुक्रमेणोपलभ्यन्ते । वर्षासु यदाकाशे ऐन्द्रं धनुर्दृश्यते, तदपि सूर्यरश्मीनां वर्णविश्लेषनिमित्तकमेव भवति । सूर्यस्य सप्ताश्वानां वर्णनं संस्कृतसाहित्ये बहुलमुपलभ्यते । 'सप्ताश्वः' इति पदं सूर्यपर्यायेष्वपि पठ्यते । तदिदं सर्वं सूर्यरश्मीनां सप्तवर्णात्मकं स्वरूपमेव परामृशति । श्वेतो वर्णः सप्तानामपि वर्णानां सम्मिश्रणाद् भवति । न स्वतन्त्रो वर्णः । सूर्यरश्मिषु सर्वेऽपि वर्णा मिश्रिता एव भवन्तीत्यस्मादेव कारणात् सूर्यस्य प्रकाशो भास्वरशुक्लो भवति । सामान्यत इमे सप्त वर्णा मौलिका वर्णा उच्यन्ते । किन्तु मनोवैज्ञानिकास्तेषु चतुरो वर्णानेव मौलिकान् मन्यन्ते । रक्तः, पीतः, हरितः, नीलश्चेति चत्वारो मौलिकाः स्वतन्त्राश्च वर्णा मनोवैज्ञानिकानामभिमताः । अन्ये च त्रयो वर्णा, वर्णानां मिश्रणेन जायन्ते । तद्यथा रक्तपीतयोर्मेलनेन नारङ्गः, रक्तनीलयोर्मेलनेनवार्तालुको [बैंगनी] वर्णः सञ्जायते ।

तदयमत्र संग्रहः—

बाह्यस्योत्तेजकस्याथ स्वस्थस्यैव च चक्षुषः ।<br>
अपरिहार्यता नित्यं दृष्टिसंवेदने मता ॥ २८ ॥

उत्तेजकाः पदार्थेभ्यः प्रक्षिप्ताः सूर्यरश्मयः ।
सप्तवर्णा भवन्त्यत्र दृश्यन्ते ये त्रिपार्श्वके ॥ २९ ॥
वार्ताकुश्चैव नीलश्च नभस्यो हरितस्तथा ।
पीतो नारङ्गकश्चैव रक्तो वर्णश्च सप्तमः ॥ ३० ॥
एतेनैव क्रमेणैते दृश्यन्ते सुरचापगाः ।
श्वेतवर्णत्वमायान्ति मिलित्वा सप्त एव ते ॥ ३१ ॥

**रससंवेदनम्—**

रूपसंवेदनोत्तरं द्वितीयं रससंवेदनं भवति । रूपसंवेदने यथा चक्षुरिन्द्रियं करणं भवत्येवं रससवेदने रसनेन्द्रियं करणं भवति । मधुर—अम्ल—लवण—कटु—कषायतिक्तभेदात् षड्विधाः रसाः प्रतीयन्ते । किन्तु मनोवैज्ञानिकैः कषाय-तिक्तौ विहाय मधुराम्ललवणकटुरूपाश्चत्वार एव रसाः स्वीक्रियन्ते । रसनया रसानां ग्रहणं भवति किन्तु रसानायाः सर्वस्मिन् प्रदेशे समानरूपेण तेषां ग्रहणं न भवति। रसनाया विभिन्ना भागा विभिन्नरसान् गृह्णन्ति । तस्य स्पष्टीकरणाय रसनायाश्चित्रमधो दीयते--

रसनायाश्चित्रम्

अस्मिंश्चित्रे १. संख्ययाङ्कितो भाग एकविधं २. संख्याङ्कितो भागो द्वितीयं, ३. संख्याङ्किताश्च भागास्तृतीयप्रकारकं रसं ग्रह्णन्ति ।

अङ्करहितेषु च भागेषु रसग्रहणस्य सामर्थ्यमतीव न्यूनं भवति। तदेवं रसनायाः प्रान्तभागेष्वेव रससंवेदनं जायते न मध्यभागे। तत्राग्रिमे प्रान्तभागे रसग्राहिणस्तन्तवो मधुरलवणयोर्ग्रहणं प्राधान्येन कुर्वन्ति। रसनाया उभयोः पार्श्वयोरम्लरसस्य, आभ्यन्तरे भागे च कटुरसस्य प्राधान्येन प्रतीतिर्जायते। तेनैतदनुमीयते यद्विभिन्नरसग्राहका विभिन्नास्तन्तवो रसनायां समाविष्टाः सन्ति। तेषां मुख्यं संवेदनस्थानं च भिद्यते। अत एव कदाचिदेकमेव वस्तु रसनाया एकस्मिन् प्रदेशे मधुरमन्यस्मिंश्च प्रदेशे अम्लं कटु वा प्रतीयते।

## ३. गन्धसंवेदनम्—

यथा रसनेन्द्रियेण रसस्य संवेदनं भवत्येवं गन्धस्य संवेदनं घ्राणेन्द्रियेण भवति। नासिकाया आभ्यन्तरभागे सूक्ष्माणां तन्तूनां जालं प्रसृतमस्ति। तदेव गन्धग्राहकमस्ति। रससंवेदनवद् गन्धसंवेदनमपि नानाप्रकारकं भवति। विभिन्नाश्च तन्तवो विभिन्नप्रकारकस्य गन्धस्य ग्रहणे समर्था भवन्ति। गन्धसंवेदनस्य रससंवेदनेन सह घनिष्ठः सम्बन्धोऽस्ति। यदा पदार्थस्य गन्धो नश्यति, प्रतिश्यायादिवशाद्वा न गृह्यते, तदा पदार्थस्य रसोऽपि साधुतया न स्वदते। अत एव प्रतिश्यायकाले सुस्वादु भोजनमपि न रोचते। मस्तिष्के रससंवेदनस्य गन्धसंवेदनस्य च केन्द्रे पार्थक्येनाद्यापि न निश्चिते स्तः।

## ४. स्पर्शसंवेदनम्—

त्वगिन्द्रियं स्पर्शग्राहकमिन्द्रियमस्ति। यथा विविधा रसा विविधाश्च गन्धभेदा भवन्ति तथा शीतोष्णस्पर्शादिभेदाद् स्पर्शोऽपि बहुविधो, भवति। यद्यपि त्वगिन्द्रियेणैव तेषां स्पर्शानां ग्रहणं भवति किन्तु त्वचि विभिन्नस्पर्शग्राहकं स्थानं विभिद्यते। यदि सूचीमुखमतिशीतलमुष्णं वा कृत्वा त्वचो विभिन्नेषु स्थानेषु निधीयते तदा सर्वत्र समः स्पर्शो नानुभूयते। क्वचित् शीतस्पर्शोऽनुभूयते क्वचिच्च नानुभूयते। एवमुष्णस्पर्शोऽपि सर्वत्र समानरूपेण नानुभूयते। तेनैतत्प्रतीयते यत् विभिन्नस्पर्शग्राहकास्तन्तवोऽपि परस्परं भिद्यन्ते। स्पर्शसंवेदनस्य शीतोष्णपीडनमर्दनभेदात् पूर्वं चत्वारो भेदा दर्शिताः।

## ५. शब्दसंवेदनम्—

पञ्चविधेषु संवेदनेष्वन्तिमं शब्दसंवेदनम्। तत्र च श्रोत्रमिन्द्रियं निमित्तं भवति। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रमिति श्रोत्रस्य प्राचीनं लक्षणम्। चक्षुरिन्द्रियवत् श्रोत्रस्य निर्माणमतीव जटिलमस्ति। तदत्रानतिप्रयोजकत्वान्न वितन्यते। संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः प्रत्नैराम्नाता। कस्मिंश्चित् स्थाने समुत्पन्नः शब्दो वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रोत्रदेशमुपसर्पति। तदा तत्र तस्य संवेदनं भवति। आरावः (न्वाइज़) स्वरश्चेति (टोन) शब्दस्य द्वौ भेदौ भवतः। किन्तु तयोरन्योन्यव्यतिरेकेणावस्थानं सम्भवति। ताल-लययुक्तः शब्दः स्वरपदेन व्यवह्रियते। तद्भिन्नश्चारावपदवाच्यो भवति। शब्दवेगाद्वायुमण्डले जायमानैः स्पन्दनैरेव शब्दस्य विविधा भेदा निर्मीयन्ते। शब्दस्य तीव्रत्वमन्दत्वेऽपि तन्निमित्तके एव भवतः।

## वेवरनियमः—

सर्वेष्वपि संवेदनेषु वाह्योत्तेजनापेक्षिता भवति। उत्तेजनाया तीव्रतामेव संवेदनस्य तीव्रतामन्दता वानुसरति। तीव्रायामुत्तेजनायां संवेदनमपि तीव्रं भवति। मन्दायां चोत्तेजनायां संवेदमपि तथैव भवति। उत्तेजनसवेदनयोः तीव्रत्वे मन्दत्वे च कः सम्बन्धो भवतीत्यत्र श्री वेवर महोदयेन नियमो निर्धारितोऽस्ति। तदनुसारं उत्तेजनानुपातेनैव संवेदने परिवर्तनं भेदो वा भवति। यथा कस्मिंश्चित् स्थाने दीपवद्वयं प्रज्वलति। यत्र यद्येकस्य वृद्धिर्ह्रासो वा जायते तदा तस्य भेदस्यानुभवः सपद्येव जायते। किन्तु यस्मिन् स्थाने दीपकानां शतं, तत्रैकस्य दीपस्य वृद्धौ ह्रासे वा भेदो नानुभूयते। अत एवोत्तेजनायामनुपातेनैव वृद्धिर्ह्रासो वा यदा भवति तदैव तत्र तदान्तरस्यानुभूतिर्भवति नान्यथा। अयमेव वेवर-महोदयस्य नियम उच्यते।

---

## पंचदशः परिच्छेदः

# प्रत्यक्षम्

### भारतीयं प्रत्यक्षविवेचनम—

मनोव्यापाराणां पञ्चाङ्के ज्ञानपक्षे निर्विकल्पकज्ञानात्मकं संवेदनं विगतपरिच्छेदे निरूपितम् । इदानीं सविकल्पज्ञानात्मकस्य प्रत्यक्षस्य निरूपणमथसरप्राप्तमिति निरूप्यते । नामजात्यादियोजनारहितमत एव निष्प्रकारकं वस्तुमात्रावगाहि निर्विकल्पकं ज्ञानं संवेदनपदवाच्यं भवति । अर्थज्ञानयोः सम्बन्धस्य नित्यत्वात्, एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नियमबलाच्च यदैव निर्विकल्पकं ज्ञानमिदं जायते तदुत्तरस्मिन्नेव क्षणे पूर्वानुवर्तिसंस्कारसामर्थ्यात् तत्र नामाजात्यादि योजनं भवतीति तत्सविकल्पं जायते । इन्द्रियार्थसन्निकर्षोत्पन्नमाद्यं ज्ञानं निर्विकल्पकं भवति तदुत्तरं जायमानं द्वितीयं ज्ञानं सविकल्पकं भवति । पूर्वं निर्विकल्पकं ज्ञानं संवेदनपदेन, सविकल्पकं ज्ञानं च प्रत्यक्षपदेनात्र व्यवह्रियते ।

भारतीये न्यायशास्त्रे प्रत्यक्षज्ञानस्य त्रिविधं करणं मतम् । १ कदाचिदिन्द्रियं, २ कदाचिदिन्द्रियार्थसन्निकर्षः, ३ कदाचिच्च निर्विकल्पकं ज्ञानम् । करणेन हि फलं जन्यते । किन्तु तयो रन्तालेऽवान्तरो व्यापारोऽवश्यं भवति । न ह्यवान्तरव्यापारं बिना करणं कस्यापि फलस्य जनने समर्थं भवति । अत एव व्यापारवदसाधारणं कारणं करणमिति करणलक्षणमुच्यते । ततश्च प्रत्यक्षज्ञानस्य पूर्वोक्तं त्रिविधं कारणं यदा प्रत्यक्षज्ञानात्मकं फलं जनयति तदा तत्रावान्तरव्यापारोऽपि भवत्येव । तदेवं करणत्रैविध्यादवान्तरव्यापारफलयोरपि त्रैविध्यं भवति । तत्र केन करणेन किं फलं जन्यते कश्च तत्रावान्तरव्यपारो भवतीति निम्नाङ्कितेन चित्रेण स्फुटं प्रतीयते—

| करणम् | | अवान्तरव्यापारः |
|---|---|---|
| १ यदा इन्द्रियं करणम् भवति | तदा | इन्द्रियार्थसन्निकर्षोऽवान्तरव्यापारः |
| २ यदा इन्द्रियार्थसन्निकर्षः करणं | तदा | निर्विकल्तकं ज्ञानमवान्तरव्यापारः |
| ३ यदा निर्विकल्पकं ज्ञानं करणं | तदा | सविकल्पकज्ञानमवान्तरव्यापारः |

फलम्

निर्विकल्पकं ज्ञानं फलम्  सविकल्पकं ज्ञानं फलम्

हानोपादानोपेक्षाबुद्धिः फलम्

एवं १. इन्द्रियं, २. इन्द्रियार्थसन्निकर्षः, ३. निर्विकल्पकं ज्ञानं, ४. सविकल्पकं ज्ञानं, ५. हानोपादानोपेक्षाबुद्धिश्चेत्येतेषां पञ्चानामेका शृङ्खला निर्मिता भवति। तत्राद्यं करणं, तदुत्तरो अवान्तरव्यापारः, तृतीयं च फलं भवति। ततश्च यदेन्द्रियं करणं भवति तदा तदुत्तरवर्ती इन्द्रियार्थसन्निकर्षोऽवान्तरव्यापारः, तृतीयं सविकल्पकं ज्ञानं च फलं भवति। एवं यदेन्द्रियार्थसन्निकर्षः करणं भवति तदा निर्विकल्पकं ज्ञानमवान्तरव्यापारः, सविकल्पकं ज्ञानं च फलं भवति। एवमेव यदा निर्विकल्पकं ज्ञानं करणं भवति तदा सविकल्पकं ज्ञानमवान्तरव्यापारः हानोपादानोपेक्षाबुद्धिश्च फलं भवति। एवं त्रिविधं करणं, त्रिविधो ऽवान्तरो व्यापारः, त्रिविधं च फलं प्रत्यक्षज्ञानस्य भवति।

येनेन्द्रियार्थसन्निकर्षेण ज्ञानं जन्यते सोऽयं प्रत्यक्षप्रयोजक इन्द्रियार्थसन्निकर्षोऽपि भारतीये न्यायशास्त्रे षड्विध आम्नातः—

१. संयोगः
२. संयुक्तसमवायः
३. संयुक्त–समवेत–समवायः
४. समवायः
५. समवेत–समवायः
६. विशेष्यविशेषणभावः

१. यदा चक्षुषा घटादीनां ज्ञानं भवति तदेन्द्रियार्थयोः संयोगः सम्बन्धो भवति। चक्षुरिन्द्रियं, घटादिरर्थः, तयोश्च प्रकाशरश्मिमुखेन संयोगः सम्बन्धो भवति।

२. यदा चक्षुषा घटगतं नीलरूपादिकं गृह्यते तदा चक्षुरिन्द्रियं, रूपादिरूपोऽर्थः, तयोश्च संयुक्त-समवायः सम्बन्धः। द्रव्योर्द्रव्योरेव संयोगो भवति। अत्र चक्षुरिन्द्रियं तु द्रव्यात्मकमस्ति किन्तु रूपस्य गणना गुणेषु भवति न द्रव्येष्विति रूपेण सह चक्षुषो न संयोगः, किन्तु घटेन सह चक्षुषः संयोगसम्बन्धः। तत्र च घटे रूपस्य समवायसम्बन्धः

परम्परया चक्षुरूपयोः संयुक्तसमवायः सम्बन्धो भवति । चक्षुःसंयुक्ते घटे रूपस्य समवायात् ।

३. यदा च तस्मिन् रूपे स्थितं रूपत्वादि नीलत्वादिकं वा सामान्यं गृह्यते तदा चक्षुरिन्द्रियं नीलत्वादिसामान्यं चार्थः । तयोश्च संयुक्त-समवेत-समवायः परम्परया सम्बन्धः । चक्षुःसंयुक्ते घटे नीलरूपं समवेतं, तत्र च नीलरूपे नीलत्वादि सामान्यं समवायसम्बन्धेन स्थितमिति नीलत्वसामान्यस्य चक्षुषा सह संयुक्त-समवेत-समवायः सम्बन्धो भवति । चक्षुषा संयुक्ते घटे नीलरूपं समवेतं तत्र च नीलत्वादिसामान्यं समवायसम्बन्धेन स्थितमिति नीलत्वस्य चक्षुषा सह संयुक्त-समवेत-समवायः सम्बन्धः ।

४. यदा श्रोत्रेन्द्रियेण शब्दस्य ग्रहणं भवति तदा श्रोत्रमिन्द्रियं शब्दश्चार्थः तयोश्च समवायः सम्बन्धः । शब्दो ह्याकाशस्य गुणः । गुण-गुणिनोश्च समवाय एव सम्बन्धो भवति । अतः शब्दस्याकाशेन सह समवायसम्बन्धो भवति । कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिति लक्षणाच्छ्रोत्रमप्याकाशात्मकमेव । अत एवाकाशात्मकेन श्रोत्रेन्द्रियेण सह आकाशगुणात्मकस्य शब्दस्य समवाय एव सम्बन्धो भवति नान्यः कश्चिदपि सम्बन्धः ।

५. यदा च शब्दनिष्ठं शब्दत्वादिसामान्यं श्रोत्रेन्द्रियेण गृह्यते तदा श्रोत्रमिन्द्रियं शब्दत्वादिसामान्यमर्थः, तयोश्च समवेत-समवायः सम्बन्धः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ।

६. अभावस्य समवायस्य च ग्रहणे इन्द्रियार्थयोः विशेष्यविशेषणभावः सम्बन्धो भवति । यथा भूतले घटो नास्तीति घटाभावो गृह्यते । अत्र चक्षुरिन्द्रियं घटाभावश्चार्थः । तयोर्न संयोगः, नापि समवायः सम्बन्धः । किन्तु चक्षुःसंयुक्ते भूतले घटाभावो विशेषणमिति चक्षुसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् इन्द्रियाभावयोः, इन्द्रियसम्बद्ध विशेषणतासम्बन्धो भवति । स एव चात्र विशेष्यविशेषणसम्बन्धनाम्नापि व्यवह्रियते । घटाभावस्य भूतले विशेषणत्वादेव च घटाभाववद् भूतलमिति विशिष्टा बुद्धिर्जायते ।

एवं यदा घटे रूपस्य समवायो विद्यते इत्येवं रूपेण समवायस्य

ग्रहणं भवति तदा चक्षुरिन्द्रियं समवायोऽर्थः तयोश्च विशेष्यविशेषण-भाव एव सम्बन्धः । चक्षुःसंयुक्ते घटे रूपसमवायस्य विशेषणत्वात् ।

तदयमत्र संक्षेपः—

अक्षजा प्रमितिर्द्वेधा सविकल्पाविकल्पिका ।
करणं त्रिविधं तस्याः सन्निकर्षश्च षड्विधः ॥

घट-तन्नील-नीलत्व-शब्द-शब्दत्वजातयः ।
अभाव-समवायौ च ग्राह्याः सम्बन्धषट्कतः ॥

## विशेषसामान्यभेदेन विषयद्वैविध्यम्—

सर्वस्यापि पदार्थजातस्य सामान्यविशेषभेदेन रूपद्वयं भवति । मानवमात्रानुगतं मनुष्यत्वं मानवस्य सामान्यं रूपम् । देवदत्तादीनां व्यक्तीनां प्रातिस्विकं रूपं च तेषां विशिष्टं स्वरूपं भवति । देवदत्तादिषु तेषां प्रातिस्विकं विशिष्टं रूपमपि भवति मनुष्यमात्रानुगतं मनुष्यत्वादिकं सामान्यं रूपमपि भवति । तदनयोरुभयो रूपयोर्मध्ये प्रत्यक्षं विशेषात्मकस्य रूपस्य ग्राहकं भवति । तथा च योगदर्शनस्य व्यासभाष्ये 'सामान्य-विशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम' इति प्रत्यक्ष-लक्षणं दर्शितम् । नव्यैर्मनोवैज्ञानिकैरपि विशेषावधारणप्राधान्यमेव प्रत्यक्षस्योररीकृतम् । पुस्तकं पश्यामि, गीतं शृणोमि, गन्धं जिघ्रामि, इत्येते सर्वेऽपि सविशेषाः प्रत्ययाः । बहूनां विशेषाणां बहुशोऽनुभवात्तदनु-गतं सामान्यमनुमीयते । अनुवृत्तिप्रत्ययहेतुः सामान्यमिति च वैशेषिके सामान्यस्य लक्षणं विहितमिति बहुषु घटादिषु अयं घटः, अयं घटः इत्येवामात्मकोऽनुगत एकाकारः प्रत्ययो यस्माद् भवति तदेव घटत्वादि सामान्यं भवति । तत्र मनोवैज्ञानिकै घटादीनां विशेषावधारणात्मकः प्रत्ययः 'पर्सैप्शन'पदेन, सामान्यात्मकश्च प्रत्ययः 'कन्सैप्शन' पदेन व्यवह्रियते । विशिष्टाः प्रत्यया अर्थस्य विद्यमानतायामेव भवन्ति । सामान्याश्च प्रत्ययाः अर्थाभावेऽपि सम्भवन्ति । पुस्तकस्य विशिष्टः प्रत्ययस्तदुपस्थितावेव जायते किन्तु सामान्यः प्रत्ययस्तदभावेऽपि सञ्जायते । पशूनां प्रत्ययाः विशिष्टा एव भवन्ति प्राधान्येन क्वचिदेव सामान्याः । विशिष्टप्रत्ययेभ्यः सामान्यप्रत्ययानामुत्पत्तौ १. निरीक्षणं,

२. तुलना, ३. पार्थक्यं, ४. जातिनिर्देशः, परिभाषा चेति सोपानपञ्चक-मङ्गीक्रियते। तेषां वर्णनमग्रे यथास्थानं विधास्यते।

सामान्यश्च विशेषश्च प्रत्ययो द्विविधो मतः।
तत्र कन्सैप्शनस्त्वाद्यः परः पर्सैप्शनस्तथा ॥१॥
विशेषः प्रत्ययः पूर्वं, सामान्यो जायते ततः।
विशेषात् तस्य सम्प्राप्तौ दृष्टं सोपानपञ्चकम् ॥२॥
आद्यं निरीक्षणं तत्र तुलनाथ द्वितीयकम्।
पार्थक्यं चैव जातिश्च परिभाषाथ पञ्चमम् ॥३॥

## सामान्यस्य भेदाः—

अनुवृत्तिप्रत्ययहेतुः सामान्यमिति सामान्यस्य लक्षणम्। तच्च परमपरं चेति द्विविधम्। भूयः सादृश्यदर्शनाच्च सामान्यास्यानुभूतिर्भवति। बालकः पूर्वं घटं पश्यति तस्यायमाद्यो घटप्रत्ययः विशेषावधारण-प्रधानत्वाद्विशिष्टः प्रत्ययः। पुनरपि स घटान्तरं पश्यति। सोऽपि च तस्य विशिष्टः प्रत्ययः। एवं यदा बहुवारं घटदर्शनं जायते तदा तदनुगतमेकं घटत्वसामान्यं निरीक्षणद्वारा पार्थक्येन तेन गृह्यते। बहुषु घटेषु जाय-माना एकाकारा प्रतीतिः सामान्यवशादेव च जायते इत्यनुवृत्तिप्रत्यय-हेतुः सामान्यमुक्तम्। पटादिभ्यो विजातीयद्रव्येभ्यश्च घटस्य यो भेदो भवति तत्रापि घटत्वपटत्वादिधर्म एव प्रयोजक इति व्यावृत्तिबुद्धिहेतु-त्वात् स विशेषोऽपि भवति। एवमनुवृत्तिप्रत्ययजनकत्वेन घटत्वादि सामान्यमुच्यते। व्यावृत्तिबुद्धिहेतुत्वे च घटत्वादिरेव विशेष उच्यते।

तच्च सामान्यं परापरभेदेन द्विविधं भवति। तत्राधिकदेशव्यापकं परं, अल्पदेशव्यापकं चापरं भवति। बहुषु घटेषु घटत्वसामान्यम्, घटाश्च-पार्थिवा भवन्तीति तत्र पृथिवीत्वसामान्यमपि विद्यते। अनयोः सामान्य-योर्मध्ये घटत्वं घटमात्रवृत्ति सामान्यं न घटव्यतिरिक्ते पटादौ भवति। किन्तु पृथिवीत्वसामान्यं घटेष्वपि विद्यते तद्व्यतिरिक्ते च पटादा-वपि भवतीति घटत्वापेक्षयाऽधिकदेशवृत्तित्वात् परं सामान्यमुच्यते। घटत्वं च पृथिवीत्वापेक्षयाल्पदेशवृत्तित्वादपरं सामान्यमुच्यते।

## सामान्यस्य याथार्थ्ये विप्रतिपत्तयः—

सामान्यमिदं वस्तुतो विद्यते न वा इत्यत्र विदुषां विप्रतिपत्तयो

दृश्यन्ते । भारतीये दर्शने बौद्धाः सामान्यविरोधिनः सन्ति । तेषां मते सामान्यं नास्त्येव । अनुवृत्तिप्रत्यये यत् सामान्यस्य प्रयोजकत्वं प्रतिपादितं तत्र बौद्धाः सामान्यस्थाने अपोहस्य अनुवृत्तिप्रत्ययहेतुत्वमाचक्षते । अतद्व्यावृत्तिः, तद्भिन्नभिन्नत्वं वा 'अपोह' शब्देनोच्यते । बहुषु घटेषु घटोऽयं घटोऽयमित्याकारा प्रतीतिः घटत्वसामान्यकृतैव भवतीति नैयायिकानां सामान्यवादिनां मतम् । किन्तु बौद्धानां मतेऽनुवृत्तिप्रत्यये घटत्वसामान्यं न प्रयोजकं किन्तु तद्भिन्नभिन्नत्वात्मक'अपोह'एव प्रयोजकः। सर्वेऽपि घटा घटभिन्नाद् भिन्ना भवन्ति । घटभिन्नं हि सर्वं जगत् । तद्भिन्नश्च घट एव । एवं सर्वेष्वपि घटेषु घटभिन्न-भिन्नत्वमघटव्यावृत्तिर्वा दृश्यते । सैव तत्र घटः घटः इत्यनुगतस्य व्यवहारस्य प्रयोजिका न तु घटत्वसामान्यमिति बौद्धाः सामान्यं नाङ्गीकुर्वन्ति । तत्कार्यं चापोहेन सम्पादयन्ति । सामान्यापोहयोरयं भेदो यत् अपोहो अभावात्मकः सामान्यं च भावात्मकमस्ति । अभावपदार्थः नैयायिकैः स्वक्रीयत एव । तेनैवानुवृत्तिप्रत्ययोपपत्तौ सामान्यस्य पदार्थान्तरस्य प्रयोजनं न भवतीति लाघवं सामान्यस्य प्रत्याख्याने मूलम् । नैयायिकानां मतेऽनुवृत्तिप्रत्ययो नापोहकृतः किन्तु सामान्यप्रयुक्त एव । नैकेषु घटेषु अतद्व्यावृत्तिमुखेनानुगतप्रत्ययकल्पना क्लिष्टा, सामान्यमुखनैव च स्वाभाविको ऽनुवृत्तिप्रत्ययः । एवं सामान्यस्य विषये बौद्धानां नैयायिकानां च मतभेदो भारतीये दर्शन उपलभ्यते ।

पाश्चात्ये दर्शने सामान्यविषये त्रिविधा विप्रतिपत्तय उपलभ्यन्ते । तत्र यथार्थवादः ( रियलिज्म ) प्लैटोमहोदयस्याभिमतः पक्षः । तन्मते घटादिसामान्या एव वास्तविका आदर्शरूपाश्च सन्ति । तदाश्रयैणैव च वाह्यानां घटादीनां रचना भवति । सर्वेऽपि निर्मातारः कमप्यादर्शं सम्मुखे संस्थाप्यैव वस्तुरचनां कुर्वन्ति । स चादर्शः सामान्यत्मक एवेति सामान्यं यथार्थम् । प्लैटोमहोदयस्यायं सिद्धान्त आदर्शानां सिद्धान्तः 'थ्योरी आफ आइडियाज़' इति नाम्ना व्यवह्रियते ।

प्लैटोमहोदयस्य विरोधे नामात्मवादः प्रचलितः । नामात्मवादिनां मते सामान्यस्य वास्तविकमस्तित्वं न विद्यते । किन्तु नामामात्रेण तद्व्यवहारो भवति । योगदर्शने नामात्मवादोऽयं विकल्पवृत्तिरूपेण

लक्षितः । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः इति हि विकल्पवृत्तेर्लक्षणम् योगसूत्रेषु दर्शितम् । यद् वास्तविकं वस्तु लोके न विद्यते किन्तु केवलं शब्दरूपेण तस्य व्यवहारो भवति तद् वस्तु विकल्पव्यवहारस्य विषयतां प्रतिपद्यते । तद्वदेवेदं नामात्मवादिनां नये सामान्यं स्वरूपतोऽविद्यमानमपि शब्दव्यवहारस्य विषयतामवगाहत इति नव्यमते नामात्मवादनाम्ना योगमते च विकल्पवृत्तिनाम्ना व्यवह्रियते । अस्मिन् मते सामान्यस्य वास्तविकमस्तित्वं न विद्यते ।

सुकरातमहोदयस्य तृतीयं मतमत्र 'धारणात्मवादः' 'कन्सैप्चुअलिज्म' नाम्ना कथ्यते । प्लैटोमहोदयस्य मते सामान्यमादर्शरूपेण तत्परिकल्पिते स्वर्गे स्थितं भवति किन्तु सुकरातमहोदयस्य मते तदिहैव मानवानां बुद्धिनिष्ठं भवतीति तयोर्भेदः उभयोरपि मते सामान्यस्यास्तित्वं विद्यत एव ।

एवं सामान्यविषये विविधा विप्रतिपत्तय उपलभ्यन्ते । कामं सन्तु ता विप्रतिपत्तयः किंतु मानवजीवने व्यवहारकाले च सामान्यमिदमत्यन्तमुपयुक्तं भवति । सामान्यमन्तरा लोकव्यवहार एव न सम्भवति । नहि सर्वत्र विशेषाणां प्रतीतिः सर्वदा सम्भवति । इहस्थः कश्चिद् देशान्तरस्थानां पुरुषाणां विषये विचारं वार्तालापं वा करोति तदा सामान्यप्रत्ययमुखेनैव स व्यवहारः सम्भवति नान्यथेति । सामान्यस्य व्यवहारे महानुपयोगः ।

तथा चायमत्र संग्रहः—

सामान्यस्य यथार्थत्वे मतभेदस्तु दृश्यते ।
यथार्थास्तित्ववादस्तु तत्र प्लैटोमते मतः ॥४॥

सामान्यप्रत्ययाः सर्वे स्वर्गे आदर्शरूपतः ।
विद्यन्तेऽनुकृतावेव तेषामर्था इमे मताः ॥५॥

नामात्ममात्रं सामान्यं न यथार्थं विकल्पितम् ।
अयं नामात्मवादाख्यः सिद्धान्तोऽत्रपरै र्मतः ॥६॥

यथार्थं बुद्धिनिष्ठं च प्लेटोवन्न बहिः स्थितम् ।
सुकरातमतं चेदं विद्यतेऽत्र तृतीयकम् ॥७॥

यथार्थं वाऽयथार्थं वा यथेष्टं स्यात् तथास्तु तत् ।
जीवने चाथ शिक्षायां सामान्यमतिमूल्यवत् ॥८॥
सामान्येन व्यवहारा सदा सर्वे भवन्ति नः ।
विशेषाणान्तु सर्वत्र प्रत्यक्षं नैव सम्भवेत् ॥९॥

## सामान्यप्रत्यायानां क्रमः—

विशिष्टप्रत्ययैरेव सामान्यप्रत्ययानां समुत्पत्तिर्भवतीति पूर्वमुक्तम्। यथा यथा पदार्थानां परिज्ञानं भवति तथा तथा विशिष्टाः प्रत्ययाः, विशिष्टैः प्रत्ययैश्च सामान्याः प्रत्यया जायन्ते। यावन्तश्च सामान्याः प्रत्यया यस्य सविधेऽधिका भवन्ति तथैव तस्य बुद्धिर्विकासति शिक्षा च परिपूर्णा भवति। अतो बालेषु सामान्यप्रत्ययनामभिवर्धनमध्यापकाना-मावश्यक कर्त्तव्यं भवति। किन्तु सामान्यप्रत्यायानां समुत्पादनेऽप विशिष्टः क्रम आश्रयणीयो भवति। बालाः सर्वतः प्राक्स्वसमीपवर्तिनि खाद्यानां क्रीडनकानां वा उपयोग एव सस्पृहा भवन्तीति तद्विषयका एव विशिष्टाः सामान्याश्च प्रत्ययाः पूर्वमुत्पद्यन्ते। २ ततश्च तत्समीपवर्तिनः सुलभाः कुक्कुरमार्जारादयः प्राणिनो बालनामवधानमाकर्षन्तीति तद्विषयका विशिष्टाः सामान्याश्च प्रत्यया जायन्ते। ततो दुर्लभानां सिंह-दीनां परिज्ञानं विशिष्टेन प्रयत्नेन भवतीति तद्विषयकाः सामान्या विशिष्टाश्च प्रत्ययास्तदनन्तरमुपार्जनीया भवन्ति। तदेवं भौतिकानां पदार्थानामनन्तरमभौतिकानां सत्याहिंसादिभावानां सामान्याः प्रत्ययाः सम्भवन्तीत्यनेनैव क्रमेण बालानां सामान्यप्रत्ययाधाने प्रयतितव्यम्—

तथाचोक्तम्—

खाद्यक्रीडनके पूर्वमश्ववृक्षादयस्ततः ।
सिंहादयस्ततोऽन्ते च भावा सत्यादयो मताः ॥१०॥
एवं क्रमेण सामान्याः प्रत्ययाः सुलभा यतः ।
ततो बालेषु तेनैव क्रमेण जनयेत् तु तान् ॥११॥

## ज्ञानाणुवादो अवयविवादश्च—

निर्विकल्पकानन्तरं सविकल्पकं प्रत्यक्षं जायते। सविकल्पकं च सप्रकारकं ज्ञानं भवति। तत्र रूपादिगुणविशिष्टस्य पदार्थस्य ज्ञानं

भवति। ततश्च सविकल्पके आम्रफलस्य रूपं, रसो, गन्धः स्पर्शश्चेति सर्वमपि सन्निहितं भवति। अतो विभिन्नेन्द्रियजन्यानां संवेदनानामत्र मिश्रणं भवति। बहूनां प्रत्ययानां सम्बन्धात् सविकल्पकं ज्ञानमुत्पद्यते अतः प्रत्ययसम्बन्धात्मकं सविकल्पकं ज्ञानं भवतीति केषाञ्चिन्मतम्। अस्मिन् मते सविकल्पकस्य ज्ञानस्य बह्वोंऽशा अणवो वा भवन्तीति सिद्धान्तोऽयं ज्ञानाणुवादनाम्नापि व्यवह्रियते। यथा बहूनां परमाणूनां संयोगेन घटादीनां भौतिकानामर्थानां निर्माणं भवत्येवं सविकल्पकं ज्ञानमपि बहूनां संवेदनात्मकानां ज्ञानाणूनां संयोगान्निर्मीयत इति ज्ञानाणुवादिनामभिमतम्। अयमेव ज्ञानावयववादः चेतनाणुवादश्च कथ्यते।

ज्ञानाणुवादाद् भिन्नोऽत्र जेस्टाल्टवादो अवयविवादो वा। जेस्टाल्ट-शब्दो हि शार्मण्यभाषायाः शब्दः। तत्र च 'अवयवी' इत्यस्मिन्नर्थेऽस्य शब्दस्य प्रयोगो भवति। अत एव जेस्टाल्टवादो अवयविवाद उच्यते। मनोविज्ञानस्य प्रचलितेषु सिद्धान्तेषु नूतनोऽयं सिद्धान्तः। एकोनविंशशताब्दिपर्यन्तं योरोपदेशे प्रत्ययसम्बन्धवादस्यैव प्रचार आसीत्। तदनुसारं लोकस्य सर्वेऽपि प्रत्ययाः विभिन्नानामणूनां संयोगादेव निर्मीयन्ते। किन्तु जेस्टाल्टवादिभिर्विंशत्या शताब्द्यामस्य सिद्धान्तस्य प्रबलं प्रत्याख्यानं कृतम्। तन्मते चास्माकं ज्ञानं भिन्नानां ज्ञानाणूनां मेलनमात्रं भवति किन्तु पूर्वत एव सम्बद्धमवयव्यात्मकं ज्ञानं भवति। यदि नाम परस्परमसंबद्धाः प्रत्ययाः एव पूर्वं जायन्ते ततश्च तेषां सम्मिश्रणं भवतीत्यभ्युपेयते तदा विभिन्नानां प्रत्ययानां संमिश्रणकर्ता संयोजको वा कश्चिदभ्युपेयः। न च पाश्चात्यानां मनोवैज्ञानिकानामात्मा तत्स्थानीयोऽन्यो वा कश्चित्तादृशः पदार्थोऽभिमतो यो विभिन्नानां प्रत्ययानां सम्मेलनं कुर्यात्। अत एव जेस्टाल्टवादिभिरवयव्यात्मकमेव ज्ञानं भवतीति प्रतिपादितम्।

तथा चायमत्र संक्षेपः—

भिन्नेन्द्रियसमुद्भूत-ज्ञानानां मिश्रणं यतः।<br>
सविकल्पे भवत्यस्मात् कैश्चिज् ज्ञानाणवो मताः॥१२॥<br>
घटादीनां समुत्पत्तिर्भूताणुमिश्रणाद् यथा।<br>
एवं ज्ञानाणुसंयोगाज् जायते सविकल्पकम्॥१३॥

प्रत्ययसम्बन्धवादोऽपि सिद्धान्तोऽयमुच्यते ।
चेतनारचनावादश्चेतनाणुमतं तथा ॥१४॥
अवयव्यात्मकं ज्ञानं सर्वं नावयवात्मकम् ।
ततो भिन्नं मतं ह्येतज् जेस्टाल्टवादिनां मतम् ॥१५॥
शार्मण्यभाषाशब्दोऽयमवयव्यर्थको यतः ।
ततोऽवयविवादोऽयं मतो जेस्टाल्टनामकः ॥१६॥

## भ्रममीमांसा—

इन्द्रियजन्यं ज्ञानं यथार्थमयथार्थं चेति द्विविधं भवति । तत्र यथार्थोऽनुभवः प्रमा पदेन व्यवह्रियते । तत्साधनं च प्रमाणमित्युच्यते । तद्भिन्नं च ज्ञानमप्रमापदेनोच्यते । तदेव च भ्रमपदवाच्यमपि भवति । 'तदभाववति तत्प्रकारकं ज्ञानमप्रमा' इति भ्रमापरपर्यायाया अप्रमाया लक्षणम् । यथा शुक्तौ चाकचिक्यादिदर्शनाद् रजतप्रतीतिः । यथा वा रज्जौ सर्पभ्रान्तिः । उभयमपीदमप्रमाया उदाहरणम् । तत्र रजतत्वाभाववति शुक्त्यादौ रजतत्वप्रकारकं इदं रजतमित्याकारकं ज्ञानं भ्रमः । एवं सर्पत्वाभाववति रज्ज्वादौ सर्पत्वप्रकारकं 'अयं सर्प' इति ज्ञानं च भ्रमपदवाच्यं भवति । योगदर्शने चायं भ्रमो विपर्ययनाम्ना व्यवह्रियते । 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' इति च विपर्ययस्य लक्षणम् । अतद्रूपे असर्परूपे रज्ज्वादौ प्रतिष्ठितं सर्पादिज्ञानं मिथ्याज्ञानं विपर्ययपदवाच्यं भवति ।

मनोवैज्ञानिकानां नये प्रायः सर्वमपि प्रत्यक्षज्ञानं भ्रमसंवलितं भवति । दैर्ध्ये समानाकारयोरपि द्वयोः पुरुषयोर्मध्ये यः स्थूलो भवति स कृशापेक्षया ह्रस्वः प्रतीयते यश्च कृशो भवति स स्थूलापेक्षया दीर्घः प्रतीयते । एवं एकः पुरुषःसामान्यतो यावान् दीर्घो भवति,यदि स आप्रपदीनमेकमेव वस्त्रं धारयति तदा लम्बायमानः प्रतीयते । अत एव समानाकारयोः स्त्रीपुरुषयोर्मध्ये आप्रपदीनस्यैकस्य वस्त्रस्य प्रभावेण पुरुषापेक्षया स्त्री लम्बायमाना दृश्यते । सर्वाण्यप्येतानि भ्रमसंवलितानि ज्ञानानि भवन्ति । किन्तु तत्र भ्रमशब्दस्य प्रयोगो न क्रियते । यत्र वस्तुनो ज्ञाने यथार्थ्ये चाधिकं वैषम्यमायाति तत्रैव भ्रमपदस्य प्रयोगः क्रियते ।

भ्रमश्चायं संवेदनजन्यो विचारजन्यश्चेति द्विविधो भवति। तत्र संवेदनजन्यो भ्रम इन्द्रियदोषाद् भवति। इन्द्रियदौर्बल्यमेव संवेदनजन्यभ्रमे कारणं भवति। संवेदनजन्यभ्रमस्य बहून्येतादृशान्युदाहरणान्युपलभ्यन्ते येषां परिज्ञानमपि सामान्यदृष्ट्या न भवति। केवलं वैज्ञानिकपद्धत्यैव तज्ज्ञानं सम्भवति। तेषु कानिचिन्मनोरञ्जकान्युदाहरणान्यत्रोदाह्रियन्ते।

चित्र सं० १५

१ अस्मिंश्चित्रे ऊर्ध्वगामिनी रेखा दीर्घा तिर्यग्गामिनी च रेखा ह्रस्वा प्रतीयते वस्तुत उभेऽपि रेखे तुल्याकारे एव स्तः। अत एवायं नियमो दृश्यते यत् समानाकारयो रेखयोर्मध्येऽपि तिर्यग्गामिनी रेखा लघ्वी उर्ध्वगामिनी च रेखा दीर्घा प्रतीयते।

२ समानकारयो रेखयोर्मध्ये यस्या प्रान्तभागावन्तर्मुखौ भवतः सा लघ्वी प्रतीयते यस्याश्च प्रान्तभागौ बहिर्मुखौ भवतः सा दीर्घा प्रतीयते। अधोऽङ्कितेन चित्रेणैतत् स्फुटं सञ्ज्ञायते।

चित्र सं० १६

३. तुल्याकारयोः स्थानयोर्मध्ये परिपूर्णस्थानापेक्षया रिक्तं स्थानमधिकं प्रतीयते। यथाऽधोऽङ्किते चित्रे, वर्गद्वये रिक्तो वर्गः परिपूर्णवर्गापेक्षया दीर्घः प्रतीयते।

चित्र सं० १७

४. वक्ररेखां अतिक्रामन्ती सरलरेखापि वक्रेव प्रतीयते। यथाधोऽङ्किते चित्रे वक्ररेखाणां मध्ये दृश्यमाने सरल रेखेऽपि वक्रे प्रतीयेते।

चित्र सं० १८

५. द्वयोस्तुल्याकारयोर्मध्ये उपरिस्थितं चित्रं लघुतरं अधः स्थितं च चित्रं दीर्घतरं प्रतीयते यथा निम्नाङ्कितयोश्चित्रयोः स्पष्टं प्रतीयते।

चित्र सं० १६

विचारजन्यो भ्रमः—विचारजन्यो भ्रमो भ्रमस्य द्वितीयो भेदः। मनोन्तर्गता विचारा इच्छा उद्वेगाश्च विचारजन्ये भ्रमे निमित्ततामुपयान्ति। मनसि यादृशी विचारधारा भवति बाह्ये जगति वस्तुतस्तद्विपरीता अपि पदार्थास्तदनुरूपा एव प्रतीयन्ते। मुद्रणपत्र (प्रूफ) संशोधकाः प्रायशस्तादृशेन भ्रमेणाक्रान्ता भवन्ति। सीसकाक्षरयोजकैः किमप्यशुद्धं योजितमस्ति किन्तु संशोधकानां मनसि शुद्ध एव पाठोऽङ्कितोऽस्ति। ते सम्मुखस्थमशुद्धमपि पाठं शुद्धं मत्वा न संशोधयन्ति। विशेषतो यदा पुस्तकलेखका एव संशोधका भवन्ति तदा तादृग्भ्रमाणां बाहुल्यं जायते।

मानसानामुद्वेगानां समुपस्थितिरपि विचारजन्ये भ्रमे निमित्ततामुपयाति। कृपणाः पुरुषाः सदैव चौराणां भयेनाक्रान्ता भवन्ति। रात्रौ यदि कश्चिदपरिचितः पुरुष आयाति तदा ते चौरमेवाभ्युपगच्छन्ति तम्। एवमाशापि भ्रमोत्पादिका भवति। यदा कश्चित्स्वमित्रस्यागमनं प्रतीक्षते तदा कस्यापि पादध्वनिं निशम्य स मित्रागमनमेवोत्प्रेक्षते। मनसि पूर्वनिहिता अपि विचारा विपरीतमेवार्थमनुभावयन्ति। पत्राणां संवाददातारो हि प्रत्यक्षावलोकितामेकामेव घटनां भिन्नरूपेण प्रकाशयन्ति। तत्र तेषां दृष्टिकोणस्य भेद एव मूलम्।

## देशकालपरिज्ञानम्—

प्रत्येकं वस्तु कस्मिन्नपि देशविशेषे कालविशेषे च भवतीति सर्वथा देशकालसहचरितमेव वस्तुज्ञानं भवति। अत एव देशकालयोः परिज्ञानोपाया अप्यत्र विवेचनीया भवन्ति। तत्र देशपरिज्ञानस्य दिग्ज्ञानं, दूरत्वज्ञानं, परिमाणज्ञानं, आकृतिज्ञानं चेति चत्वारो मुख्यभागाः सन्ति। सर्वमपीदं ज्ञानमिन्द्रियसाध्यं भवति। किन्तु किञ्चिदिन्द्रियं तेषु कस्याप्येकस्यैव भागस्य ज्ञाने समर्थं किञ्चिच्चानेकेषामपि ज्ञाने समर्थं भवति। तद्यथा श्रोत्रेन्द्रियं वस्तुनो दिग्दूरत्वे एव बोधयितुं समर्थं भवति आकृतिपरिमाणयोर्ज्ञाने तदसमर्थमेव।

दिग्ज्ञाने चक्षुषः श्रोत्रेन्द्रियस्य च विशेषत उपयोगः। चक्षुषा वस्तु दृष्ट्वैव तस्य दिग्ज्ञानं जायते। कदाचिच्च शब्दं श्रुत्वा शब्दोत्पत्तिनिमित्तं कस्यां दिशि वर्तते इति ज्ञानं श्रोत्रेन्द्रियसहकारेणैव भवतीति श्रोत्रेन्द्रिय-

मपि दिग्ज्ञान उपयुज्यते । प्राणिनां श्रोत्रद्वयं वर्तते । यस्यां दिशि शब्दो भवति तद्दिश्येन श्रोत्रेण तस्य तीव्रानुभूतिः परेण च मन्दानुभूतिर्भवति । एवं गन्धं घ्रात्वा घ्राणेन्द्रियसहकारेणापि दिग्ज्ञानं सुकरं भवति ।

एवं चक्षुषा वस्तूनां दूरत्वसन्निकृष्टत्वज्ञानं परत्वापरत्वज्ञानं वा स्फुटमेव भवति । नवजातेषु शिशुषु परत्वापरत्वनिर्धारणसामर्थ्यं न भवति । किन्तु प्रौढा जना दृङ्मात्रेणैव परत्वापरत्वं परिचिन्वन्ति । एवं स्पर्शेन गत्या चापि परत्वापरत्वज्ञानं सम्यग् भवतीति त्वगिन्द्रियमपि दूरत्वग्रहे समर्थं भवति । चक्षुषा दूरत्वग्रहे १ परिमाणं, २ आकृतिः, ३ आवरणं ४ गतिश्चेति चतुष्टयं सहायकं भवति ।

यस्य वस्तुनः परिमाणं परिचितमस्ति तस्य परिमाणं यदि कस्मिंश्चित् समयेऽनुभूतात् परिमाणात् स्वल्पतरं प्रतीयते तदा तत्र पदार्थस्य दूरत्वमेव निमित्तम् । दूरस्थो हि पदार्थः, परिमाणे स्वल्पतर एव प्रतीयते । यथा वियति दूरमुत्पतन् पतत्री लघुतरः प्रतीयते । पर्वतस्थः पुरुषोऽधःस्थितान्, अधः स्थितश्चोर्ध्वस्थितान् ह्रस्वतरानेव पश्यति । किन्तु परिचितानां पदार्थानामेवाकारस्तेषां दूरत्वपरिज्ञाने सहायको भवति नापरिचितानां पदार्थानाम् । यो हि बालकः प्रथममेव वायुयानं पश्यति परिमाणं दृष्ट्वा तस्य दूरत्वानुमाने समर्थो न भवति ।

एवं पदार्थानामाकृतिज्ञानमपि तेषां दूरत्वज्ञाने सहायकं भवति । दूरस्थानां पदार्थानामाकृतिर्हि गोलाकारेव जायते । चन्द्रमसो दूरत्व-त्वादेव वक्रापि तदाकृतिर्वर्तुला प्रतीयते । अन्येषामपि पदार्थानामकृति-र्दूरत्वेन परिवर्तते । अत एव यदा परिचितानां पदार्थानामाकृतौ तादृशं परिवर्तनं दृश्यते तदा तेनैवाकृतिपरिवर्तनेन तेषां दूरत्वमपि निर्धारितं भवति ।

एवमावरणमपि दूरत्वनिर्धारणे सहायकं भवति । समीपस्थं हि वस्तु तस्यामेव दिशि स्थितं दूरस्थं वस्तु अस्मद् दृष्टेरावृणोति । तेना-वरणेनानुमीयते यदावरकं वस्तु समीपस्थमावृतं च वस्तु दूरस्थं विद्यते । कदाचित् समीपस्थः क्षुद्रोऽपि पदार्थोऽतिविस्तीर्णं दूरस्थं पदार्थमाच्छा-दयति । यथा स्वल्पोऽपि मेघशकलोऽनेकयोजनायतमादित्यमण्डलमा-वृणोति । अनेनापि प्रकारेणावरणं दूरत्वानुमापकं भवति ।

एवं पदार्थानां गतिरपि दूरत्वानुमापिका भवति । यथा धूम्रयाने गच्छन्तः पुरुषाः समीपस्थान् तारस्तम्भान् वेगेन दूरस्थांश्च वृक्षान् मन्दं मन्दं धावतः पश्यन्ति । एवं पदार्थानामस्पष्टत्वमपि दूरत्वबोधकं भवति । दूरस्था हि पदार्था अस्पष्टाः प्रतीयन्ते अत एव तेषामस्पष्टता दूरत्वानुमापिका भवति ।

तदयमत्र संग्रहः—

देशकालावपि ज्ञाने भासेते वस्तुदर्शने ।
चक्षुस्त्वक् चैव श्रोत्रं च मुख्यं तत्साधनं मतम् ॥१७॥
दिक् दूरत्वपरिमाणे तुरीया चाकृतिस्तथा ।
चत्वार्येतानि ज्ञेयानि देशज्ञानकराणि तु ॥१८॥
चक्षुस्त्वक् चैव श्रोत्रं च घ्राणं च रसनं क्वचित् ।
प्रायः सर्वाणि दिग्ज्ञाने इन्द्रियाणि क्षमाणि वै ॥१९॥
चक्षुषा च त्वचा चैव, गत्या श्रोत्रेन्द्रियेण च ।
प्रायो दूरत्वमर्थानां गृह्यते साधनैरिमैः ॥२०॥
आकृतिः परिमाणं च आवरणं गतिस्तथा ।
अस्पष्टत्वं तथार्थानां नेत्राद् दूरत्वबोधकम् ॥२१॥
कालस्यापि तथा ज्ञानं देशज्ञानं यथेन्द्रियैः ।
एवं प्रत्यक्षसम्बद्धं ग्रहणं देशकालयोः ॥२२॥

## देशकालविषये विप्रतिपत्तयः—

यद्यपि सर्वमपि प्रत्यक्षज्ञानं देशकालसम्बद्धमेव भवति तथापि केषाञ्चिद्विदुषां देशकालयोः स्थितिविषये विप्रतिपत्तिर्विद्यते । तद्यथा प्रसिद्धः शार्मण्यस्तत्ववेत्ता इमेनुअलकान्टमहोदयः तयोरस्तित्वं न स्वीकरोति । तन्मते देशकालौ वस्तुज्ञाने उपकरणभूतावपि न परमार्थौ । किन्तु बुद्धिस्थौ कल्पितावेव च विद्येते । देशकालयोः संवेदनजनकं किमपि वाह्यं तत्त्वं नावलोक्यतेऽतो देशकालावयथार्थावेव । एवं भारतीये दर्शने सांख्यवादिनोऽपि कालं न मन्यन्ते ।

तदुक्तम्—

देशः कालश्च बुद्धिस्थौ कल्पितौ न बहिः स्थितौ ।
इष्टौ काण्टमते नूनं कालः सांख्यमतेऽपि च ॥२३॥

## निरीक्षणम्—

निरीक्षणमपि प्रत्यक्षज्ञानसम्बद्धं भवति। सविकल्पके प्रत्यक्षे संवेदनव्यतिरिक्ताः स्मृतयः कल्पनाश्चापि संवलिता भवन्ति। स्मृतिकल्पनयोः प्राबल्ये विचारपूर्वकं यत्प्रत्यक्षज्ञानं भवति तन्निरीक्षण-पदवाच्यं भवति। सम्यक् प्रकारेण पदार्थस्य दर्शनं, तस्योपयोगितायाः परिशीलनं वस्त्वन्तरैः सह तस्य सम्बन्धावधारणं च विशेषतो निरीक्षणमुच्यते। यद्यपि प्रत्यक्षज्ञानमेव निरीक्षणस्याधारभूतं भवति। तथापि स्मृति-कल्पनयोरपि तत्र प्रचुरः प्रयोगो भवति। निरीक्षणे पुरुषो यथा सक्रियः सचेष्टश्च भवति तथा प्रत्यक्षकाले न भवति। निरीक्षणे चित्तस्यैकाग्र्यं विचारसामर्थ्यं सम्बन्धयोजनशक्तिश्च प्रत्यक्षज्ञानापेक्षयाधिकमुपयुज्यते। यथा यथा मानवस्य लौकिकं ज्ञानं वर्धते तथा तथा तस्य विवेचनाशक्तिनिरीक्षणसामर्थ्यमपि च वर्धते। तच्च निरीक्षणं सोद्देश्यं, बाध्यं ज्ञानसाधकं चेति त्रिविधं भवति। यत्र पूर्वत एव निर्धारितं कमप्युद्देश्यमुपादाय निरीक्षणे प्रवर्तते जनस्तत्सोद्देश्यं निरीक्षणम्। यत्र च परिस्थितिवशादकस्मादेव निरीक्षणे बाध्यतया प्रवृत्तिर्भवति तद्बाध्यमाकस्मिकं वा निरीक्षणमुच्यते। यथा कश्चित् पुरुषः स्वाध्यायनिमग्नोऽस्ति। अकस्मादेव कुतश्चिदुग्रः कोलाहलः शब्दो वा श्रूयते तदानिच्छन्नपि स कोलाहलस्य कारणानुसन्धाने प्रवर्तते। इदं बाध्यमाकस्मिकं च निरीक्षणं कथ्यते। तृतीये निरीक्षणप्रकारे जनः कमप्युद्देश्यमुपादाय न प्रवर्तते किन्तु नवीनासु परिस्थितिषु यत्किमपि पश्यति तस्य सम्यक्तया निरीक्षणं करोति। इदं ज्ञानसाधकं तृतीयं निरीक्षणमुच्यते।

तदुक्तम्—

> प्रत्यक्षेणैव सम्बद्धं परं चापि निरीक्षणम्।
> सविचारं प्रवर्तेत मिश्रितं कल्पनादिभिः ॥२४॥
> सोद्देश्यं चैव बाध्यं च ज्ञानसाधकमेव च।
> एव निरीक्षणं ह्येतन्मुख्यतस्त्रिविधं मतम् ॥२५॥

**प्रश्नाः—**

१. संवेदनप्रत्यक्षयोः को भेदः। कथं च प्रत्यक्षज्ञानस्योत्पत्ति।

२. प्रत्यक्षज्ञाने न्यायसम्मते करणत्रय षडविधश्च सन्निकर्षः प्रतिपादनीयः।

३. भ्रमस्य किं लक्षण कथ च तस्ये समुत्पत्तिः।

षोडशः परिच्छेदः

# स्मृतिः

## स्मृतेरुपयोगः—

मनोव्यापाराणां पञ्चाङ्के ज्ञानपक्षे संवेदनं प्रत्यक्षं च पूर्वं निरूपितम्। स्मृत्यात्मकस्य तृतीयस्याङ्गस्य विवेचनामिदानीं क्रमप्राप्तमिति तदारभ्यते। संस्कारजन्यं ज्ञानं स्मृतिरिति स्मृतेः सामान्यं लक्षणम्। प्रत्यक्षादिरूपाश्चित्तवृत्तयः क्षणिकाः, क्षणादेव विलीयन्ते, न चिरं स्थातुं शक्नुवन्ति। प्रत्यक्षज्ञानं चार्थे विद्यमाने एव भवति। नाविद्यमाने व्यवहिते वार्थे प्रत्यक्षमुत्पद्यते। न च सर्वत्र सर्वकालं सर्वेषां पदार्थानां विद्यमानता सम्भवति। ततश्चाविद्यमानेऽप्यर्थे पदार्थज्ञानं कथं भवेदित्यत्र किञ्चित्साधनमन्वेष्टव्यं भवति। तच्च साधनं स्मृत्यात्मकमेव। विलीने प्रत्यक्षज्ञानेऽविद्यमाने चार्थे स्मृतिरेव तज्ज्ञानसाधनं भवति। स्मृतिबलेनैव इतिहासस्यात्मलाभः। तद्बलेनैव च विद्यानामभ्यासः, शिक्षायाः प्रगतिः, लोकव्यवहारस्य च व्यवस्थितिर्भवति। यदि स्मृतिर्नाम जगति न स्यात् सर्वोऽपि लोकव्यवहारः क्षणमपि नावस्थातुमुत्सहेत। ततो जगति स्मृतेरतीव महत्त्वपूर्णं स्थानं विद्यते।

अविद्यमानपदार्थविषया व्यवहितपदार्थविषया वेयं स्मृतिः कथमुत्पद्यते? इत्यस्य प्रश्नस्य समाधानार्थं संस्कारजन्यत्वं स्मृतेरभ्युपेतम्। सर्वा अपि चित्तवृत्तयो विलीयमानाश्चित्तपटले स्वसंस्कारमर्पयन्ति। ततश्च संस्कारात्मना तज्ज्ञानं मनःपटले सुस्थिरं जायते। यथा क्षणिकोऽपि शब्दः ग्रामोफोनयन्त्रस्य रेकार्ड-पटले रेखोल्लेखनमुखेन चिरस्थायितां लभते। काले चोपरतेऽपि वक्तरि समुचित सामग्रीसहाय्यात् पुनरप्यभिव्यक्तिमासादयति। एवमुपरतमपि प्रत्यक्षादिज्ञानं मनःपटले संस्काराधानमुखेन सुस्थिरं जायते। समुपस्थिते चावसरे सादृश्यादृष्टचिन्तादिरूपाणामुद्बोधकानां साहाय्येन स्मृत्यात्मना पुनरप्यभिव्यक्तिमासदयति। संस्कारा हि प्रत्यक्षादिरूपाणां ज्ञानानां विलयेऽपि तद्विषयं चित्ते सुरक्षितं कुर्वन्ति। येन तस्य विषयस्य सम्प्राप्तेऽवसरे पुनरपि परिज्ञानं जायते। अत एव

योगसूत्रे 'अनुभूतविषयासम्प्रमोषः स्मृतिः' इति स्मृतेर्लक्षणं विहितम्। अनुभूतस्य विषयस्य स्थायित्वमेव असम्प्रमोषश्चित्ते स्मृत्या सम्पाद्यत इति अनुभूतविषयासम्प्रमोषात्मकत्वमेव स्मृतेरवधारितम्।

स्मृतिशक्तिर्हि पैतृकीसम्पत्तिरिव प्रायो जन्मजाता भवति। प्रतिपुरुषं च भिद्यते। सर्वेषां जनानां स्मृतिशक्तिर्विभिन्नाकारा विभिन्न-रूपा च भवति। क्वचित्तीव्रा क्वचिच्च मन्दा भवति स्मृतिशक्तिर्जन्मतः। किन्तु यः स्मृतिशक्तेः सदुपयोगं करोति तस्य सा सुदृढा भवति वर्धते च। कस्यापि विषयस्य क्रियासमभिहारेणानुचिन्तनमेव स्मृतिशक्तेः सदुपयोगः। ये च क्रियासमभिहारेणानुचिन्तयन्ति विषयजातं, तेषां दुर्बलापि स्मृतिशक्तिः कालेन परिपुष्टा जायते। ये च तत्रोदासते तेषा तीव्रापि च सा शक्तिर्मन्दतामुपयाति। ते हि स्मृतिशक्तेः सदुपयोगा-भावात् तस्या विकासं कर्तुं साफल्यं वाधिगन्तुं न पारयन्ति। अतो जीवनोपयोगिनां विषयाणां पौनः पुन्येनानुचिन्तनं स्मृतेर्विकासाय जीवन-साफल्याय चात्यन्तमुपयुक्तमावश्यकं च भवति।

तथा चोक्तम्—

ज्ञानवर्गे तृतीयश्च व्यापारो मनसः स्मृतिः।
तच्च संस्कारजं ज्ञानमसत्यर्थेऽपि जायते ॥१॥
चित्ते संस्कारमाधाय अर्थज्ञानं विलीयते।
स च सादृश्यचिन्ताद्यैरुद्बुद्धः स्मृतिकारकः ॥२॥
पैतृकी शक्तिरेषा च भिद्यते व्यक्तिभेदतः।
क्वचित्तीव्रा क्वचिन्मन्दा मध्यमा वा क्वचिच्च सा ॥३॥
यस्य तीव्रा स्मृतिर्लोके विद्यादौ स प्रशस्यते।
येषां मन्दा पुनः सैव, ते तु तत्र विगर्हिताः ॥४॥
क्रियासमभिहारेण सदाभीष्टानुचिन्तनात्।
वृद्धिं दार्ढ्यं च लोकस्य शक्तिरेषा प्रपद्यते ॥५॥

## प्रशस्तायाः स्मृतिशक्तेर्लक्षणम्—

स्मृतिशक्तेः प्राशस्त्यमप्राशस्त्यं वा प्रायश्चतुर्भिर्लिङ्गैरनुमीयते। यत्किमप्यधीयते स्मर्यते वा तस्य त्वरितमवधारणं स्मरणं च प्रशस्तायाः

स्मृतिशक्तेः प्रथमं लक्षणम् । स्मृतस्य विषयस्य मनसि चिरस्थायित्वं प्रशस्तस्मृतेर्द्वितीयं लिङ्गम् । समुचितेऽवसरे स्मृतस्य विषयस्य सद्यः परिस्फूर्तिश्च स्मृतिप्राशस्त्यबोधकं तृतीयं लक्षणम् । यो जनः स्मरणीयं विषयं त्वरितमेव स्मर्तुं न शक्नोति, स्मृतं वा शीघ्रमेव विस्मरति काले वा यस्य स्मृतिर्नोपतिष्ठते स जीवने महत्काठिन्यमनुभवति जीवनसाफल्यं च तस्य सन्दिग्धमेव जायते । केचित्पुरुषाः शीघ्रमेव स्मरन्ति किन्तु तद्वदेव त्वरितं विस्मरन्ति ।चिरं स्मरन्तोऽपि वा काले न स्मरन्ति, तेषामपि स्मृतिशक्तिरप्रशस्तैव भवति । एवं व्यर्थानां पदार्थानां विस्मरणमपि प्रशस्तस्मृते-र्लक्षणम् । यो हि जनो व्यर्थानामप्यर्थानां चिरं स्मरणं करोति स नूतनानामुपयोगिनां च वस्तूनां स्मरणे शैथिल्यमुपयाति । यदा जीवने काचिदप्रिया घटना सञ्जायते तदा तद्विस्मरणमिच्छन्तोऽपि जनास्तद्विस्मर्तुं न पारयन्ति । मानसेषु रोगेष्वप्रियाणां घटनानां भूयो भूयः स्मृतिर्जायते वैक्लव्यं चोत्पादयति । यद्यप्रियाणां घटनानां विस्मरणं न भवेज्जीवनमिदं कष्टमयमेव सञ्जायेत । अतो व्यर्थानां विस्मरणमपि प्रशस्तस्मृतेर्लक्षणम् ।

तथा चोक्तम्—

> स्मृतिस्त्वरिता काले च या चिरस्थायिनी तथा ।
> प्रशस्ता सैव सम्प्रोक्ता व्यर्थानां विस्मृतिस्तथा ॥६॥
> अप्रियस्मरणं चित्ते सदा चेदनुवर्तते ।
> जीवनं पुरुषाणान्तु नूनं कष्टतरं भवेत् ॥७॥

## स्मृत्यङ्गानि—

कस्यापि विषयस्य सुस्मृतिसम्पादनाय सर्वतः प्राक् तस्य स्मरणे प्रयत्न अपेक्षितो भवति । प्रयत्नमन्तरा स्मरणं न सम्भवतीति तत्र स्मरणप्रयत्नः स्मृतेः प्रथममङ्गम् । स्मृतस्य चित्ते चिरमवस्थानमपि तत्राव-श्यकं भवति । तदभावे विस्मृतविषयस्य पुरुषस्य, अगृहीतविषयात्पुरुषात् कश्चिद्विशेषो न भवति । अत एव स्मृतस्य विषयस्य धारणा, चित्ते चिर-मवस्थानं वापि सुस्मृतिसम्पादनेऽपरिहार्यम् । तद् द्वितीयमङ्गम् । समुपस्थिते चावसरेऽपेक्षितस्य विषयस्य सद्यः स्मरणमपि सुस्मृतेस्तृ-तीयमङ्गम् । यदि समुचितेऽवसरेऽपेक्षितस्य विषयस्य स्मरणं न भवति तदा परहस्तगतं धनमिव तद् व्यर्थमेव सम्पद्यते ।

पुस्तकस्था तु या विद्या परहस्तगतं धनम्।
कार्यकाले समुत्पन्ने न सा विद्या न तद् धनम्॥

इत्यभियुक्तवाक्यानुसारं परहस्तगतं धनं यथा कार्यकाले वन्ध्यप्रायं भवति एवं यदि स्मृतं वस्तु समये नोपतिष्ठते तदा तदपि वन्ध्यप्रायं न फलाय कल्पते। स्मृतस्य प्रत्यभिज्ञानमपि सुस्मृतिलक्षणे चतुर्थमङ्गं भवति। पूर्वदेश-पूर्वकालसम्बन्धिनो विषयस्य पुनर्दर्शने उभयोरपि सम्बन्धावधारणं प्रत्यभिज्ञानमुच्यते। सोऽयं देवदत्तो यः काश्यां दृष्ट आसीदित्येवमात्मकं काशिस्थस्य देवदत्तस्य इदानीं सम्मुखस्थेन देवदत्तेन सहाभेदज्ञानं भवति। अत एव तत्तेदन्तावगाहिनी प्रतीतिः प्रत्यभिज्ञेति प्रत्यभिज्ञाया लक्षणम्। पूर्वदेश-पूर्वकालसम्बन्धो हि तत्तापदवाच्यः। एतद्देश-एतत्कालसम्बन्धश्चेदन्तापदवाच्यः। तदुभयमप्यत्र सोऽयं देवदत्त इति ज्ञाने भासते तस्मादियं प्रत्यभिज्ञात्मिका प्रतीतिरुच्यते। इदं प्रत्यभिज्ञानमपि सुस्मृतिलक्षणे आवश्यकं चतुर्थमङ्गं भवति। प्रत्यभिज्ञायामिदन्ता ग्रहणमिन्द्रियार्थसन्निकर्षाद् भवतीति प्रत्यक्षात्मकम्। तत्ताग्रहणं च संस्कारसापेक्षमिति स्मरणात्मकं भवति। एवं प्रत्यभिज्ञायां प्रत्यक्षस्मृत्योः सङ्करः प्रतीयते। एवं स्मृतेरिमानि चत्वारि मुख्यान्यङ्गानि भवन्ति।

तथाचोक्तम्--

स्मरणं तस्य ध्रौव्यं च सुस्मृतिः समये पुनः।
प्रत्यभिज्ञा च तस्यैवं स्मृतेरङ्गचतुष्टयम्॥८॥

## स्मृतेरवान्तराण्यङ्गानि--

एषु स्मृतेश्चतुर्ष्वङ्गेषु स्मरणप्रयत्नः प्रथममङ्गम्। तत्रापि च पुनश्चत्वारि मुख्यानि प्रयोजकानि भवन्ति। तत्र मस्तिष्कस्य प्रासादस्तावदाद्यः प्रयोजकः। यस्य पुरुषस्य मस्तिष्कं स्वस्थं प्रसन्नं च भवति स एव कस्यापि विषयस्य सम्यक् स्मरणे समर्थो भवति। परिश्रान्तः पुरुषो मस्तिष्कप्रसादस्याभावात् किमपि स्मर्तुं न शक्नोति। प्रातःकाले सर्वेषामपि मस्तिष्कं प्रसन्नं पुनर्नवीभूतमिव च भवतीति स एव पाठस्मरणस्य सर्वोत्तमः कालः। अत एव ब्राह्मे मुहूर्ते ब्रह्मचारिणामुत्थानं प्रभाते चाध्ययनं गुरुकुलेष्वावश्यकं भवति।

कस्यापि विषयस्य पाठस्य वा सम्यक् स्मरणाय क्रियासमभिहारेण तस्यावृत्तिरपेक्षिता भवति। यथा यथा पाठस्यावृत्तिः क्रियते तथा तथा दृढतरः संस्कारो मनसि जायते। येन मनसि सुस्थिरो भवति विषयः सद्य एव च स्मृतिमुपतिष्ठते। अध्यापकैरध्यापनकालेऽपि एतदवधेयं यत् पाठस्य मुख्या अंशा बालानां पुरतः पौनः पुन्येनावृत्ता भवेयुः। इयं हि पाठावृत्तिः स्मृतिदार्ढ्यायातीवोपयोगिनी भवति। पाठावसाने सर्वोऽपि पाठः संक्षेपेण साररूपतया पुनरप्यावर्तनीयः। तस्य मुख्याश्च भागाः श्यामपटले लेख्याः। इयं पाठावृत्तिः स्मरणस्य द्वितीयमङ्गं भवति।

पाठस्य रुचिकरत्वं च स्मरणस्य तृतीयमावश्यकमङ्गं भवति। यो हि पाठो बालेभ्यो रुचिकरो भवति तं सद्य एव स्मरन्ति बालाः। अरुचिकरश्च पाठः सत्यपि प्रयत्ने सम्यक् न स्मर्यते। रुचिकरे पाठे श्रान्तोऽपि बालो ग्लानिं नानुभवति। अरुचिकरे च पुनर्नवीभूतोऽपि श्रान्तिमिवानुभवति। अत एवाध्यापकैस्तथा प्रयतितव्यं यथा तत्पाठे बालानां रुचिरुत्पादिता भवेत्। रुचेरुत्पादने पञ्चाङ्गानि पूर्वमुक्तानि। यत्र विषयस्य शैलीभेदादध्यापनं नूतनत्वापादनं च मुख्ये अङ्गे भवतः।

पाठस्य क्रियया सम्बन्धोऽपि स्मरणसौकर्यसम्पादको भवति। यत्पठ्यते तस्य लेखनेन तद्व्याख्यानेन अभिनयेन वा तस्य क्रियया सम्बन्धो भवति। क्रियासम्बन्धाच्च स पाठः साधुतया सद्यश्च स्मृत्यारूढो जायते। अत एव विद्यालयेषु लेखनादिकार्येषु छात्रा विशेषतो व्यापार्यन्ते।

प्रशस्तायाः स्मृतेर्यानि चत्वार्यङ्गानि प्रतिपादितानि तेषु स्मरणात्मकस्य प्रथमस्याङ्गस्यैते चत्वारो मुख्या उपाया दर्शिताः।

तथा चोक्तम्—

मस्तिष्कस्य प्रसादश्च पाठावृत्तिस्तथैव च।
रुचेराधानमेवं च क्रियासम्बन्ध एव च ॥९॥

स्मृतेरङ्गस्य चाद्यस्य स्मरणाख्यस्य यत्नतः।
एतच्चतुष्टयं प्रोक्तं साधु सौकर्यकारकम् ॥१०॥

२. मुख्येषु चतुर्षु स्मृत्यङ्गेषु धारणा द्वितीयमङ्गम्। यद्वशान्मनसि निहिताः संस्कारा सुस्थिरा जायन्ते सा मानसी शक्ति-धारणा—

पदवाच्या भवति। सा च प्रायो जन्मजैव भवति। बाल्ये चेयं शक्तिर्बलवती भवति वार्धक्ये च दुर्बला सञ्जायते। यथा नवे मृद्भाजने लग्नः संस्कारः स्थिरो भवति एवं बालानां मनसि निहितः संस्कारोऽपि सुस्थिरो भवति। बालानां धारणाशक्तिः प्रबला भवत्यत एव ते कमपि विषयं शीघ्रं साधुतया च स्मर्तुं प्रभवन्ति। वृद्धाश्च सुस्मृतमपि विषयं सप्रयत्नमपि स्मरन्तो विस्मरन्ति। किन्तु बालानां धारणाशक्तिर्यथा प्रबला भवति तथा विचारशक्तिः प्रबला न भवति। अत एव बालानां पाठ्यविषयेषु धारणाप्रधानानामेव विषयाणां सन्निवेशो युक्तो न विचारप्रधानानाम्। येषां विषयाणां कण्ठस्थीकरणमावश्यकं भवति ते बाल्य एवाध्यपनीया भवन्ति।

तथा चोक्तम्--

मनसि सुस्मृतः पाठश्चिरं तिष्ठति यद्वशात्।
धारणा नाम सा शक्तिर्बालेषु प्रबला मता ॥११॥
अतः सन्धारणं येषां कण्ठीकरणमेव वा।
विषयाणामभीष्टं स्यात् तेऽध्याप्या बाल्य एव हि ॥१२॥

## ३. समये स्मरणम्—

समये स्मरणं च प्रशस्तायाः स्मृतेस्तृतीयं लक्षणम्। तत्रापि प्रायश्चत्वार उपाया विद्वद्भिः प्रतिपादिताः सन्तिः।

तथा चोक्तम्—

काले स्मृतेरुपस्थानं तृतीयं स्मृतिलक्षणम्।
तत्र प्रायः समुद्दिष्टं निम्नहेतुचतुष्टयम् ॥१३॥
विचाराणां च सम्बन्धः, स्तथाभ्यासो, मनःस्थितिः।
तुरीय आत्मविश्वासो भवत्यत्रप्रयोजकः ॥१४॥

(क)—एषु चतुर्षूपायेषु विचाराणां सम्बन्धः प्रथम उपायः। काले स्मरणार्थं विचाराणां पारस्परिकः सम्बन्ध आवश्यको भवति। एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम् इति नियमात् द्वयोः सम्बद्धयोर्विषययोरेकस्य दर्शनात् स्मरणाद्वा तत्सम्बद्धो द्वितीयोऽपि विषयो झटि-

त्येव स्मृतिपथमवतरति । स चायं स्मृतिहेतुभूतः सम्बन्धो न बाह्यानामर्थानां सम्बन्धो भवति । किन्तु संस्काररूपेण मनः स्थितानां विचाराणां सम्बन्ध एव भवति । विचाराणां चायं सम्बन्धः—

१ सामीप्यात्, २ सादृश्यात्, ३ विरोधाच्च भवति ।

ख-द्वयोर्मित्रयो भूयः सहचारदर्शनेन तयोः सामीप्यसंवलितः संस्कारो मनस्यङ्कितो भवति । ततश्च तयोरेकतरस्य दर्शनादपरस्य संस्मरणं जायते । कस्यचिद् गृहस्य सम्मुखे पार्श्वे वा निम्बवृक्षोऽस्ति तद्वृक्षसंसृष्टं गृहं मनसि तथाङ्कितं भवति यथा तयोरन्यतरस्मरणेनापरस्य स्मरणं सुतरां सञ्जायते । इदं सामीप्यमपि न केवलं बाह्यानामर्थानां सामीप्यमात्रमभिप्रेतं किन्तु बुद्धिस्थसंस्कारसामीप्यमेवाभिप्रेतमस्ति । कदाचिद्बाह्यरूपेण समीपस्थयोरप्यर्थयोः सामीप्यं न मनस्यङ्कितं भवति । नगरेषु बहूनां नागरिकाणां गृहाः समीपस्था भवन्ति । किन्तु तेषां सामीप्यात् कस्यापि स्मरणं न भवति । दूरस्थयोरपि मित्रगृहयोः स्मरणं सुकरं भवति । योगदर्शने तु जातिशतेन दूरदेशतया वा कालभेदेन वा व्यवहितानामपि संस्कारसामीप्यमभ्युपगम्य 'जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्' इत्यम्नातम् । (योग० ४, ९)। द्वयोर्मार्जारजन्मनोः यदनुभूतं तयोर्जन्मव्यवधानेऽपि संस्काराः सामीप्यसमन्विता एव भवन्ति । अत एव यदि तृतीयमपि जन्म मार्जारयोनौ स्यात्तदा जन्मशतेनापि व्यवहितास्ते संस्काराः समीप्यादभिव्यक्तिमासादयन्ति । तदनुरूपां च स्मृतिं जनयन्ति । एवं विश्वयात्राप्रसङ्गे कयोश्चिद् दूरदेशयोरपि किञ्चिद्वस्तुद्वयं बुद्धौ तथा सन्निहितं जायते येन तयोरेकतरस्य स्मरणेनापरस्य स्मरणं स्वतः सञ्जायते । एवं कालव्यवधानेनानुभूतयोरपि द्वयोर्वस्तुनोः सामीप्यं मनस्यङ्कितं जायते संस्कारात्मना । सति चावसरे कालव्यवहितयोरपि सहभूतैव भवति स्मृतिः ।

यथा सामीप्यमिदं संस्कारोद्बोधकं स्मृतिजनकं च भवति एवं सादृश्यमपि साहचर्येण स्मृतिजनकं भवति । कश्चिद्विशिष्टः पदार्थः पूर्वमवलोकितः । तदनुरूपः संस्कारो मनसि सन्निहितोऽस्ति । ततश्च बहुकालानन्तरं तत्सदृशः कश्चिदपरः पदार्थो दृष्टिपथमवतरति चेत् सपद्येव तत्सदृशस्य पूर्वदृष्टस्य पदार्थस्य स्मृतिं जनयति । अत एव सामीप्यवत् सादृश्यमपि स्मृतिजनकं भवति ।

न च केवले सामीप्य-सादृश्ये एव काले स्मृतिप्रयोजके किन्तु विरोधोऽपि समये स्मृतिमुत्पादयति। अहि-नकुलयोः मूषक-मार्जारयोश्च शाश्वतिको विरोधोऽभ्युपगम्यते। तत्रैकस्य स्मरणे दर्शने वा काले परस्यापि स्मरणं जायते। रामरावणयोः कौरवपाण्डवयोश्च विरोध एव तयोरव्यवहितां स्मृतिं जनयति। तामव्यवहितां सहचरितां च स्मृतिमवलम्ब्यैव तयोः सहकीर्तनं भवति।

तथा च काले या स्मृतिः सञ्जायते तस्याः प्रयोजकं हेतुचतुष्टयमवधारितम्। तेषु चाद्यस्य विचारसम्बन्धस्य प्रयोजकं निमित्तमत्रोपदर्शितम्।

तथा चोक्तम्—

> काले स्मृतेरुपस्थानं तृतीयमङ्गमुच्यते।
> तत्र प्रायः समुद्दिष्टं निम्नहेतुचतुष्टयम् ॥१५॥
> विचाराणां च सम्बन्धः, अभ्यासो मनः स्थितिः।
> तुरीय आत्मविश्वासो भवत्यत्र प्रयोजकः ॥१६॥
> सामीप्यादथ सादृश्याद्विरोधाच्चापि वा क्वचित्।
> विचाराणान्तु सम्बन्धो जायते हेतुभिस्त्रिभिः ॥१७॥

(ग)–काले स्मृत्युपस्थानेऽङ्गभूता ये चत्वारो हेतवो निरूपितास्तेषु अभ्यासो द्वितीयो हेतुः। सामान्यतः सर्वेषामप्यनुभवानां संस्कारा मनोनिहतास्तिष्ठन्ति किन्तु ते सर्वे समानाकारेण स्मृतिजनका न भवन्ति। तेषु ये प्रबलाः संस्कारा भवन्ति त एव सादृश्यादिभिर्निमित्तैरुद्बोधिताः स्मृतिं जनयन्ति। उद्बोधकैर्निमित्तैः प्रबलानां संस्काराणां झटित्युद्बोधनं जायते न दुर्बलानां तथा। तस्मात् प्रबलाः संस्काराः सद्यः स्मृतिजनका भवन्ति। न तु दुर्बलास्तथा। संस्काराणां प्राबल्यं चाभ्यासाश्रितं भवति। सकृदनुभूतस्य सकृत् स्मृतस्य वा वस्तुनः संस्कारो जायते किन्तु स संस्कारस्तथा परिपुष्टो न भवति। यदा क्रियासमभिहारेण तस्यैव वस्तुनोऽभ्यासः क्रियते तदा प्रतिबारं सोऽभ्यासः संस्कारदार्ढ्यमादधाति। प्रतिदिनं च परिपुष्टो जायते संस्कारः। आवश्यकाणां विषयाणामभ्यासादनावश्यकाः संस्कारा अभिभूता जायन्ते। आवश्यकविषयकाश्च संस्काराः प्राबल्यमधिगच्छन्ति। अत एव ते स्मृतिविक्षेप-

करानानावश्यकान् संस्कारानभिभूयावश्यकविषयाणामेव स्मृतिं प्रयोजयन्ति अतोऽभ्यासोऽपि समये स्मृतिसम्पादको भवति।

(घ)—मनसः स्वस्था स्थितिरपि स्मरणेऽपरिहार्या भवति। यदि क्रोधशोकभयादिभिरुद्वेगैः खिन्नं भवति मनः, चिरम्यस्तानामपि विषयाणां स्मृतिर्न सम्भवति। प्रबला अपि संस्कारास्तादृशेऽवसरे निष्फला एव जायन्ते। अत एव बहुशः कृताभ्यासोऽपि बालकः कदाचित् परीक्षावसरे साध्वसवशात् सर्वं विस्मरति। नूतनः कश्चिद् व्याख्याता वा जनसमूहमवलोक्य साध्वसवशात् सुविचारितानपि भावान् विस्मरति आङ्गलदेशीयः प्रसिद्धो व्याख्याता श्री ग्लैडस्टनमहोदयो यदा प्रथमं रङ्गमञ्चे समायातः तदा स केवलं 'आई कन्सीव' इति पदद्वयमेव वारत्रयमुच्चारयितुं समर्थोऽभवत्, अन्यत् किञ्चदपि वक्तुं नापारयत्। 'कन्सीव' शब्दोऽयमाङ्गलभाषायां द्व्यर्थकः शब्दोऽस्ति। 'आई कन्सीव' इत्यस्य अहं विचारयामि इत्येकोऽर्थः अहं गर्भं धारयामि इति च द्वितीयोऽर्थः। यदा ग्लैडस्टनमहोदयः त्रिवारं 'आई कन्सीव' इत्युक्त्वा उपविष्टस्तदा केनापि परिहासपेशलेन जनेन तस्य पदस्य द्वितीयं अर्थं गृहीत्वा ग्लैडस्टन महोदयेन त्रिवारं गर्भधारणं कृतं न च किमप्युत्पादितमित्युक्त्वा तस्य परिहासः कृतः। अत एव स्मरणे मनसः साध्वसादिभिरहिता स्वस्था स्थितिरपि सुतरामपरिहार्या भवति।

(ङ)–समये स्मृतिजनने आत्मविश्वासोऽपि पञ्चमो हेतुर्भवति। यस्य स्वस्मृतिशक्तिविषये सन्देहो जायते तस्य सुस्मृतोऽपि विषयः समये स्मृतो न भवति। सन्देहवशाद्दोलायमानं तस्य चेतः यथार्थं वस्तु न स्मरति। सन्देहे समुत्पन्ने विचाराणां पूर्वाधारिताः सम्बन्धा विच्छिन्नाः सञ्जायन्ते। अत एव सुसम्बद्धा स्मृतिर्न भवति।

तथा चोक्तम्—

पौनः पुन्येन चाभ्यासो यदा पाठे विधीयते।
तदाभ्यासवशात् पाठः सदा भवति सुस्मृतः ॥१८॥
मनसः सम्प्रसादोऽपि स्मृतेर्नूनं प्रयोजकः।
भयात् क्रोधाच्च शोकाद्वा खिन्ने मनसि न स्मृतिः॥१६॥
आत्मविश्वासयुक्तत्वं स्मरणे च प्रयोजकम्।
सन्देहेऽतः समुत्पन्ने स्मरणं नैव सम्भवेत् ॥२०॥

**स्मृतेर्विषयः—**

ज्ञातविषयं ज्ञानं स्मृतिरुच्यते । पूर्वमेकदा यज् ज्ञानं जायते तस्य ज्ञानस्य संस्कारो मनस्यङ्कितो भवति । स संस्कार एवोद्बोधकैरुद्बुद्धः स्मृतिं जनयति । तत्र किं पूर्वज्ञानस्य स्मृतिर्भवति किं वा विषयस्येति प्रश्नोऽपि योगदर्शनस्य व्यासभाष्ये भाष्यकारेणोत्थापितोऽस्ति । तत्र च तद्विवेचयता भाष्यकारेणायं सिद्धान्तः स्थापितो यत्पूर्वविज्ञानाद् यः संस्कारो जायते स ग्राह्यग्रहणोभयात्मको भवति । ततश्चोभयात्मकात् संस्काराज्जायमाना स्मृतिरपि उभयात्मिकैव भवति । किन्तु तत्र ग्राह्यस्य विषयस्य प्राधान्यं भवति । बुद्धौ च ग्रहणस्य ज्ञानस्यैव प्राधान्यं भवति । तथा चात्र योगभाष्यम्—

'किं प्रत्ययस्य चित्तं स्मरति आहोस्विद्विषयस्येति । ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्तथाजातीयकं संस्कारमारभते । स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति । तत्र ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिः ।

सा च द्वयी । भावितस्मर्तव्या चाभावितस्मर्तव्या च । स्वप्ने भावितस्मर्तव्या, जाग्रत्समये त्वभावितस्मर्तव्येति । सर्वाश्च स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवाद् भवन्ति ।"

योगदर्शने १. ११ सूत्रस्य भाष्यम् ।

एवं योगदर्शने भावितस्मर्तव्या अभावितस्मर्तव्या चेति विषयस्य कल्पिताकल्पितत्वाभ्यां स्मृतिद्वैविध्यं दर्शितम् । यस्याःस्मृतेर्विषयः कल्पितो भवति न यथार्थः सा भावितस्मर्तव्या स्मृतिर्भवति । सा च स्वप्ने जायते । स्वप्नदृष्टाः सर्वेऽपि पदार्थाः कल्पिता एव भवन्ति न यथार्था इति तत्र जायमाना स्मृतिरपि कल्पितपदार्थविषया भवतीति सा भावितस्मर्तव्याभिधीयते । जाग्रत्काले च जायमाना स्मृतिर्यथार्थविषया भवतीति सा अभावितस्मर्तव्योच्यते ।

**पाठस्मरणस्य योग्यो विधिः—**

शिक्षायां पाठस्य स्मरणमत्यन्तमावश्यकं भवति । सर्वेऽपि बाला अध्यापकाश्च पाठस्य स्मरणे साग्रहा भवन्त्यतोऽत्र पाठस्मरणस्योचिता उपायाः संक्षेपतो निरूपणीयाः । तत्र प्रायः सप्तोपाया विद्वद्भिर्निरूपिताः सन्ति ।

तथा चोक्तम्—

> आसनं च मनोयोगः समयस्य विनिश्चयः ।
> विशिष्टानां च भागानामङ्कनं रक्तरेखया ॥ २१ ॥
>
> अनुच्छेदार्थसम्बन्धयोजनावृत्तिरस्य च ।
> मुख्यार्थलेखनं चैव सतीर्थ्यैर्मननं तथा ॥ २२ ॥
>
> पुस्तकस्मरणस्याथ सप्तांगमेतदुच्यते ।
> मनोभारातिरेकश्च तत्र हानिकरो मतः ॥ २३ ॥

एतेष्वंगेष्वासनमाद्यमङ्गम् । चित्तैग्र्ये आसनं प्रधानं भवति । अत एव शिथिलेनासनेनाध्ययनकाले न स्थातव्यम् । नापि शयानोऽधीयीत सावधानतया योग्येनासनेनोपविश्याधीयीत । प्राचीनेषु ग्रन्थेषु प्रातःकाले उदङ्मुखः कुशासने उपविष्टोऽधीयीत इत्येवं रूपमध्ययनविधानमुपलभ्यते । नव्ययुगे चासन्दिकायामुपविश्याध्ययनं विधेयमिति विधानं दृश्यते । आलस्यादिपरिहाराय मनसश्चैकाग्रतासम्पादनाय समुचितमासनमावश्यकं भवतीत्युभयोरप्यभिप्रायः ।

मनस एकाग्रता च पाठस्मरणेऽत्यन्तमावश्यकमङ्गं भवति । योगदर्शनेऽपि योगांगेषु पूर्वमासनं ततश्च धारणा ध्यानंचोपदिष्टमङ्गद्वयम् । ततः समुचितमासनमवलम्ब्यैव ध्यानमेकाग्रं संजायते । ध्यानैकाग्रतायां संजातायामेव पाठस्य सम्यक् स्मरणं सम्भवति ।

समयस्य निश्चितो विभागोऽपि स्मरणेऽत्यन्तमुपयुक्तो भवति । समयविभागमनुसृत्याधीयाना बहूनामपि विषयाणां पाठं सम्यक्तया स्मरन्ति न चोद्वेगं व्रजन्ति । ये पुनः समयविभागमनपेक्ष्यैकमेव विषयं पुस्तकं वाहर्निशं पठन्ति तेषामन्ये विषया उपेक्षिता एव जायन्ते । ततश्च सर्वेषां विषयाणां यथावदभ्यासस्तेषां न जायते । सा च हानिप्रदा पद्धतिः । अतो बालैः सर्वदा समयविभागं विनिश्चित्यैवाभ्यासो विधेयः।

पुस्तकस्याध्ययनकाले ये विशिष्टा महत्वपूर्णाश्च भागा आयान्ति ते रक्तरेखयांकनीयाः। पुनरावृत्तिकाले रेखादर्शनेनैव विशिष्टाभागाःप्रतीयन्ते तेषामनुसन्धानं कर्तव्यं न भवति । प्राय एकस्मिन् पाठे एकस्मिन्ननुच्छेदे वा किमपि विशिष्टं तत्त्वं प्रतिपादितं भवति । तत्र रेखांकनेन दृष्टिपात-

मात्रेणैव सर्वस्य पाठस्य सारांशो बुद्धिस्थो जायते। अत एव रेखांकन-पद्धतिरियं बहुलं प्रचलिता हितावहा च।

पाठस्यानुच्छेदानां पारस्परिकः सम्बन्धोऽपि पाठस्मरणेऽवधेयो भवति। पौर्वापर्यपरिज्ञानं विना पाठस्य सम्यगावृत्तिः कर्तुं न शक्यते। अतोऽनुच्छेदानामर्थसम्बन्धोऽवश्यमनुसन्धेयो भवति।

पाठस्य समाप्तौ पुस्तकं पिधाय मौखिकरूपेणैव स्मृतानां भागाना-मावृत्तिर्विधेया। यत्र क्वापि विस्मृति-र्जायेत तत्र पुस्तकावलोकनेन संशोधनं च कार्यम्। एवमावृत्या पाठस्य साधुतया स्मरणं जायते। बालकस्य चेतश्चात्मन्यप्रत्ययं न भजते। यत् किमप्यनेन विधिना स्मरति तत्र तस्यात्मविश्वासोऽपि भवति।

अधीतस्य पाठस्य मुख्यांशानां लेखनमपि तस्य सम्यक् स्मरणे उपकारकं भवति। लेखनेन सर्वोऽप्यर्थः साधुतया बुद्धिस्थो जायते। तदभिव्यक्तिप्रकारश्च ज्ञायते अत एव विद्यालयेषु लेखने विशेषतोऽवधानं दीयते।

एवं सब्रह्मचारिभिः सह पाठस्य मननमपि पाठस्मरणे महदुप-कारकं भवति। ये विषयाः स्वयं स्मरणेन स्पष्टा न भवन्ति ते सब्रह्मचा-रिभिः सह मननेन विस्पष्टतामुपयान्ति। न केवलं विद्यार्थिनामेव मनन मुपकारकं किन्तु कदाचिच्छिष्यैः सह संवादेन गुरूणामपि महानुपकारः संजायते। अस्पष्टाः सन्दिग्धाश्च विषया गुरु-शिष्य-सब्रह्मचारिभिः सह संवादेन हस्तामलकवद्विस्पष्टतामुपयान्ति। किञ्च पारस्परिकेन संवादेन बालेषु विचाराभिव्यक्तिसामर्थ्यमुत्पद्यते। यो बालकः स्वयं स्मरति पाठं अन्यैः सह संवादं च न करोति तस्य विचाराभिव्यक्तिसामर्थ्यं न विक-सति।

## विस्मृतिः—

स्मृतिप्रसंगेन तद्विपरीता विस्मृतिरपि विवेचनमर्हति। बहवो बालका विद्यालयेषु स्वपाठं स्मृत्वा नागच्छन्ति। स्मृतमपि वा पाठं विस्मरन्ति। तदर्थं च ताडनादिकं दण्डं प्राप्नुवन्ति। किन्तु दण्डविधानेन तेषां कश्चिदपि सुधारो न भवति। वस्तुतस्तु निदानं परिज्ञाय यदि चिकित्साारभ्यते तदैव चिकित्सायाः फलं भवत्यन्यथा निदानेऽपरिज्ञाते

दीयमानं बहु मूल्यमप्यौषधं व्यर्थमेव जायते। एवं यदि विस्मृतिकारणं विज्ञायाध्यापकस्तदुचितं प्रतीकारमारभते तदा तत्र साफल्यमधिगच्छति नान्यथा। अत एव रोगनिदानवत् विस्मृतिनिदानमपि सम्यग्विज्ञाय यथोचिते प्रतीकारारम्भे साफल्यं भवति। तस्मादत्र विस्मृतिनिदानान्यपि विवेचनीयानि भवन्ति। तानि च विस्मृतिनिदानानि सप्तविधानि विद्वद्भिर्निर्धारितानि सन्ति।

तथा चोक्तम्—

> विस्मरन्ति कदाचित्तु प्रस्मरन्तोऽपि बालकाः।
> ताडनाक्रोशनाभ्यां च न सुधारोऽथ दृश्यते॥ २४॥
> तत्र विस्मृतिहेतूनां चिन्तयित्वा निवारणम्।
> सद्यः फलति नान्यत्तु ताडनं न महौषधम्॥ २५॥
> न सम्यक् संस्मृतः पाठः शुद्धो वाऽबुद्धिपूर्वकम्।
> अनावृत्तोऽथ सन्देहसंयुतो यः स्मृतो भवेत्॥ २६॥
> विषये रुच्यभावश्च न च सम्यग्विचारणम्।
> स्मरणस्य तथा काले भयशोकादिसम्भवः॥ २७॥
> प्रायो भवन्ति सप्तैते लोके विस्मृतिहेतवः।
> तद्विविच्य यथायोग्या विधेयात्र प्रतिक्रिया॥ २८॥

एवमेते विस्मृतिहेतवो विज्ञैरवधारिताः। तत्र यथायोग्यः प्रतीकारोऽपि निर्दिष्टः। तथाहि यदा पाठस्य सम्यक् स्मरणाभावात्तद्विस्मृतिर्जायते तदा सम्यक् स्मरणे बाला यथा सोत्साहा भवेयुस्तथा प्रयतितव्यम्। यो हि पाठो रुचिकरो न भवति तत्र प्रायो बालानां स्मरणे औदासीन्यं जायते। अतो बालानामरुचिमनुमाय तन्निवारणाय पाठमभिनवेन रुचिकरेण प्रकारेणाध्याप्य तत्र बालानां रुचिमुत्पादयेदध्यापकः। रुचेरुत्पादनप्रकाराश्च पूर्वं निर्दिष्टाः। तत्राभिनवया भङ्ग्याध्यापनेन विषये नूतनतापादनमेव मुख्यं साधनम्।

अत उक्तम्—

> न सम्यक् संस्मृतः पाठो रुच्यभावे तु जायते।
> अत उक्तैरुपायैस्तु रुचिः कार्या विशेषतः॥ २९॥

अबुद्धिपूर्वकं पाठस्य घोषणमपि द्वितीयं विस्मृतिकारणं भवति। तन्निवारणाय बाला सदैव पूर्वापरसम्बन्धमर्थं च विज्ञाय घोषणे प्रवर्तनीयाः। एवं यदा प्रसङ्गादिकं सम्यग्विज्ञाय पाठो व्याख्यानादिकं वा स्त्रियते तद् काले विस्मृतिर्न जायते।

तथा चोक्तम्—

प्रायो विस्मियते पाठः संघुष्टोऽबुद्धिपूर्वकम्।
सभामध्ये च व्याख्यानं विस्मृतं हास्यकारकम् ॥ ३० ॥

यत्तु भावादि विज्ञाय घुष्यते तन्न विस्मृतम्।
शिक्षणीयास्ततो बाला घोषणे बुद्धिपूर्वके ॥ ३१ ॥

सुस्मृतस्यापि पाठस्यानावृत्तिस्तृतीयं विस्मृतिनिमित्तं भवति आवृत्तिमन्तरा सम्यगधीतः सुस्मृतश्चापि पाठः समये स्मृतिपथं नोपतिष्ठते। अत एव पाठस्य नियमेनावृत्तिरवश्यं कर्तव्या। पाठावृत्तिकाले च केवलं वाचनमात्रं न फलावहं किन्तु पुस्तकं पिधाय मानसेन रूपेणापि तस्यावृत्तिः करणीया। इदं च द्रष्टव्यं यदेतावान् पाठो मया स्मृतः अयं भागोऽवशिष्यते। एवमवधानपूर्विकावृत्तिः पाठस्मरणे लाभदायिका भवति। तथा चोक्तम्—

अनावृत्तिवशाद्या तु विस्मृतिर्जायते क्वचित्।
तत्रावृत्तिर्विचार्यार्थं मता योग्या प्रतिक्रिया ॥ ३२ ॥

एवं सन्देहोऽपि विस्मृतिनिमित्ततां याति। यदि स्मरणकाले कश्चित् सन्देहो जायते तदा स्मरणकाले तस्य विषयस्य सम्यक् स्मृतिर्न सम्भवति। अत एव यदा पाठस्मरणं क्रियते तदा सर्वथा सन्देहाभावस्तत्रावश्यकः। एवमन्यत्रापि विस्मृतिनिदानं सम्यग्विज्ञाय यथोचितः प्रतीकारः कर्तव्यो भवति।

## स्मृतिशक्तेर्वृद्धिः—

यथा शारीरिकाद् व्यायामाच्छारीरिकी शक्तिर्वर्धते एवं मानसाद् व्यायामान्मानसी स्मृतिशक्तिरभिवर्धत इति बुद्ध्यैव प्रत्ने युगे शिक्षायां घोषणस्य प्राधान्यमासीत्। किंच तदानीं मुद्रणयन्त्राण-भ

वात् पुस्तकानां च विरलत्वाद् सर्वस्यापि विषयस्य कण्ठस्थीकरणमेव विद्याधिगमस्य मुख्यं साधनमासीत्। किन्तु नव्या मनोवैज्ञानिकास्तां घोषणपद्धतिं नाभिनन्दन्ति। तत्स्थाने ते सम्यग् विचार्यार्थावधारणमेव साधु मन्यते। वस्तुतस्तु मध्यमो मार्गोऽत्रावलम्बनीयः। कण्ठस्थीकरणमपि स्वस्थाने आवश्यकमपरिहार्यं च। अर्थज्ञानमपि च स्वस्थाने महदुपकारकम्। किन्तु यत्र कण्ठस्थीकरणस्य क्षेत्रं तत्रार्थज्ञानमात्रमनुपयुक्तं भवति। यत्र चार्थज्ञानस्य क्षेत्रं तत्र कण्ठस्थीकरणमनतिप्रयोजकं भवति। तस्मादुभयोरपि यथायोग्यो विनियोगो विधेयः।

तद्द्यमत्र संक्षेपः—

पाठसंघोषणं चैव अर्थज्ञानं तथैव च।<br>
स्मरणस्यात्र दृश्येते द्वौ मार्गौ लोकविश्रुतौ ॥३३॥

बाल्ये संघोषणस्यैव मार्गः प्रत्नैः प्रशस्यते।<br>
अर्थज्ञानात्मकः पन्थाः प्रायः प्रौढेषु शस्यते ॥३४॥

पाठसंघोषणात्मा तु विद्यामार्गः पुरातनः।<br>
विज्ञैर्विनिन्द्यते नव्यै-रर्थज्ञानं च कीर्त्यते ॥३५॥

किन्तु कालस्य भेदात्तु प्रयोग उभयोर्भवेत्।<br>
सुकल्याणाय लोकस्य गर्ह्यः कश्चिन्न सम्मतः ॥३६॥

## प्रश्नाः

१—स्मृतेः किं लक्षणं? मानवजीवने च तस्याः क उपयोगः?

२—प्रशस्तायाः स्मृतेः कानि लक्षणानि? विस्मरणं कस्मिन्नंशे सुस्मृतेर्लक्षणं भवति?

३—स्मृतेः कान्यङ्गानि भवन्ति? विचाराणां सम्बन्धस्य च कानि साधनानि?

४—विस्मृतेः कानि निदानानि कश्च तत्र प्रतीकारोपायः?

सप्तदशः परिच्छेदः

# कल्पना

## कल्पनाया उपयोगः—

मनोव्यापाराणां ज्ञानपक्षस्य संवेदन प्रत्यक्ष-स्मृत्यात्मकेषु त्रिष्वंगेषु निरूपितेषु तुरीयस्य कल्पनात्मकस्याङ्गस्यविवेचनं क्रमप्राप्तमितीह तदारभ्यते साहित्यस्य समाजस्य चोत्कर्षाधायकः,कलायाश्च जीवनाधायको मानसो व्यापारविशेषः कल्पना। साहित्ये समाजे, कलायां वा या काचिदप्य-भिनवा कृतिरुत्पद्यते सा स्वरूपलाभात्पूर्वं निर्मातुः कल्पनारूपेण तस्यान्तः करणे परिस्फुरति। भाविनोऽर्थस्य मानसी प्रतिमा कल्पनापदवाच्या भवति। यदा कल्पना समुत्कृष्टा भवति तदा तामनुसृत्य निर्मिता कृतिरपि मनोहारिणी जायते। यदा च कल्पनात्मिका मानसी प्रतिमैव निकृष्टा भवति तदा तदाश्रिताभिनवा रचनापि तदनुसारिण्येव भवति। उत्कृष्टश्चित्रकारः स्वकल्पनासाहाय्येनैवाकर्षकं चित्रं निर्माति। सुकवीनां कल्पनैव तेषां काव्ये जीवनाधानं करोति। महात्मनां समाजसुधारकाणां च कल्पनैवाभिनवस्य समाजस्य रचनां प्रयोजयति। एवं यत्किमपि कृतिसाध्यं नूतनं वस्तु जगति दृश्यते तस्य कल्पनैवाद्यं मूलम्।

## कल्पना-अनुभव-स्मृतीनां भेदः—

सर्वापि कल्पना प्रायोऽनुभवापेक्षिणी भवति, सर्वात्मना अनुभ-वाश्रिता न भवति। पूर्वानुभवमाधारीकृत्य कल्पना ततः सर्वथा भिन्नं नूतनं वस्तु सृजति। अनुभवः, स्मृतिः, कल्पना चैतत् त्रयं परस्परसम्बद्धमपि वस्तुतो भिन्नं भवति।

## कल्पनायाः स्मृत्यनुभवाभ्यां भेदः—

सर्वतः प्रागिन्द्रियार्थसन्निकर्षान्निर्विकल्पकानान्तरं सविकल्पकं ज्ञानमुत्पद्यते। तदेव सविकल्पकं ज्ञानमनुभवपदवाच्यं भवति। तच्च सविकल्पकमर्थे विद्यमाने भवति नाविद्यमानेऽर्थे। पूर्वानुभूतस्य

पदार्थस्यानुपस्थितौ संस्कारसामर्थ्यात्तस्य मानसी प्रतिमा प्रतीयते। सा च स्मृतिपदवाच्या भवति। अनुभवोऽर्थाश्रित एव नार्थमन्तरा कदाचिदपि सम्भवति। स्मृतिश्चार्थोपस्थितिं नापेक्षते। अविद्यमानेऽप्यर्थे संस्कारवशात्तस्य स्मृतिर्जायते। अनुभवकालेऽर्थस्य प्रतिमा स्पष्टा भवति। किन्तु स्मृतिकालेऽर्थस्य प्रतिमा तथा विस्पष्टा न भवति। अनुभवाश्रिता स्मृतिरिति मानसी प्रतिमाप्यनुभवाश्रिता भवति। एवं स्मृतिरनुभवाद् भिद्यते। प्रतिमा च प्रत्ययाद् भिद्यते।

यथा च प्रतिमा प्रत्ययाद् भिद्यते एवं कल्पनाया अपि भिन्नैव सा। प्रतिमा स्मृतिर्वा प्रत्ययादुत्पद्यते कल्पना च तदनन्तरभाविनी भवति। यदाकारोऽनुभवस्तदाकारैव प्रतिमा स्मृतिमुपतिष्ठते। अनुभूताद्धिकस्य स्मृतिर्न सम्भवति। सा च स्मृतिरनुभववद्देशाकालावच्छिन्ना भवति। किन्तु कल्पना न देशकालाद्यवच्छिन्ना नापि पूर्वप्रत्ययसम्बन्धापेक्षिणी। चन्द्रज्योत्स्ना हि सुशीतला आल्हाददायिनी च भवति किन्तु कविकल्पनायां सा कदाचित् वन्हिवत्सन्तापकारिणी अपि भवति। तथा च कविकुलशिरोमणिना कालिदासेनाभिज्ञानशाकुन्तले—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्त्वमपि कुसुमबाणान् वज्रसारीकरोषि॥

इति चन्द्रस्याग्निवर्षकत्वं कुसुमबाणानां च व्रजसारत्वमुद्घोषितम्। किंच स्मृतिप्रतिमायां पूर्वानुभवावृत्तिरेव प्रतिमारूपेण भवति न नूतनोत्पत्तिः किन्तु कल्पनायामभिनवाङ्गानां योजनान्नूतनैव सृष्टिर्विरचिता भवति। प्रतिमा केवलं भूतकालसम्बद्धा भवति कल्पना चातीतनागतसम्बद्धा भवतीति ततो भिद्यते।

तथा चोक्तम्—

प्रत्ययः प्रतिमा चापि कल्पना चेति च त्रयम्।
यथाक्रमं समुत्पन्नं हेतुः पूर्वः परस्य च॥ १॥

प्रत्ययस्त्वर्थसान्निध्ये ज्ञानं यत् सविकल्पकम्।
इन्द्रियाश्रित एवासावर्थाभावे न जायते॥ २॥

प्रत्ययाहितसंस्कारैर्मानसी प्रतिमा स्मृतिः।
अर्थाभावे समुत्पन्ना इन्द्रियार्थानपेक्षिणी॥ ३॥

कल्पना प्रतिमोद्भूता देशकालानियन्त्रिता।
अतीतानागतैरर्थैः सम्बन्धाच्चात्र नव्यता ॥ ४ ॥

## कल्पना विभागः—

कल्पनाशब्दस्य द्विविधः प्रयोगो लोके दृश्यते। सङ्कीर्णो विस्तृतश्च। तत्र सङ्कीर्णेऽर्थे कल्पनाशब्दो स्मृतिपर्यायो भवति। कल्पनायाः सङ्कीर्णमर्थमनुसृत्य पूर्वानुभूतस्यार्थस्य तदभावेऽप्यनुचिन्तनं कल्पनेति कल्पनालक्षणम्। तदनुसारं चानुभूतस्यार्थस्य पुनरावृत्त्यात्मिकैव कल्पनेति सा स्मृतिरूपैव, न ततो व्यतिरिक्ता। तथा चायं कल्पनायाः पुनरावृत्त्यात्मकः प्रथमो भेदः। पूर्वानुभवमाश्रित्याभिनवसृष्टिजनको मानसो व्यापारः कल्पनेति च कल्पनायाः द्वितीयं लक्षणम्। तदनुसारं च नूतनसृष्टिनिर्माणं कल्पनाया मुख्यं कार्यमिति कल्पनेयं रचनात्मिका कल्पनाभिधीयते। एवं पुनरावृत्तिरूपा रचनात्मिका चेति कल्पनायाः मुख्यं भेदद्वयं भवति। रचनात्मिकापि कल्पना पुनर्व्यावहारिकी स्वतन्त्रा चेति द्विविधा भवति। व्यवहारिकी कल्पना च विचाररूपा क्रियारूपा चेति द्विविधा। एवं स्वतन्त्रा सरसा वा कल्पनापि कलात्मिका तरङ्गात्मिका चेति द्विविधा भवति। ततश्चायं कल्पनाया विभागोऽधोऽङ्कितेन चित्रेण स्फुटीभवति—

तत्र १ पुनरावृत्तिरूपाद्या कल्पना प्रायः स्मृतिरूपैव भवति। अनुभूतो हि पदार्थो यथावदत्र मानसपटलेऽङ्कितो भवति। इयं च

कल्पना स्मृतेरावश्यकमङ्गं भवति। अनयोरेतावानेव सूक्ष्मो भेदो यत्पुनरावृत्तिकल्पनायां देशकालयोः स्मरणमपरिहार्यं न भवति, यावत् स्मृतिज्ञाने देशकालयोरपि स्मरणमावश्यकं भवति। पुनरावृत्तिकल्पनायामेव पूर्वानुभवस्य लाभोऽनुभूयते।

२—द्वितीया रचनात्मिका कल्पनैव वस्तुतः कल्पना पदवाच्यतामर्हति। सा हि पूर्वानुभवसहकारेण नूतनां सृष्टिं रचयति। सा पूर्वानुभवसापेक्षापि ततः स्वतन्त्रा भवति। सर्वस्यापि कृतिसाध्यस्य कार्यस्येयं रचनात्मिका कल्पनैवाद्यं मूलम्। सा च व्यवहारिकी सरसा चेति द्विविधा भवति। व्यवहारिकी कल्पना यथार्था यथार्थसम्बद्धा च भवति। स्वतन्त्रा सरसा वा कल्पना कल्पनैव भवति। न यथार्था यथार्थसम्बद्धा वा। कश्चिच्छिल्पी यदा कस्यापि भवनादेर्निर्माणं चिकीर्षति तदा स्वभवनस्य मानसीं प्रतिमामेव पूर्वं निर्माति। ततश्च मनःपटलाङ्कितां तां प्रतिमां चित्राङ्कितां विदधाति ततश्चेष्टकाद्युपकरणैस्तां मूर्तरूपेण निर्माति। इयं व्यवहारिकी कल्पना यथार्था भवति। अन्यथा मूर्तरूपेणास्याः परिणामो न भवेत्। यस्येयं व्यवहारात्मिका कल्पना यथार्था समुत्कृष्टा च भवति तस्यैव जीवनं सफलं भवति। यः सेनानी व्यावहारिकीं कल्पनामाश्रित्यैवाभियानमारभते स साफल्यमाप्नोति नान्यः।

स्वतन्त्रा तु कल्पना तथा यथार्थानुगामिनी न भवति यथ व्यावहारिकी कल्पना भवति। कवीनां कल्पना प्रायः स्वतन्त्रा कल्पना भवति। 'निरंकुशाः कवयः' इत्यभियुक्तवचनात् कवयः स्वसृष्टिनिर्माणे सर्वथैव स्वतन्त्रा भवन्ति।

अत एव ध्वनिकारेणानन्दवर्धनेनोक्तम्—

> अपारे काव्यसंसारे कविरेकः प्रजापतिः।
> यथास्मै रोचते विश्व तथा विपरिवर्त्तते ॥

अत एव च—

> नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
> नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥

इति व\ता काव्यप्रकारेणापि ब्रह्मणो निर्माणादपि कविवाङ्निर्मितेर्वैशिष्ट्यं प्रतिपादितम्। काशब्रह्मणो निर्मितिर्हि नियतिकृतैर्नियमैर्नियन्त्रिता सुखदुःखमोहात्मिका,षड्रसा च भवति। किन्तु कविरचना नियतिकृतैर्नियमैः स्वतन्त्रा केवलमानन्दात्मिका, शृङ्गारादिभिः काव्याभिमतैर्नवरसैर्मनोहारिणी भवति। अत एव ब्रह्मणो निर्माणादप्युत्कृष्टां निर्मितिमादधती कवेर्भारती जयति।

इयं स्वतन्त्रा कल्पना सरसा कल्पना ललिता कल्पना चाप्युच्यते। सापि पुनः कलात्मिका तरङ्गात्मिका चेति द्विविधा भवति। सरसा कल्पनैव कविमार्गे प्रतिभापदवाच्या भवति। कलात्मिका कल्पना स्वतन्त्रापि तथा स्वतन्त्रा न भवति यथा तरङ्गात्मिका कल्पना स्वतन्त्रा भवति। कलात्मिका कल्पना वस्तुवृत्तानुरोधात्प्रवर्तते किन्तु तरङ्गमयी कल्पना तु निरर्गला संप्रवर्तते। यत्र तरङ्गात्मिकायाः कल्पनायाः प्राबल्यं भवति ते जनाः स्वप्नद्रष्टारो भवन्ति। यथा स्वप्नलोके सर्वमपि कार्यजातं सङ्कल्पमात्रसाध्यं भवति तथा तरङ्गात्मिकायां कल्पनायामपि सर्वं सम्भवमसम्भवं वा कार्यजातं सुकरं सङ्कल्पसाध्यं च भवति। अस्यास्तरङ्गात्मिकायाःकल्पनाया अपि जीवने महानुपयोगो भवति। बालकेष्वस्याःकल्पनायाःप्राबल्यं भवति। तेषां क्रीडादिरूपः सर्वोऽपि व्यवहारस्तत्साध्य एव भवति। बालानां प्रौढानां चेयं तरङ्गात्मिका सरसा कल्पना तेषां मनोरञ्जने सरसत्वापादने चात्यन्तमुपकरोति। किन्तु ये त्वत्रातिमात्रं प्रवहन्ति ते प्रायो लोके हास्यतामुपयान्ति।

तथा चायमत्र संक्षेपः—

पदार्थेऽविद्यमानेऽपि तद्विषयानुचिन्तनम्।
कल्पना, सा तु संकीर्णा स्मृतिस्तत्र समागता ॥ ५ ॥

पूर्वानुभवमाश्रित्य नवा सृष्टिर्विचारगा।
विधीयते यया सापि कल्पना मानसी क्रिया ॥ ६ ॥

कल्पनैवं द्विधा प्रोक्ता लक्षणद्वययोगतः।
पुनरावृत्तिरूपाद्या द्वितीया रचनात्मिका ॥ ७ ॥

व्यवहारप्रधाना च सरसा ललितात्मिका ।
द्विविधा सापि विज्ञेया कल्पना रचनात्मिका ॥ ८ ॥

व्यवहारप्रधानापि कल्पना द्विविधा मता ।
एका विचाररूपैव परा चैव क्रियात्मिका ॥ ९ ॥

मनस्तरङ्गरूपैका कलासम्बन्धिनी परा ।
सरसा कल्पना चापि संविभक्ता बुधैर्द्विधा ॥ १० ॥

## कल्पनाया इन्द्रियाश्रिता भेदाः--

अनुभवसहकारेण कल्पना स्वरूपं लभत इति तदनुगता अपि कल्पनायाः प्रकारान्तरेण भेदाः क्रियन्ते । प्राणिनां पञ्च ज्ञानेन्द्रियाण्येवानुभवसाधनानि सन्तीति तदाश्रितः पञ्चविधोऽनुभवविभागो भवति । एवमनुभवभेदानुसारं कल्पनाया अपि १ रूपकल्पना, २ रसकल्पना, ३ गन्धकल्पना, ४ स्पर्शकल्पना, ५ शब्दकल्पना चेति पञ्चविधो विभागो भवति । तत्र चित्रकारेषु रूपकल्पनायाः प्राधान्यं भवति । ते हि स्वरूपकल्पनावशाल्लोकोतरं रूपं चित्रयन्ति । एवं गायकेषु प्रायो ध्वनिकल्पनायाः प्राधान्यं भवति । ततस्ते लोकोत्तरं स्वरसंयोगं ध्वनिपरिणामं च श्रावयन्ति । एवं वस्त्रव्यवसायिषु स्पर्शकल्पनायाः, गान्धिकेषु च गन्धकल्पायाः पाटवमुपलभ्यते । पञ्चज्ञानेन्द्रियाश्रिताः पञ्चविधाः कल्पना यथा भवन्ति तथैव क्रियाकल्पनात्मकः षष्ठोऽपि कल्पनाभेदो भवति । स च क्रियारूपेणाभिव्यक्ति लभते ।

तथा चोक्तम्—

ज्ञानेन्द्रियैः समुत्पन्ने प्रत्यये संश्रिता यतः ।
पंचत्वादिन्द्रियार्थानां कल्पना पञ्चधा मता ॥११॥

रूपस्य कल्पनात्वेका द्वितीया रसकल्पना ।
तृतीया कल्पना गन्धे तुरीया शब्दगा तथा ॥१२॥

पञ्चमी स्पर्शसम्बद्धा इन्द्रियार्थानुसारिणी ।
कल्पनैवं भवेन्नूनं संविभक्ता तु पञ्चधा ॥१३॥

कस्यापि क्वापि वैशिष्ट्यं कल्पने दृश्यतेऽधिकम्।
तन्मूलं च भवत्येषां वैचक्षण्यं कलासु च ॥१४॥

चित्रकारो मतस्तत्र प्रवीणो रूपकल्पने।
गायकोऽथ भवेच्छ्रेष्ठस्तथैव ध्वनिकल्पने ॥ १५ ॥

वस्त्रव्यापारिणश्चैव पटवः स्पर्शकल्पने।
गान्धिकाश्चतुराः प्रोक्ता गन्धस्य कल्पने तथा ॥ १६ ॥

सूदानां च संदृष्टा विशिष्टा रसकल्पना।
एवं च व्यक्तिभेदेन वैशिष्ट्यं कल्पनागतम् ॥१७॥

**कल्पनायाःप्रत्यक्षाद् भेदः—**

प्रत्यक्षानुभवश्चैव स्मृतिः संस्कारजा तथा।
ज्ञानं द्विविधमाम्नातं कल्पना भिद्यते ततः ॥१८॥

प्रत्यक्षानुभवस्तत्र इन्द्रियार्थाभिषङ्गजः।
कल्पना भिद्यते तस्मात् सम्बन्धानपेक्षिणी ॥१९॥

प्रत्यक्षानुभवः स्पष्टः, सम्पूर्णः सुस्थिरस्तथा।
अविस्पष्टा तथाऽपूर्णा कल्पना चञ्चला तथा ॥ २० ॥

अनुभवाश्रयसाम्येऽपि कल्पना भिद्यते स्मृतेः।
स्मृतिर्भूतप्रधाना हि कल्पनानागताश्रिता ॥ २१ ॥

## प्रश्नाः

१—स्मृतिकल्पनयोर्भेदः सोदाहरणं प्रदर्शनीयः ?
२—प्रत्यक्षकल्पनयोश्च भेदः सोदाहरणं प्रदर्शनीयः।
३—कल्पना कतिविधा भवति ?
४—रचनात्मिकायाः कल्पनायाः क उपयोगः ?
५—कलात्मिकायाः कल्पनायाः क उपयोगः ?

## अष्टादशः परिच्छेदः

# विचारः

### विचारस्योपयोगः—

मनोव्यापाराणां पञ्चावयवे ज्ञानपक्षे विचारात्मकः पञ्चमो भागः प्राप्तावसरः। विचारो हि मनोव्यपाराणां श्रेष्ठतमो व्यापारः प्रधानतमश्च। अत्रैव सर्वेषां मनोव्यापाराणां पर्यवसानं भवति। प्रत्यक्षीकरण-स्मृति-कल्पनादय एतत्परतयैवोपादीयन्ते। विचारे साहाय्यप्रदानमेवैतेषां परमं प्रयोजनम्। 'मननान्मनुष्य' इति मननात्मको विचार एव मानवानां पश्वादिभ्यो व्यतिरेकनिदानम्। 'मानवो हि विवेकशीलो जन्तुः' इति वदता यूनानदेशीयेन प्रसिद्धतमेन दार्शनिकेन अरस्तूमहोदयेनापि विवेकात्मा परिनिष्ठितो विचार एव मानवानां पश्वादिभ्यो वैशिष्ट्याधायक इति प्रतिपादितम्। विचारशक्तिबलेनैव मनुष्येण सर्वेष्ववरेषु प्राणिषु स्वाधिपत्यं स्थापितम्। विचारसामर्थ्येनैव मानवाः स्वपूर्वानुभवानां सजातीयानां चाप्यनुभवानां कार्येपूपयोगं कर्तुं समर्था भवन्ति न पश्वादयः। कस्यापि कार्यस्यारम्भे मनुष्यः स्वपूर्वानुभवान् स्मरति, तस्य वर्तमानेनानुभवेन सह साधर्म्यं वैधर्म्यं च विवेचयति। तदनुसारं च विधीयमानस्य कार्यस्य परिणाममनुमिनोति। ततश्च तत्र प्रवर्तते, ततो निवर्तते वा। यो हि पूर्वानुभवबलात्परिणामानुमाने विचक्षणो भवति स एव कार्येषु साफल्यमधिगच्छति। ये हि जनाः परिणामविचारमन्तरैव कार्येषु प्रवर्तन्ते ते प्रायः पश्चात्तापभाजोऽपि भवन्त्यविवेकशीलाश्चाभिधीयन्ते। आवेशवशादविवेकपुरस्सरमेव प्रवर्तमानानां व्यवहाराः पशुव्यवहारकल्पा एव भवन्ति न मानवोचिताः। विचार एव वस्तुत मानवत्वनिकषो विद्यते।

### विचारस्य प्रक्रिया—

वर्तमानसमस्यानां समाधाने पूर्वानुभवस्योपयोगानुसन्धानपरो मानसो व्यापारविशेषो विचारपदवाच्यो भवति। द्विविधा हि समस्याः

प्रायो लोकेऽनुभूयन्ते। काश्चिद् व्यवहारविषयिण्यः, काश्चिच्च ज्ञान-विषयिण्यः। यदा व्यवहारविषयिणी ज्ञानविषयिणी वा काचित् समस्या समुपस्थिता भवति तदा तत्समाधानाय पुरुषः प्रवर्तते। समस्यासमाधानमेव तदा तस्याद्यं लक्ष्यं भवति। लक्ष्यस्योपस्थितिरेव विचारस्य प्रवर्तिका भवति। तस्माद्विचारप्रक्रियायां लक्ष्यस्योदयः प्रथमो भागः। ततश्च लक्ष्यप्राप्त्यर्थं प्रयत्नं प्रारभते। अयं यत्नारम्भो विचारप्रक्रियाया द्वितीयोंऽशः। अस्मिन् प्रारभ्यमाणे प्रयत्ने सर्वतः प्रागवसरोचितानां पूर्वानुभवानां स्मरणं भवति। सोऽयं पूर्वानुभवस्मरणात्मको विचार-प्रक्रियायास्तृतीयो भागः। ततश्च पूर्वानुभवानां प्रकृते उपयोगश्चतुर्थो भागः। सर्वेष्वपि व्यापारेषु मानसमभिभाषणमनवरतं प्रवर्तते इति मानसं भाषणमपि विचारप्रक्रियायाः पञ्चमङ्गं भवति। ततश्च विचारप्रक्रियायाः पञ्च मुख्यान्यङ्गानि भवन्ति। मानवा हि विचारपूर्वकं प्रवर्तन्त इति तेषामयं पञ्चाङ्गको व्यवहारोऽनिवार्य एव भवति। पशूनां विचारशक्तिस्तथा न भवतीति तेऽबुद्धिपूर्वकमेव प्रवर्तन्ते। तेषां सर्वाणि कार्याणि स्खलनसंशोधनात्मकानि भवन्ति। मानवश्च कार्या-रम्भात्पूर्वमेव सम्भाव्यमानानि स्खलितानि चिन्तयति कल्पनयैव च तन्निवारणोपायांश्चापि चिन्तयति ततश्च प्रवर्तते। वाह्यानुष्ठानात् पूर्वं मानवो मानसं व्यापारमनुतिष्ठति। वाह्यश्चास्य सर्वोऽपि व्यापारो मानसव्यापारस्यानुकरणमात्रमेव भवति। वाह्यव्यापारात्पूर्वं योऽयं पुरुषस्य मानसो व्यापारो जायते स एव विचारपदवाच्यो भवति।

## विचारप्रक्रियाया अङ्गानि—

यथा पूर्वमुक्तं विचारप्रक्रियाया मुख्यानि पञ्चाङ्गानि भवन्ति। तानि च निम्नाङ्कितेन रूपेणोल्लिख्यन्ते—

१. लक्ष्याभीप्साया उदयः
२. लक्ष्यप्राप्त्यर्था प्रारम्भिकी चेष्टा।
३. पुरातनानामनुभवानां स्मरणम्।
४. तेषामनुभवानां वर्तमानप्रसंगे उपयोगः।
५. मानसमभिभाषणम्।

तद्यथा कश्चिद्विद्यार्थी स्वप्रकोष्ठात् कश्चित्कालं बहिर्गतः। अत्रान्तरे केनापि तस्यैकं पुस्तकं प्रकोष्ठादपहृतम्। प्रतिनिवृत्य स स्वस्थाने पुस्तकं न पश्यति। तदा तस्य सम्मुखेऽभिनवैषा समस्या उत्पद्यते। तस्याः समाधानार्थं सद्य एव सम्प्रवर्तते । तत्र पूर्वं पुस्तकानुसन्धानरूपस्य लक्ष्यस्य प्राप्त्यर्थमिच्छा समुदेति। सा च प्रथममङ्गमस्याः प्रक्रियायाः। ततश्चायं तदनुसन्धानार्थं मानसं प्रयत्नमारभते । पूर्वं चिन्तयति यत् समीपस्थाश्छात्रा अस्मिन् विषये प्रष्टव्याः। ततश्च तेषां मध्ये कोऽपि मम प्रकोष्ठे नासीदिति विचार्य ततो निवर्तते। स्वत एव चोपायान्तरं चिन्तयति। इदमनुचिन्तनं विचारप्रक्रियाया द्वितीयमङ्गं भवति। ततश्च पूर्वं कदाचित् तस्यैव छात्रस्य तन्मित्रस्य वा कस्यचित्पुस्तकमपहृतं, तत्स्मरति। इदं पूर्वानुभवस्य स्मरणं विचारप्रक्रियायास्तृतीयमङ्गं भवति। तस्य मित्रमपि कदाचित् तस्यानुमतिं विना पुस्तकं नयति। कदाचिद् भृत्योऽपि नयति। एको बालकस्तस्य प्रकोष्ठे आयाति सोऽपि वस्तूनीत-स्ततः करोति । कश्चिच्चौरोऽपि चैवमेव पुस्तकमपहर्तुं शक्नोति । इत्यादिकं पूर्वानुभूतं सर्वमपि सहसैव स्मृतिमुपतिष्ठते । इदं सर्वमपि विचारप्रक्रियायास्तृतीयस्याङ्गस्यान्तर्भूतं भवति । एष्वनुभवेषु प्रकृते सम्भाव्यमानस्यावधारणं तस्य प्रकृत उपयोगश्च विचारप्रक्रियायाश्चतुर्थ-मङ्ग भवति। पूर्वानुभवस्य प्रकृत उपयोग एव समस्यायाः समाधाने सहायको भवति। तदनुसारमेव च तस्य बाह्यो व्यापारः समनन्तरं प्रवर्तते। विचारप्रक्रियाया एषु चतुर्ष्वप्यंगेषु मानसं भाषणमनवरतं प्रवर्तते उत्तरोत्तरं च विस्पष्टतरं जायते। अत एव मानसं भाषणमिदं विचारप्रक्रियाया मुख्यतममङ्गं भवति।

व्यवहारविषयिणी ज्ञानविषयिणी चेति द्विविधा समस्या पूर्वं निर्दिष्टा। तत्र व्यवहारविषयिण्याः समस्याया इदमुदाहरणं प्रदर्शितम्। एवं ज्ञानविषयिण्याः समस्याया उदाहरणमप्यनुसन्धेयम्। यदा कस्यापि नूतनस्य विषयस्याध्ययनाय प्रवर्तते जनस्तदा ज्ञानविषयिणी समस्या तत्सम्मुखे समुपस्थिता भवति। तस्याः समाधानार्थं यदा प्रयत्नमारभते तदा तत्रापि विचारप्रक्रियायाः पूर्वोक्तानि सर्वाण्यप्यङ्गानि यथाक्रमं प्रवर्तन्ते। पुरातना अनुभवा एव सर्वत्र नूतनानां समाधाने उपयुज्यन्ते। तेऽनुभवाः स्वीया वा स्युः सजातीयानां वा स्युरिति न विशेषो भेदः।

नूतनासु परिस्थितिषु तासां विभिन्नान् पक्षानालोचयति जनः। पूर्वानुभवैः वर्तमानस्य प्रसङ्गस्य साधर्म्यं चानुशीलयति । तदनुसारं च परिणाममनुसन्दधाति। यत्र जनस्य जिज्ञासा निवर्तते मनस्तोषश्च जायते तत्रैव विचारप्रक्रियापि विरमति । तद्यथा दूरात् कश्चिद् ध्वनिविशेषः श्रूयते। स्फुटमनभिज्ञायमानस्य तस्य कारणजिज्ञासा तावत् संजायते । जिज्ञासोत्तरं पूर्वानुभूतानां ध्वनीनां स्मरणं भवति। पूर्वं बहुविधो ध्वनिरनुभूतः। तत्र केनापि ध्वनिविशेषेण सह प्रकृतस्य ध्वनिविशेषस्य साधर्म्यं वैधर्म्यं च परिशीलयति। येन ध्वनिविशेषेण च सहास्य ध्वनिविशेषस्य साधर्म्यं प्रतीयते तज्जातीयोऽयं ध्वनिरित्यध्यवस्यति च । सर्वत्रापि मानसं भाषणं च सम्प्रवर्तते । एवं ज्ञानात्मिकानां समस्यानां समाधाने पञ्चाङ्गिका विचारप्रक्रिया एवोपयुज्यते ।

तथा चोक्तम्—

नवप्रश्नसमाधानं पूर्वैरनुभवैर्भवेत् ।
मानसस्तत्र व्यापारो विचारः परिकीर्तितः ॥१॥
ज्ञानाश्रिता समस्या वा व्यवहाराश्रिताऽथवा ।
जायते, तत्समाधानं विचारादेव सम्भवेत् ॥२॥
१ इच्छा लक्ष्यस्य प्राप्त्यर्था २ चेष्टा तद्विषया तथा ।
३ पूर्वस्यानुभवस्याथ स्मरणं च प्रसङ्गतः ॥३॥
४ प्रकृते तत्प्रयोगश्च ५ भाषणमान्तरं तथा ।
पञ्चाङ्गानि विचारस्य वड्स्वर्थमतानि वै ॥४॥
प्रकोष्ठात् पुस्तकं केन ममाद्यापहृतं खलु ।
समस्येयं समुत्पन्ना विचारोऽथ प्रवर्तते ॥५॥
लक्ष्यलब्ध्यै उदेतीच्छा यत्नमारभते ततः ।
स्वमित्राणां च स्वीयाश्च जायन्तेऽनुभवाः स्मृताः ॥६॥
उपयोगं पुनस्तेषां कृत्वा तत्रावधारणम् ।
लक्ष्यमेत्यान्तरं चात्र भाषणं सम्प्रवर्तते ॥७॥
एवं ज्ञानस्य सम्प्राप्तौ प्रक्रियैषैव सम्मता ।
यथायथं प्रयोज्यानि तत्राप्यङ्गानि पञ्च वै ॥८॥

**विचारस्य भेदाः—**

विचारस्य स्तरतारतम्येन १ प्रत्यक्षात्मको विचारः, २ कल्पनात्मको विचारः, ३ प्रत्ययात्मको विचारश्चेति त्रयो भेदा आनायन्ते । तत्र बालेषु पश्वादिषु च प्रत्यक्षात्मको विचारभेद एव उपलभ्यते । दण्डोद्यतकरं नरं दृष्ट्वा पशवः पलायन्ते हरिततृणपूर्णपाणिं च तमवलोक्य तदभिमुखाः प्रवर्तन्ते । एवं पुरुषा अपि क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् नरान् वीक्ष्य ततः पलायन्ते । इदं पलायनं विचारस्यैव फलतया परिणतं भवति । पूर्वानुभवस्मरणेन तस्य प्रकृतेऽपि प्रयोगेण चोपस्थितायाः समस्यायाः समाधानं विधीयत इति विचारस्यैवायं विषयः । किन्त्वस्मिन् विचारे प्रत्यक्षस्यैव प्राधान्यं भवति, न कल्पनाया, नापि प्रत्ययस्येति प्रत्यक्षात्मकोऽयं विचारभेदोऽभिधीयते । एवंविधे विचारे पदार्थस्य प्रत्यक्षज्ञानमात्रं प्रयोजकं भवति । तत उत्पन्नाःप्रतिमाः, तद्वाचकाः शब्दास्तदात्मकाः प्रत्यया वा नोपयुज्यन्ते । ततश्च प्रत्यक्षाश्रितत्वात्प्रत्यक्षात्मको विचारोऽभिधीयते ।

विचारस्य द्वितीयो भेद कल्पनात्मको विचारो भवति । यथा प्रत्यक्षात्मको विचारः प्रत्यक्षाश्रितो भवति एवं कल्पनात्मको विचारः प्रतिमाश्रितो भवति । प्रत्यक्षात्मकेन ज्ञानेन संस्कारात्मना तत्प्रतिमा मानसपटलेऽङ्किता भवन्तीति पूर्वमुक्तम् । ताः प्रतिमा एव कल्पनात्मकस्य विचारस्य प्रवर्तिका भवन्ति । यदा कश्चिद् गृहस्थो हट्टाद् गृहमायाति तदा शिशुभ्यः कन्दुकादीनि क्रीडकान्यानयति । अत एव शिशुर्यदा हट्टगतस्य पितुर्विषये चिन्तयति तदा पूर्वानुभवस्य स्मरणं प्रकृते च तस्योपयोगं कृत्वा, अद्यापि पिता मत्कृते क्रीडनकान्यानेष्यतीति तर्कयति । अत्र प्रत्यक्षस्याभावो भवति । संस्काराश्रितः स्मृतिसञ्चालितो वायं विचार इति कल्पनात्मको विचारोऽभिधीयते ।

विचारस्य तृतीयो भेदः प्रत्ययात्मको विचारो भवति । प्रत्ययात्मको विचारो न प्रत्यक्षेण नापि स्मृत्या, प्रत्युत प्रत्ययैः सञ्चालितो भवति । पदार्थस्य नामादिसम्बद्धं ज्ञानमत्र प्रत्ययपदवाच्यं भवति । प्रत्यक्षात्मके विचारे यः प्रत्यक्षशब्दस्य प्रयोगः श्रूयते स नामादिरहितस्य

ज्ञानमात्रस्य ग्राहकोऽस्ति । नामादिसंयुतं चार्थज्ञानमत्र प्रत्ययपदस्य वाच्यं भवति । प्रत्ययात्मको विचारो भाषामुखेनैव भवति, तत्र नामादिसंयुतः शब्दव्यवहारः प्रयोजको भवतीति च प्रत्ययात्मकोऽयं विचारोऽभिधीयते । प्रौढानां जनानां सर्वोऽपि विचारः प्रत्ययात्मक एव भवति । ते हि भाषयैव विचारयन्ति । शब्दप्रयोगमन्तरा विचारस्तेषां न प्रवर्तते । तस्मात्प्रौढानां विचारः प्रत्ययात्मक एव विचारो भवति ।

तथा चोक्तम्—

प्रत्यक्षात्मा विचारश्च कल्पनात्मा तथैव च ।
प्रत्ययात्मा च सम्प्रोक्तो विचारस्त्रिविधो बुधैः ॥९॥
प्रत्यक्षात्मा विचारस्तु पशौ बाले च दृश्यते ।
दण्डोद्यतकरं वीक्ष्य पलायन्ते नरं यतः ॥१०॥
युज्यते तत्र प्रत्यक्षं, नामजात्यादिकं विना ।
प्रत्ययात्मा विचारोऽयमत एव प्रकीर्तितः ॥११॥
कल्पनात्मा विचारश्चानुभवप्रतिमाश्रितः ।
आनेष्यति यथा हट्टान्मदर्थं क्रीडनं पिता ॥१२॥
यदा हट्टात् समायाति तदानयति क्रीडनम् ।
सम्बन्धप्रतिमास्त्वेवं स्मृता मूलं भवन्ति वै ॥१३॥
शाब्दं नामादिसम्बद्धं यज्ज्ञानं सविकल्पकम् ।
तत् प्रत्ययपदग्राह्यं तन्मूलः प्रत्ययाश्रितः ॥१४॥
यतः प्रौढविचारस्तु प्रत्ययं शाब्दमाश्रितः ।
प्रत्ययात्मा ततो नाम्ना विचारः परिकीर्तितः ॥१५॥

## प्रत्ययोत्पत्तिः—

पदार्थानां तद्गुणानां वा प्रत्यक्षेण नामजात्यादियुतं यज्ज्ञानमुत्पद्यते तत् प्रत्ययपदवाच्यं भवति । तच्च शब्दैरेव व्यपदिश्यते ज्ञानमिति तद्वाचकाः शब्दा अपि प्रत्ययपदवाच्यतां यान्ति । ततश्च जातिवाचका भाववाचका वा संज्ञाशब्दा अपि प्रत्ययपदेनाभिधीयन्ते । गोघटादयः जातिवाचकाः शब्दा न व्यक्तिविशेषस्य वाचकाः किन्तु

जातिसामान्यस्यैव वाचका भवन्ति। एवं सुखशान्त्यादिभावानां वाचकाः शब्दा अपि सजातीयस्य भावसामान्यस्य बोधका भवन्ति। तत्राद्यानां जातिवाचकानां शब्दानां वाच्योऽर्थो नेत्रादिभिरिन्द्रियैर्गृह्यते। उत्तरेषां भाववाचकानां शब्दानां वाच्योऽर्थश्च बौद्धिक एव भवति न वाह्येन्द्रियाणां विषयः। उभयविधोऽप्यर्थः प्रत्ययजनको भवति। तत्र प्रत्ययस्य समुत्पत्तौ चत्वारि साधनानि भवन्ति—

१—पदार्थानामनुभूतिः।

२—पदार्थानां गुणविश्लेषणम्।

३—पदार्थानां वर्गीकरणम्।

४—पदार्थानां नामकरणम्।

१ तत्र न केवलं शब्दज्ञानं, नापि केवलमर्थज्ञानं प्रत्ययपदवाच्यं भवति किन्तूभयोः सम्बद्धं ज्ञानमेव प्रत्ययपदेनाभिधीयते। बहवस्तथाविधाः शब्दा भाषायां लोकैः प्रयुज्यन्ते येषां वाच्या अर्थास्तैः कदापि न दृष्टाः। यथा सिंहशब्दो बालैरपि प्रयुज्यते किन्तु बहुभिः सिंहो न दृष्टः। तेषामयं शाब्दः प्रयोगो न यथार्थं प्रत्ययं जनयति। शब्दस्य यथार्थप्रयोगे प्रत्ययजनने चार्थस्यानुभूतिरपरिहार्या भवति। पूर्वमर्थोऽनुभूयते ततश्च नामजात्यादियुतं तस्य ज्ञानं सविकल्पकं सञ्जायते। ततश्च शब्दव्यवहारस्य प्रत्ययस्य चोत्पत्तिः। तदेवं प्रत्ययस्य समुत्पत्तौ पदार्थस्यानुभूतिरपरिहार्या भवतीति प्रत्योत्पत्तावनुभूतिमूलं भवति।

२ अनुभूतीनां विश्लेषणं प्रत्ययोत्पत्तौ द्वितीयं साधनं भवति। कुक्कुरदर्शनात् कुक्कुरज्ञानमुत्पद्यते किन्तु तद्यावत् समानासमानजातीयेभ्यो न विभिद्यते तावन्न समुचितमसन्दिग्धं च प्रत्ययं जनयति। समानासमानजातीयभ्यां व्यवच्छेदे हि कुक्कुरपदार्थस्य सम्यग्ज्ञानं भवति नान्यथा। अत एव च 'समानासमानजातीयव्यवच्छेदो हि लक्षणार्थः' इति लक्षणस्य प्रयोजनमपि दर्शितं दर्शने। ये धर्मा गुणा वा सजातीयेभ्योऽश्वादिभ्यः पशुभ्यो, विजातीयेभ्यश्च घटादिभ्यः पदार्थेभ्यः कुक्कुरस्य भेदका भवन्ति त एव कुक्कुरस्य लक्षणसम्पादका भवन्ति।

तेषां व्यवच्छेदकानां लक्षणानां परिज्ञानमपि प्रत्ययोत्पत्तौ द्वितीयं निमित्तं भवति ।

३ पदार्थानां वर्गीकरणं च प्रत्ययस्योत्पत्तौ तृतीयं निमित्तं भवति । पदार्थानां साधर्म्य-वैधर्म्याभ्यामेव तत्त्वज्ञानमुत्पद्यत इति वैशेषिकादौ प्रतिपादितम् । तत्र पूर्वोक्तं विश्लेषणं वैधर्म्यज्ञानमात्रं भवति । वर्गीकरणं च साधर्म्यज्ञानमुच्यते । बहूनां घटानामनुगतं सामान्यमवलोक्य सर्वानपि घटजातीयानेकस्मिन् वर्गे स्थापयति । इदमेव वर्गीकरणमुच्यते । ततश्च सामान्यज्ञानं साधर्म्यज्ञानं वा वर्गीकरणमुच्यते । ततश्चानुभूतीनां विश्लेषणेन वर्गीकरणेन च प्रत्ययस्योत्पत्तिर्भवतीति यदुक्तं तत् साधर्म्यवैधर्म्याभ्यां पदार्थस्य तत्त्वज्ञानं भवतीत्यस्यैवानुवादमात्रम् । अतः साधर्म्यज्ञानापरपर्यायं वर्गीकरणमपि प्रत्ययोत्पत्तौ तृतीयं निमित्तं भवति ।

४ नामकरणं च प्रत्ययप्रक्रियायाश्चतुर्थं साधनं भवति। अनुभूतीनां विश्लेषणेन वर्गीकरणेन च ये समानजातीया अर्था एकस्मिन् वर्गे निधीयन्ते तेषां व्यवहारसम्पादकं विशिष्टं नामकरणं विधीयते । नामजात्यादिसंवलितं च वस्तुज्ञानं प्रत्ययपदवाच्यं भवति । ततश्च प्रत्ययोत्पत्तौ निमित्तचतुष्टयं विद्वद्भिराम्नातम् ।

तथा चोक्तम्—

वस्तुनस्तद्गुणानां च वाचकाः प्रत्यया मताः ।
जातिवाचकशब्दास्ते शब्दाश्च भाववाचकाः ॥१६॥

प्रत्ययो ज्ञानमर्थस्य, शब्दमात्रं न प्रत्ययः ।
प्रत्ययस्य समुत्पत्तौ ज्ञेयं हेतुचतुष्टयम् ॥१७॥

अनुभूतिः पदार्थस्य गुणविश्लेषणं तथा ।
वर्गनिर्धारणं तेषां नामनिर्धारणं तथा ॥१८॥

चतुर्भिर्हेतुभिरेभिः प्रत्ययाः समुपस्थिताः ।
प्रवर्तयन्ति प्रौढानां विचारं प्रत्ययाश्रितम् ॥१९॥

## विचाराणां भाषया सह सम्बन्धः—

विचारप्रक्रियायामान्तरं भाषणमपि तदङ्गत्वेन प्रतिपादितम्। आन्तरं भाषणमपि भाषात्मकमेव भवतीति भाषया सह विचाराणां घनिष्ठः सम्बन्धो भवति। सर्वं च प्रत्ययात्मकं सविकल्पं वा ज्ञानं नामजात्यादिसंवलितमेव भवतीति यथा यथा वर्धते ज्ञानं तथा तथा शब्दभण्डारस्यापि वृद्धिर्भवति। विदुषां शब्दज्ञानमितरेभ्यो विशिष्टं भवति। सामान्यानां लोकानां ज्ञानं परिमितं भवतीति तेषां शब्दज्ञानमपि परिमितमेव स्वल्पतरं वा भवति। यस्यां भाषायां शब्दप्राचुर्यं भवति तस्यां ज्ञानगाम्भीर्यं विचारसमृद्धिरप्यपरिमेया भवति। शब्दानां परिज्ञानेनैव तत्सम्बद्धानां ज्ञानस्य विचाराणां च परिचयः सुकरो जायते। अत एव भाषाया विचारैः सहातीव घनिष्ठो भवति सम्बन्धः।

विचाराणां प्रकाशनं भाषयैव सम्भवति। प्रकाशनेन विचारा विस्पष्टाः सुदृढाश्च जायन्ते। कैश्चिद्वार्तालापरूपप्रकाशितं स्वरूपमेव विचार-पदवाच्यं भवतीति प्रतिपादितम्। विचाराणामदानप्रदाने भाषामुखेनैव भवतः।

तथा चोक्तम्—

आन्तरं भाषणं यस्माद्विचारप्रक्रियाङ्गकम्।<br>
भाषाया विचारैः सह सम्बन्धः सुदृढस्ततः ॥२०॥<br>
अर्थज्ञानस्य वृद्ध्यैव शब्दवैपुल्यसम्भवः।<br>
विचाराणां समृद्धिश्च शब्दवैपुल्यहेतुका ॥२१॥<br>
शब्दवृद्धिर्मनुष्याणां ज्ञानवैपुल्यद्योतिका।<br>
शब्दाभावश्च राष्ट्रस्य तद्गुणाभावसूचकः ॥२२॥<br>
विचाराणां प्रकाशश्च शब्दद्वारेण जायते।<br>
प्रकाशनेन विस्पष्टाः संपुष्टाश्च भवन्ति ते ॥२३॥<br>
शब्दावलिपरिज्ञानाद् बुद्धेर्मानं विधीयते।<br>
येषां शब्दावलि-दीर्घा बुद्धिमन्तस्त एव हि ॥२४॥<br>
विचारस्यात्मलाभोऽपि बिना भाषां न सम्भवेत्।<br>
अतो भाषा विचारैर्वै सम्बद्धा नितरां मता ॥२५॥

**विचारपद्धतिः--**

निगमनात्मिका आगमनात्मिका चेति द्विविधा विचारपद्धतिस्तर्कशास्त्रे प्रतिपादिताऽस्ति। तत्र निगमनात्मिका पद्धतिर्विशेषानुमाननाम्ना ( डिडक्टिव ), आगमनात्मिका पद्धतिश्च सामान्यानुमानशब्देनापि ( इंडक्टिव ) कथ्यते। यत्र प्रदत्तात्सामान्याद्विशेषो गम्यते तद्विशेषानुमानं निगमनमुच्यते। यथा—

| | |
|---|---|
| १-सर्वे प्राणिनो मरणधर्माणः | २—यदुत्पत्तिधर्मकं तदनित्यम् |
| तथा चायं देवदत्तोऽपि प्राणिविशेषः | तथा चायं घट उत्पत्तिधर्मकः |
| तस्माद्देवदत्तो मरणधर्माऽस्ति | तस्मादनित्यः घटः |

एवं प्राणिनां मरणधर्मत्वासामान्यात् देवदत्तस्य प्राणिविशेषस्य मरणं निश्चीयते। एवं उत्पत्तिधर्मकस्यानित्यत्वसामान्यात् घटविशेषस्यानित्यत्वं निश्चीयते। अत एव सामान्याद्विशेषार्थस्य बोधकमिदं विशेषानुमानमुच्यते। विशेषानुमानपद्धतिरेव निगमनात्मिका विचारपद्धतिरुच्यते।

द्वितीया आगमनात्मिका विचारपद्धतिः सामान्यानुमानपद्धतिरप्युच्यते। विशेषानुमाने सामान्य प्रदत्तं भवति विशेषश्च ततः साध्यते। एवं सामान्यानुमाने विशेषः प्रदत्तो भवति ततश्च सामान्यं साध्यते। तद्यथा—

| | |
|---|---|
| रामो मृतः | समुत्पन्नो घटो अनित्यः |
| कृष्णो मृतः | समुत्पन्नः पटो अनित्यः |
| देवदत्तो मृतः | समुत्पन्नो वृक्षो अनित्यः |
| सर्वे मानवा मरणधर्माणः | सर्वमुत्पत्तिधर्मकमनित्यम् |

अत्र रामकृष्णादीनां मानवानां मरणधर्मकत्वामालोच्य सामान्यतः सर्वेषामपि मानवानां मरणधर्मकत्वमध्यवसीयते। अत एव विशेषात्सामान्यध्यवसीयत इति सामान्यानुमानं (इंडक्टिव) उच्यते।

विशेषानुमाने विशेषः साध्यो भवति। सामान्यानुमाने च सामान्यं साध्यं भवति। ततश्च यत्साध्यं भवति तत्प्राधान्यादत्रानुमानं सामान्यानुमानं विशेषानुमानं वा कथ्यते।

तथा चोक्तं विशेषानुमानलक्षणम्—

यत्र प्रदत्तसामान्याद्विशेषो ज्ञायते क्वचित् ।
तद्विशेषानुमानाख्यं 'डिडक्टिव' इति कथ्यते ॥२६॥

मानवा मृत्युधर्माणो देवदत्तश्च मानवः ।
मृत्युधर्मा ततः सोऽपि इति तत्र निदर्शनम् ॥ २७ ॥

प्रदत्तं मृत्युधर्मत्वं सामान्यं मानवस्य यत् ।
तेन व्यक्तिविशेषस्य मृत्युरत्रानुमीयते ॥ २८ ॥

सामान्यानुमानलक्षणम् ( इंडक्टिव-आगमनम् )—

विशेषेभ्यः प्रदत्तेभ्यः सामान्यं यत्र गम्यते ।
तत् सामान्यमनुमानं इंडक्टिव इतीर्यते ॥ २९ ॥

मृतो रामो मृतः कृष्णो मृतौ भीमयुधिष्ठिरौ ।
तस्मान्मरणधर्माणो नूनं सर्वेऽपि मानवाः ॥३०॥

विशेषेभ्यो यतो ह्यत्र सामान्यमनुमीयते ।
सामान्यानुमितेस्तस्माद्विज्ञेयं तन्निदर्शनम् ॥३१॥

भारतीये दर्शनेऽनुमानस्य प्रतिज्ञादीनि पञ्चाङ्गानि निर्दिष्टानि सन्ति । तत्र केचित् त्रीण्येवाङ्गानि मन्यन्ते । 'उदाहरणपर्यन्तं यद्वोदाहरणादिकम्' इति वचनमुदाहरणपर्यन्तस्य प्रतिज्ञाहेतूदाहरणात्मकस्याङ्गत्रयस्य, उदाहरणादिकस्य वाङ्गत्रयस्याप्यनुमापकत्वं प्रतिपादयति । तत्र चोदाहरणादिकेऽनुमानपक्षे यथोदाहरणादेवानुमानमारभ्यते तथात्रागमनात्मके सामान्यानुमानेऽप्युदाहरणादेवानुमानमारभ्यते । मृतो रामो, मृतः कृष्ण, इत्याद्युदाहरणबलेन सर्वेषां मानवानां मरणधर्मकत्वमध्यवसीयते । तस्मादुदहरणादिकं सामान्यानुमानं 'इंडक्टिव'(आगमनपद्धतिः) नाम्नापि व्यवह्रियते । तद्भिन्नं विशेषानुमानं च सामान्याद् व्याप्तिसम्बन्धात्प्रवर्तत इति व्याप्तिमूलकमनुमानमपि वक्तुं शक्यते । ततश्च पाश्चात्य तर्के 'डिडक्टिव इन्डक्टिव'भेदेन या द्विविधा विचारपद्धतिःप्रतिपादितास्ति तस्याः संस्कृतभाषायां निम्नाङ्कितैः पद्यैरनुवादो विधीयते—

| (डिडक्टिव) | (इंडक्टिव) |
| --- | --- |
| १—उदाहरणपर्यन्तम् | १—उदाहरणादिकम् |
| १—विशेषानुमानम् | १—सामान्यानुमानम् |
| २—व्याप्तिमूलकमनुमानम् | २—दृष्टान्तमूलकमनुमानम् |
| ३—निगमनम् | ३—आगमनम् |

उभयत्रापि, आद्यं संज्ञाद्वयमन्वर्थं तद्गुणविशेषादवधृतम्। तृतीया तु संज्ञा रूढ्यात्मिका न तथाऽन्वर्था यथाद्ये संज्ञे भवतः।

## मनोवैज्ञानिकी तार्किकी च विचारपद्धतिः—

यद्यपि तर्कशास्त्रे द्विविधाप्येषा विचारपद्धतिः प्रतिपादितास्ति तथापि मनोवैज्ञानिकास्तत्र दृष्टान्तप्रधानां आगमनात्मिकां सामान्यानुमानपद्धतिमेव विशेषत आद्रियन्ते। सामान्यानुमाने विशेषाः प्रदत्ता ज्ञाता वा भवन्ति तैश्चाज्ञातानामप्रदत्तानां वा सामान्यानां सिद्धिर्भवति। इयमेव हि मनोवैज्ञानिकी पद्धतिः। बाला हि प्रथमं विशेषमेव गृह्णन्ति न सामान्यम्। बहून् विशेषानुदाहरणरूपेण पश्यन्तस्ते पाश्चात्तदनुगतं सामान्यमवधारयन्ति। पूर्वमेकं कुक्करं पश्यति बालकः किन्तु विशेषकुक्कुरसम्बद्धं भवति तद्दर्शनं न तु सामान्यं तत्र गृहीतं भवति। एवं क्रमेण बहून् कुक्कुरविशेषानवलोकयन् कियतापि कालेन तदनुगतं कुक्कुरत्वसामान्यमवधारयति। अयमेव बालानां मनोविकासस्य क्रमः। ततश्च यत्र विशेषात् सामान्यास्याधिगमः स एव मनोवैज्ञानिको विचारक्रमः। तद्भिन्नः सामान्याद्विशेषावधारणात्मकश्च तार्किको विचारक्रमः। मनोवैज्ञानिके हि विचारक्रमे विशेषात् सामान्यस्य, व्याप्याच्च व्यापकस्यागमोऽधिगमो वा भवतीति स एव मनोवैज्ञानिको विचारक्रमो भवति। तार्किकश्च क्रमस्तद्भिन्नो व्याप्तिमूलकः सामान्याद्विशेषावधारणप्रधानो भवति। यद्यप्युभावप्येतौ क्रमावुभयत्राप्यवलम्ब्येते तथापि मनोविकासक्रमस्यानुरूपत्वाद्विशेषात् सामान्यावधारणात्मको दृष्टान्तप्रधानः क्रम एव मनोवैज्ञानिको विचारक्रमोऽभिधीयते।

तथा चोक्तम्—

> क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः।
> ज्ञायतेऽतो द्विधा प्रोक्तः विचारस्य क्रमो बुधैः॥ ३२ ॥
>
> व्याप्तिप्रधानस्तत्राद्यः परो दृष्टान्तमुख्यकः।
> स निदर्शनपर्यन्तः स चोदाहरणादिकः॥ ३३ ॥
>
> विशेषादेव सामान्यं बाला गृह्णन्ति मुख्यतः।
> तस्मात् क्रमः स विद्वद्भिर्मनोवैज्ञानिको मतः॥ ३४ ॥
>
> सामान्याच्च विशेषस्य ज्ञानं भवति यत्र तु।
> तर्के व्याप्तिप्रधानत्वात् तार्किकः स क्रमो मतः॥ ३५ ॥
>
> उदाहरणपर्यन्तो यद्वोदाहरणादिकः।
> द्विधा मीमांसकैरत्रानुमानस्य क्रमो मतः॥ ३६ ॥
>
> तत्रान्त्यस्तु नवैविज्ञैर्मनोवैज्ञानिको मतः।
> आद्यो व्याप्तिप्रधानश्च कथितस्तार्किकः क्रमः॥ ३७ ॥

## प्रश्नाः

१—विचारस्य प्रक्रिया निरूपणीया। विचारस्य जीवने क उपयोगः इति च प्रतिपादनीयम्।

२—विचारप्रक्रियायाः कानि मुख्यान्यङ्गानि ?

३—विचारस्य भेदाः प्रदर्शनीयाः।

३—प्रत्ययशब्दस्य कोऽर्थः ? कथं च प्रत्ययानां समुत्पत्तिः ?

५—विचाराणां भाषया सह कः सम्बन्धः। कश्च भाषायास्तत्रोपयोगः।

६—कतिविधा विचारपद्धतिः। तत्र च मनोवैज्ञानिकी विचारपद्धतिः किंस्वरूपा। सा च पद्धत्यन्तरात् कथं विभिद्यते।

---

## एकोनविंशः परिच्छेदः

# संवेगाः

मनोव्यापारा हि ज्ञानात्मकाः क्रियात्मका भावनात्मकाश्चेति त्रिविधाः पूर्वं समाम्नाताः। तत्र क्रियात्मका ज्ञानात्मकाश्च द्विविधा मनोव्यापारा विगतेषु परिच्छेदेषु विस्तरेण निरूपिताः। इदानीं भावनात्मकतृतीयो मनोव्यापारो विवेचनायावशिष्यत इति तद्विवेचनमिहोपक्रम्यते। यथा ज्ञानात्मकानां मनोव्यापाराणां प्रत्यक्षादयः पञ्चावान्तरभेदाः, यथा च क्रियात्मकानां मनोव्यापाराणां मूलप्रवृत्त्यादयः पञ्चावान्तरप्रभेदाः पूर्वमुपदर्शितास्तथा भावानात्मकस्य मनोव्यापारस्य १ संवेगः २ तरङ्गः, ३ स्थायिभावः, ४ भावनाग्रन्थिश्चेति चत्वारो मुख्या अवान्तरप्रभेदा आम्नायन्ते। ते यथाक्रममत्र निरूप्यन्ते।

### १. संवेगाः—

अनुकूलं प्रतिकूलं वा किमपि वस्तुजातमवलोक्य इन्द्रियान्तरैर्वानुभूय यो मनोविकार उत्पद्यते स एवात्र संवेगपदवाच्यो भवति। इन्द्रियार्थसन्निकर्षाद् यज्ज्ञानमुत्पद्यते तद् द्विविधं भवति किञ्चित् केवलं संवेदनात्मकं ज्ञानं भवति किञ्चिच्च भावनासंवलितं भवति। यथा स्वदेशे वसन्तो जना अहर्निशं स्वजातीयान् पुरुषानवलोकयन्ति। सामान्यतस्तेषां पुरुषाणामवलोकनेन स्वरूपमात्रं अनुभूयते। तेनावलोकयितुर्मनसि कापि विक्रिया नोत्पद्यते। तदिदं सामान्यं संवेदनात्मकं ज्ञानं भवति। किन्तु कदाचिद् दूरतरे विदेशे वसतां जनानां यद्यकस्मात् स्वजातीयेन स्वदेशीयेन वा जनेन सह सम्मेलनं भवति तदा तयोर्ज्ञानं सामान्यं संवेदनात्मकं ज्ञानमात्रं न भवति किन्तु भावनासंवलितं तद् विशिष्टं ज्ञानं भवति। तयोरन्योन्यदर्शनेन चेतसि महानाल्हादोऽपूर्वोऽनुरागः, अद्भुतो भावातिरेकश्च समुद्भवति। येन तेषां चित्तं सपद्येव द्रवीभवति। अपरिमेयं च सुखमनुभवन्ति ते। तदिदं भावनासंवलितं विशिष्टं ज्ञानमेवात्र संवेगपदवाच्यं भवति। एवं कस्यापि विषयस्यावलोकनेन श्रवणादिना वा चेतसि यापा विकृतिर्जायते सैव संवेगाख्यां भजते।

इयं संवेगात्मिका मनोवृत्तिर्न नित्या किन्तु कादाचित्की। सामान्यतः प्रतिपलमर्थजातमनुभवति प्रतिक्षणं च व्यवहरति जनः। किन्तु तत्र भावनावेशो न भवति। कस्मिंश्चिद्विशिष्टे एवावसरे तस्य ज्ञानं भावनासंवलितं भवति। भावनात्मक एवायमनुभवः संवेदपदभाग् भवति। शिशूनां भावनाशक्तिरतीव परिमिता भवतीति तत्र संवेगावसरा अपि न्यूना एव भवन्ति।

तथा चोक्तम्—

विषयाणां परिज्ञानाच्चेतसो विकृतिस्तु या।
जायते भावनाविष्टा संवेगाख्यां दधाति सा॥ १॥
कादाचित्की तु प्रौढानां बालानां विरला तथा।
संवेगाख्या मनोवृत्तिर्विद्वद्भिः परिकीर्तिता॥२॥

## संवेगानां वैशिष्ट्यम्—

१. संवेगानां क्षेत्रमतीव व्यापकं वर्तते। सर्वेष्वपि प्राणिषु, मनोविकासस्य सर्वेष्वपि स्तरेषु च, न्यूनाधिकभावेन संवेगानामनुभूतिर्भवति। शुनो भोज्यापहरणे क्रोधो दृश्यते। शिशुग्रहणोद्युक्तायाभिकुध्यति मार्जारी। मानवानां चेच्छाभिघाते क्रोध आविर्भवति। मनुष्यवत्तिरश्चामपि कामक्रोधादयो मनोविकाराः सुलभा भवन्तीति संवेगानामप्रतिहता गतिः, यावज्जीवं च संवेगानां व्यापकं क्षेत्रमिति प्रथमं तद्वैशिष्ट्यम्।

२. कारणभेदेऽपि स्वरूपसाम्यं संवेगानां द्वितीयं वैशिष्ट्यम्। विविधैर्निमित्तैः संवेगानामुत्पत्तिर्भवति। भोज्यापहारे श्वानोऽभिकुध्यन्ति। लांगूलाकर्षणे शावकानामभिमर्षणेऽपि तत्र क्रोधावेशो दृश्यते। बालः कुक्कुराद्बिभेति, अन्धकारादुद्विजते, सिंहात् त्रस्यति, भल्लूकाच्च भयमनुभवति। एवं क्रोधस्य भयस्य चोत्पत्तिर्विभिन्नकारणेभ्योभवति। किन्तु सर्वत्रापि क्रोधचिह्नानि भयचिह्नानि च तुल्यान्येव दृश्यन्ते। क्रोधावेशे ओष्ठस्फुरणं हस्तयोश्चालनं, पादप्रक्षेपः भ्रूभङ्गः तर्जनगर्जनादिकं सर्वत्रापि दृश्यते। एवं भयस्य सर्वास्वपि स्थितिषु शङ्का-त्रास-वैवर्ण्य-रोमाञ्चादयोऽनुभावा दृश्यन्ते।

३. संवेगा मानवानां विचारशक्तिं विनाशयन्ति क्रियाशक्तिं च प्राणिनामभिभवन्ति। क्रोधाविष्टो जन आत्मानं विस्मरति तस्य विवेको हीयते, क्रोधातिरेके च वेपथुर्जायते येन हस्तौ तस्य कार्ये न प्रसरतः। क्रियाशक्तिश्च सर्वथा क्षीयते। एवं भयातिरेके विस्मयाधिक्येऽपि च विवेको विलीयते, अङ्गानि शैथिल्यं व्रजन्ति। जनश्च पंगुरिव किमपि कर्तुमक्षमो जायते।

४. संवेगा हि जनानां विवेकभ्रष्टतामुपजनयन्तीति तदाविष्टो जनस्तथोद्धतं चेष्टते यथा पुनः स्वस्थतामुपगतः पश्चात्तापमनुभवति खिद्यते चात्यर्थम्। तस्मिन् समये स नात्मनोऽङ्गानामीष्टे, न वा सदसद्विवेके प्रभवति। ततो बलादिव केनाप्यकार्येषु नियोज्यमानस्तथा गर्हितं समाचरति यथा विद्वानपि लौकिकानामुपहास्यतां याति।

५. संवेगाः क्षणिका अस्थायिनश्च भवन्तीति द्रुतमेव विलीयन्ते किन्तु तेषां तिरोधानेऽपि कञ्चित्कालमनुस्वानसन्निभास्तरङ्गा जनस्य चेतो न विमुञ्चति। क्रोधापगमेऽपि स्वाभाविकमाकर्षणं सुलभं न भवति। एकत्र साफल्यमनुभूय सर्वत्राप्यप्रतिहतं साफल्यं तर्कयति। कमपि प्रसादातिरेकमनुभूय तत्प्रभावेन सर्वत्रापि मुखरतां याति। अवसरे ऽनवसरे वा स्मितं मुक्तहास्यं वा तनोति। पूर्वानुभूतस्य क्रोधस्य, प्रसादस्य भयस्य वा चिह्नानि प्रधानसंवेगे उपरतेऽपि दृश्यन्ते। स एष संवेगतरङ्गानां प्रभावः।

६. सर्वेऽपि संवेगा मूलप्रवृत्तिभिः सह सम्बद्धा भवन्ति। संवेगानामुपस्थितिर्मूलप्रवृत्तीनां साधिका बाधिका वा भवति। कमपि तीव्रं शब्दं श्रुत्वा पक्षिणः सतर्काः सञ्जायन्ते। यतस्तेषामात्मरक्षाप्रवृत्तिरुद्बुद्धा भवति। बालानां श्रोत्रमर्दनेन तेषामात्मसम्मानभावना कुण्ठिता भवतीति तत्र क्रोधावेशो दृश्यते। बालानामभिमर्षणेन पितॄणां वात्सल्यप्रवृत्तिरुपहन्यत इति तत्र क्रोधानुभूतिर्जायते। एवं संवेगानां मूलप्रवृत्तिभिः सह सहज एव सम्बन्धो भवति। न केवलं मूलप्रवृत्तय एव किन्तु प्रौढावस्थायाः स्वभावः, संस्कारः, स्थायिभावादयश्चापि संवेगनिमित्ततां यान्ति। स्वदेशस्नेहस्य स्वभावः, स्थायिभाव, अध्ययनस्य संस्कारः, नियमपालनस्य स्वभावश्च कदाचित् संवेगमुद्योतयति।

७. संवेगानामनुभूतिः प्रातिस्विकी वैयक्तिकी च भवतीति तुल्येऽपि कारणे व्यक्तिभेदेन संवेगभेदो दृश्यते। एकस्यामेव प्रतियोगितायामेकतरस्य पक्षस्य विजयं दृष्ट्वा कस्यचिन्मनो दूयते कस्यचिच्च प्रसीदतितरां चेतः। एकेनैव समाचारेण कश्चिद् भृशमुद्विजते कश्चिच्च सर्वथानुद्विग्नमनास्तिष्ठति। ततश्च संवेगोत्पत्तौ भावनात्मकः सम्बन्धोऽपरिहार्यो भवति। कस्यापि मृत्युसमाचारं श्रुत्वा य उद्वेगमनुभवति तस्य तत्र भावनात्मकः सम्बन्धो भवति। यश्चानुद्विग्नस्तिष्ठति तस्य स सम्बन्धो न भवति।

८. संवेगानामध्यारोपणमपि तेषामष्टमं वैशिष्ट्यं भवति। कमपि विषयविशेषमवलम्ब्यैव संवेगानामुत्पत्तिर्भवति। यथा कमपि पुरुषविशेषं, प्राणिविशेषं पदार्थविशेषं वाभिलक्ष्यैव क्रोधस्योत्पत्तिर्भवति। किन्तु मुख्यस्य विभावस्याभावे कदाचिदन्यत्रापि क्रोध आरोपितो भवति। यथा बहिः कलहायमानस्य क्रोधो यदा शान्तो न भवति तदा स गृहं गत्वा स्वपुत्रकलत्रेषु स्वक्रोधं शमयति। प्रधानपात्राभावे पुत्रकलत्रादयो रोषभाजनतामुपयान्ति। तत्राध्यारोपितं रोषभाजनत्वं न नैसर्गिकम्।

९. बाह्यमाभ्यन्तरं चेति संवेगानां द्विविधं कारणं भवति। कस्यापि वस्तुनो बाह्येन्द्रियजन्येनानुभवेन संवेगानामाविर्भावो भवतीति तत्र बाह्यं संवेगनिमित्तं भवति। किन्तु कदाचिद् देहस्याभ्यन्तरस्थितिरपि संवेगजनिका भवति। यथा मद्यपस्य मद्यानुपलम्भे तत्पिपासातिरेक एवोद्वेगजनको भवति। देहस्यास्वस्थतायां रूक्षतामुपयाति जनस्य चित्तं, येन स्वल्पेऽपि निमित्ते महान्तमुद्वेगमनुभवत्यातुरो जनः।

तदयमत्र संग्रहः—

संवेगोऽनपवादेन व्यापकः सर्वप्राणिषु।
दृश्यते हेतुभेदेऽपि समा संवेगविक्रिया ॥ ३ ॥

संवेगेषु विचारस्य शक्तिर्नश्यति मानवे।
एवं संवेगनाश्यैव क्रियाशक्तिश्च प्राणिनाम् ॥४॥

विवेकस्य परिभ्रंशात् तथाचरति मानवः।
यथा स खिद्यतेऽत्यर्थं पश्चात्तापं करोति च ॥ ५ ॥

विनिवृत्तेऽपि संवेगे भावधारानुवर्तते ।
तेन कालात् भवेत् स्वस्थं चित्तं सद्यो न जायते ॥ ६ ॥

मूलप्रवृत्तिसम्बद्धाः संवेगाः सम्मताः समे ।
प्रातिस्विकाश्च ते नूनं भिद्यन्ते व्यक्तिभेदतः ॥ ७ ॥

आलम्बनसमुत्थास्ते प्रायस्तद्विषया मताः ।
तदभावे च तेऽन्यत्र स्वभावादधिरोपिताः ॥ ८ ॥

चेतो विकृतिमात्रं न दैहिकी चापि विकृतिः ।
हेतुर्भवति संवेगे वाह्यभ्यान्तरा द्विधा ॥ ९ ॥

नवभेदं तु वैशिष्ट्यं संवेगेऽभिधीयते ।
अन्यच्चापि भवेत् किंचित्तन्नैवातिप्रयोजकम् ॥१०॥

## जेम्स-लैंगे सिद्धान्तः—

संवेगा यद्यपि मनोविकारात्मका भवन्ति तथापि तत्र वाह्य आभ्यन्तर उभयविधो दैहिको विकारोऽपि भवति । क्रोधावेशे आरक्तं मुखमण्डलं, स्फुरन्तावोष्ठौ, त्वरितौ श्वासप्रश्वासौ, मुष्टिबद्धौ हस्तौ च वाह्यां दैहिकीं विकृतिं सूचयन्ति । तत्समकालमेव चोदरस्थेभ्यः प्रणालीविरहितेभ्यो ग्रन्थिभ्य एड्रीनलाख्यो रसः प्रवहति । तस्य रसस्य प्रभावेण रुधिरस्य गतिस्त्वरिता सञ्जायते, हृदयस्पन्दनं वर्धते, श्वासावेगश्चापि त्वरितायते । यो हि जनः पदद्वयमपि चलितुं न शक्नोति स एव एड्रीनलरसस्य प्रभावेण उत्प्लवनं कूर्दनं पलायनं चारभते । क्रोधावेशाज्जायमानस्याभ्यन्तरस्य ग्रन्थिविकारस्यैवायं वाह्यः प्रभावो लक्ष्यते ।

तदेवं संवेगकाले यदिदं वाह्यमान्तरं चोभयविधमपि परिवर्तनं लक्ष्यते तत्र पौर्वापर्यस्य कार्यकारणभावस्य च विषये कश्चन मतभेदो दृश्यते विदुषाम् । अमरीकादेशस्थेन श्रीमता जेम्स महोदयेन, कोपनहीगनस्थेन लैंगे महोदयेन च १८८० ई० सम्वत्सरे स्वतन्त्ररूपेणास्मिन् विषये समानाकार एक एव सिद्धान्तः स्थापितः । स सिद्धान्त उभयोरपि नाम्ना 'जेम्स-लैंगेसिद्धान्त' इति संज्ञया प्रसिद्धिं लेभे । तस्य सिद्धान्तस्यायमभिप्रायो विद्यते यद् दैहिका विकारा एव संवेगारूपा भवन्ति ।

दैहिकविकारेभ्यो व्यतिरिक्तं किमपि संवेगस्वरूपं नोपलभ्यते। सर्वसाधारणस्य जनस्यायं विचारो यत्पूर्वं संवेगस्योदयस्ततश्च वाह्या दैहिकी विकृतिर्जायते। सिंहस्य दर्शनाद् भयमनुभवति। भयस्य प्रभावेण च पलायितुं प्रवर्तते जनः। किन्तु जैम्स-लैंगे सिद्धान्ते सिहं दृष्ट्वा पालायितुं प्रवर्तते अत एव भयमनुभवति। तन्मते स्थितिविशेषस्य परिज्ञानाच्छरीरे व्याकुलता समुत्पद्यते। तस्याकुलीभावस्यानुभव एव संवेगपदवाच्यो भवति। ततश्च पूर्वं दैहिकी विकृतिर्जायते ततश्च संवेगानुभूतिर्भवतीति जेम्स-लैंगे सिद्धान्तस्य सारांशः।

किन्तु सिद्धान्तोऽयं समीचीनो न प्रतिभाति। शरीरविज्ञानानुसारं क्रोधाद्यावेशे या वाह्या दैहिकी विकृतिर्दृश्यते सा अान्तरिकस्य एड्रीनलरसप्रवाहस्य प्रभावेणैव जायते स च एड्रीनलरसस्य प्रवाहः संवेगादेव प्रवर्तते इति पूर्वं मानसाः संवेगाः, तत एड्रीनलरसस्य प्रवाहः, ततश्च वाह्या दैहिकी विकृतिरिति तेषामुत्पत्तिक्रमः। मनोविज्ञानानुसारमपि पूर्वं मानसी प्रवृत्ति ततश्च दैहिकी प्रवृत्तिरितिः, तत्रापि पूर्वभाविनी संवेगानुभूतिरेव दैहिकस्य विकारस्य निमित्तभूता भवति। किञ्च कदाचित्संवेगानुरूपाणां वाह्यानामनुभावानामभिनयेऽपि नटादिषु संवेगानुभूति-र्न जायते। अत एव सिद्धान्तोऽयं वस्तुतो न समीचीनःऽ। तथापि शिक्षायामस्य सिद्धान्तस्य भूयानुपयोगो भवति। साहित्यादीनामध्यापनेऽभिनयप्रधाना पद्धतिरद्यत्वेऽत्यन्तं प्रशस्यते। तत्राभिनयेन बालकेषु काव्यादिगतस्य संवेगस्यानुभवसामर्थ्यमुत्पद्यते इत्यभिनयपुरस्सरमेव काव्यनाटकादीनामध्ययनं प्रशस्तं भवति। गत्यासनादिष्वपि च पृष्ठवंशं सरलीकृत्य वक्षःस्थलं पुरस्कृत्य, कन्धरामुत्थाप्य, नेत्रे च सम्मुखीकृत्य चलनमासनं चोपदिश्यते। तत्राप्यनेनाभिनयेन वीरजनोचित उत्साहादिरुदेतीत्येतदेवास्योपदेशस्याभिनयस्य च प्रयोजनं भवति।

तथा चायमत्र संग्रहः—

मानसी दैहकी चैव संवेगे विकृतिर्द्विधा।
वाह्याभ्यन्तरभेदाच्च दैहिकी द्विविधा तथा ॥११॥

दैहिकी तत्र किं पूर्वा मानसी वा किमादिमा ।
द्विविधस्तत्र सिद्धान्तो विदुषां परिदृश्यते ॥१२॥
मानसी विकृतिः पूर्वं दैहिकी तदनन्तरम् ।
जायते, इति सिद्धान्तः प्रत्नानामेव सम्मतः ॥१३॥
जेम्स-लैंगमते किन्तु दैहिक्येवादिमा मता ।
दैहिकीमन्तरा नूनं न संवेगोऽनुभूयते ॥१४॥
मनोव्यापारमूला हि व्यापाराः सर्वप्राणिनाम् ।
मानस्येव ततः पूर्वं युक्तं जेम्समतं न वै ॥१५॥
तथाप्यस्य महत्त्वं हि सिद्धान्तस्य न हीयते ।
अभिनयस्य शिक्षायां प्रवेशोऽपि तदाश्रितः ॥१६॥
ऋजुत्वं पृष्ठवंशस्य वक्षसो विस्तृतिस्तथा ।
गत्यासनसमुद्दिष्टा भवत्युत्साहदायिनी ॥१७॥

## संवेगानां जीवने शिक्षायां चोपयोगः—

लोकव्यवहारे दैनिके च जनजीवने संवेगानामप्रतिहतं साम्राज्यं सर्वत्राप्यवलोक्यते । ज्ञानं तर्कं चाप्यभिभूय संवेगा एव निर्दिशन्ति लोकव्यवहारमिति ज्ञानतर्कावपि तदग्रे प्रह्वीभवतः । क्व जनस्याभिरुचिः, कस्तस्य सिद्धान्तः, सामाजिकसमस्यानां विषये के तस्य विचाराः इत्यादीनां प्रश्नानां निर्णये प्रायः संवेगा एव प्रभवन्ति । बहुधा न्यायं, तर्कं, ज्ञानं चाप्युपेक्ष्य संवेगानुरोधेनैव प्रवर्तते लोकः । अत एव जनजीवने संवेगानां महत्त्वपूर्णं स्थानं भवति । महतां महान्ति कार्याणि साहसपूर्णाश्च व्यापाराः संवेगासामर्थ्यादेव जायन्ते । केचन विद्वांसो जीवने संवेगानां प्राधान्यं महत्त्वं वा नाद्रियन्ते । किन्तु संवेगशून्यं जीवनं दुर्लभमेव । सर्वेषामपि लोकानां जीवने व्यवहारे च तादृशः समयः समायति यत्र ज्ञानतर्कादिकं सर्वमन्यद्विधूय स केवलं संवेगसमवलम्बेनैव व्यवहारे प्रवर्तते । मानवशक्तेः स्रोतांसीव संवेगास्तत्राहर्निशं जीवनधारां प्रवाहयन्ति । संवेगबलेनैव युद्धेषु परपरित्राणे वा वीराः स्वप्राणानपि तृणाय मन्यन्ते । संवेगसामर्थ्येनैव च कारुण्याप्लावित-हृदयाः सन्तो दीनानभ्युद्धरन्ति । आत्मनः सर्वस्वमपि च तदर्थमुत्सृजन्ति

ततश्च संवेगा लोकव्यवहारप्रवर्तका, नीतिनिर्देशका, जीवन-सञ्चालकाश्च भवन्ति । ततो मानवजीवने तेषामतीव महत्त्वपूर्णं स्थानं विद्यते ।

तथा चोक्तम्—

नूनं संवेगसाम्राज्यं जीवने दृश्यते तथा ।
नीरं विभाति तस्याग्रे ज्ञानं तर्कोऽपि वा यथा ॥१८॥
प्रवृत्तिर्वा निवृत्तिर्वा प्रायः संवेगसंश्रिता ।
महतां शक्तिस्रोतश्च संवेगेष्वेव मृग्यते ॥१६॥

## संवेगानां वर्गीकरणम्—

मूलप्रवृत्तिपरिच्छेदे मैगडूगलमतोदिताश्चतुर्दश मूलप्रवृत्तयः तत्सम्बद्धाश्चतुर्दश संवेगाश्च इत्थं दर्शिताः—

बुभुक्षामर्शो भीतिश्च विस्मयो रुदनासुखम् ।
संग्रहेच्छा घृणा चैव कृपा कामुकता तथा ॥२०॥
स्नेह एकाकितोत्साहः प्रसादश्चात्महीनता ।
मूलप्रवृत्तिसम्बद्धाः संवेगास्तु चतुर्दश ॥२१॥

मैगडूगलमते एते चतुर्दश संवेगा एव मुख्याः संवेगाः। एषां द्वयोर्बहूनां वा सम्मेलनादन्येऽपि केचन संवेगा जायन्ते। किन्तु तेषां मूलभूताश्चतुर्दश एव मुख्याः संवेगाः।

अन्यै विवेचकैः पुन पञ्चभागेषु संवेगानां वर्गीकरणं कृतम् । १ स्वार्थमयाः संवेगाः, २ पदार्थप्रधानाः संवेगाः ३ ज्ञानात्मकाः संवेगाः, ४ सौन्दर्यात्मकाः संवेगाः, ५ नैतिकाश्च संवेगाः । तत्र स्वार्थमयेषु भय-क्रोधाहंकारादयः समायान्ति। स्नेह-सम्मान-सहानुभूत्यादयश्च परार्थ-प्रधानेषु संवेगेषु सन्निविष्टा भवन्ति । विद्यानुरागसत्यपरायणतादयः संवेगा ज्ञानात्मकाः संवेगा उच्यन्ते। सौन्दर्यानुरागादयः सौन्दर्यात्मकेषु संवेगेषु गण्यन्ते । कर्तव्यपरायणता—दयालुता—ईश्वरभक्त्यादयश्च संवेगा नैतिकाः संवेगा उच्यन्ते । ततश्च सर्वेषां संवेगानामेषु पञ्चसु मुख्येषु संवेगेष्वन्तर्भावो भवति ।

काशीस्थेन विदुषा डा० भगवानदासेन 'इमोशन्स'नाम्नि स्वपुस्तके रागद्वेषौ द्वावेव मुख्यौ संवेगौ स्वीकृतौ । अन्ये सर्वेऽपि संवेगा राग-द्वेषयोः प्रपञ्चरूपा एव, न स्वतन्त्राः । रागद्वेषावेतौ ज्येष्ठे, कनिष्ठे, समे च भवत इति तयोस्त्रैविध्यम् । तत्र ज्येष्ठविषयकोऽनुरागो भक्तिः, श्रद्धा, सम्मानादिकं वोच्यते । समेऽनुरागो मैत्री, कामः, स्नेहो वा कथ्यते । कनिष्ठविषयकोऽनुरागश्च दया, सहानुभूतिः, वात्सल्यादिकं चाभिधीयते । एवं ज्येष्ठविषयको द्वेषः सम्भ्रमः, घृणा, भीरुता वा कथ्यते । समे द्वेषो वैरक्रोधादिपदैर्व्यवह्रियते । कनिष्ठद्वेषश्चाहंकारपदवाच्यो भवति । एवं रागद्वेषयोरयं षड्विधः प्रपञ्चो बहूनां संवेगानां जनको भवति । तेषामपि द्वयोर्बहूनां वा परस्परमिश्रणेनान्येऽपि भूयासः संवेगा निर्मीयन्त इति द्वयोरेव रागद्वेषयोः सर्वोऽपि संवेगसमूहः प्रपञ्चमात्रं भवति ।

तथा चायमत्र संग्रहः—

संवेगाः स्थायिभावा वा सम्बद्धा मूलवृत्तिभिः ।<br>मैग्डूगलमतेनात्र पूर्वमुक्ताश्चतुर्दश ॥२२॥<br>परार्थाः, स्वार्थसम्बद्धाः, नैतिका ,ज्ञानहेतवः ।<br>तथा सौन्दर्यसम्बद्धाः पञ्चवर्गाः कृताः परैः ॥२३॥<br>रागद्वेषौ तु द्वौ मुख्यौ संवेगावपरैर्मतौ ।<br>तन्मूला एव सर्वेऽपि संवेगा अपरै–र्मताः ॥२४॥<br>रागो वृद्धेषु सम्मानं भक्तिः श्रद्धादरस्तथा ।<br>समे स्नेहश्च मैत्री च कामो वा परिकीर्तितः ॥२५॥<br>कनिष्ठे चैव वात्सल्यं कृपा-प्रेमादिनामतः ।<br>नानासंवेगरूपेण राग एको हि दृश्यते ॥२६॥<br>एवं ज्येष्ठस्य विद्वेषे भय-सम्भ्रम-भीरुता ।<br>समे क्रोधश्च वैरश्च कनिष्ठेऽहंकृतिस्तथा ॥२७॥<br>एवं द्वेषस्य संवेगो नानारूपेषु दृश्यते ।<br>रागद्वेषौ ततो मुख्यौ, तत्प्रपञ्चः परो मतः ॥२८॥

## संवेगा व्यभिचारिभावाश्च—

मनोवैज्ञानिकैर्नव्यै—र्ये संवेगा उच्यन्ते तत्स्थाने भारतीये

साहित्यशास्त्रे व्यभिचारिणो भावाः प्रतिपादिताः सन्ति। ते च तत्र त्रयस्त्रिंशत्संख्याका व्यभिचारिणो भावाः श्रूयन्ते।

तथा चोक्तं काव्यप्रकाशकृता—

निर्वेद-ग्लानि-शंकाख्या-स्तथासूया-मद-श्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः॥
व्रीडा-चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।
मतिर्व्याधि-स्तथोन्मादस्तथा मरणमेव च॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥

**स्थायिभावाः—**

संवेगजन्याः स्थायिनोऽस्थायिनश्चेति द्विविधा मनोविकारा भवन्ति। तत्रास्थायिनो व्यभिचारिणो वा मनोविकारास्तरङ्गा उमङ्गाः वा उच्यन्ते। उपशान्तेऽपि संवेगे कञ्चित्कालं अनुस्वानसन्निभस्तत्प्रभावो बहिरप्यनुभूयते। मनश्चापि कञ्चित्कालं संवेगविनिर्मुक्तमपि संवेगापन्न-मिव भवति। तेन स्वल्पेऽप्युद्वेगनिमित्ते पुनर्लक्षितो भवति संवेगविकारः।

संवेगजन्याः स्थायिनो मनोविकाराः स्थायिभावा उच्यन्ते। यदा कश्चिदेक एव भावो मनसि चिरमवतिष्ठते भूयो भूयश्चोद्भवति तदा स स्थायितां प्रतिपद्यते। कमपि पुरुषविशेषं प्रति यदा क्रोधस्य भावः पुनः पुनरुदेति चिरं वा मनसि तिष्ठति तदा स तत्र वैरस्य स्थायिभावं जनयति। यदि कश्चिद्बालकं क्रियासमभिहारेण सन्त्रासयति तदा तम्प्रति बालके घृणा, स्थायिभावतां प्रतिपद्यते। एवं यदा कमपि पुरुषं, देशादि-कमचेतनं पदार्थं वा प्रति मनसि स्नेहभावना क्रियासमभिहारेणोदेति चिरं चावतिष्ठते तदा तत्र स स्नेहः स्थायिभावत्वं प्राप्नोति। एवमन्येऽपि संवेगाःस्थायिभावतां प्रतिपद्यन्ते। संवेग-स्थायिभावयोरयं विशेषो भवति—

१. संवेगा मनसः क्रियात्मिकावस्थाया द्योतका भवन्ति। स्थायि-भावाश्च न क्रियात्मकावस्थारूपाः किन्तु बह्वीनां क्रियाणां निमित्त-भूता भवन्ति।

२. संवेगस्य विषये सहजतयाऽऽशु च परिवर्तनं सम्भवति किन्तु स्थायिभावस्य विषयपरिवर्तनं सहजमाशु च न सम्भवति।

३. एकविधस्य संवेगस्य एकस्मिन्नेव स्थायिभावे सामर्थ्यं भवति। स्थायिभावो नैकविधान् संवेगानपि जनयति।

संवेग-स्थायिभावयोरयं त्रिविधो भेदो लक्ष्यते। एकः स्थायिभावो नैकविधान् संवेगानपि जनयतीति निम्नाङ्कितेनोदाहरणेन स्फुटी भवति। कस्यचित् पुरुषस्य मनसि स्वदेशस्नेहस्य स्थायिभावो विद्यते। ततश्च स यदा स्वदेशस्योन्नतिं पश्यति तदा प्रसन्नतामानन्दं चानुभवति। स एव यदा कदाचिद्विपद्ग्रस्तं देशमवलोकयति तदा दुःखं भयं चानुभवति। यदा कश्चिद्विदेशीयस्तत्सम्मुखे स्वदेशस्य निन्दां करोति तदा स्वदेशस्य निन्दां निशम्य स लज्जां क्रोधं चानुभवति। एवमेक एव स्थायिभावो नैकविधान् संवेगानुत्पादयति।

पूर्वं संवेगस्थायिभावयोर्भेदो न क्रियते स्म। शड्महोदयेन सर्वतः प्रागनयोर्भेदः प्रतिपादितः। राग-द्वेष-लज्जादयः संवेगा यदा क्वापि वस्तुविशेषे देशविशेषे वा केन्द्रिताः स्थिराश्च जायन्ते तदा त एव स्थायिभावतां प्रतिपद्यन्ते। कदाचिदेक एव संवेगः स्थायितां प्रतिपद्यते क्वचिच्च संवेगानां समूहो मिलितस्तत्र हेतुर्भवति। माता हि पुत्रस्य लालनं करोतीति तत्र बालकस्य स्नेह उत्पद्यते। सा हि विषमेषु तस्य रक्षां करोतीति तत्र कृतज्ञताभावोऽप्युद्भवति। सा चावसरे पुत्रस्य प्रशंसामपि करोति तेन पुत्रे आत्माभिमानादीनामनेकेषां संवेगानां व्यभिचारिभावनां वा संकरो भवति।

स्थायिभावाश्च जन्मजाता न भवन्ति। मूलप्रवृत्तय एव जन्मजाः प्रवृत्तयो भवन्ति। बाल्ये मूलप्रवृत्तिवशेनैव व्यवहाराणां नियमनं भवति। किन्तु प्रौढावस्थाया विविधाः स्थायिभावा निर्मिता भवन्ति। ततश्च त एव मुख्यतो जीवनव्यवहाराणां नियामका जायन्ते।

तथा चात्र संग्रहः—

मूलप्रवृत्तिसम्बद्धाः संवेगा ये उदीरिताः।<br>
त एव स्थायिनो भावाः स्थिताः क्वापि निरन्तरम्॥२९॥

पूर्वे भेदं न कुर्वन्ति संवेगस्थायिभावयोः ।
शडाह्वयेन विदुषा आदौ भेदोऽनयोः कृतः ॥३०॥

भूयोऽभ्यासवशात् क्वापि भावाः संचारिणो यदा ।
स्थैर्यं यान्ति तदा नूनं स्थायिभावास्तु ते मताः ॥३१॥

एक एव क्वचिद् भावः स्थायितां प्रतिपद्यते ।
क्वापि नैके च संवेगा मिलित्वा स्थायिनो मताः ॥३२॥

शैशवे मूलवृत्तीनां प्राधान्यं, स्थायिनः पुनः ।
तदुत्तरन्तु जायन्ते भवन्ति च नियामकाः ॥ ३३॥

संवेगास्तु क्रियारूपाः स्थायिनस्तत्र हेतवः ।
एते मुख्या मता भेदाः संवेगस्थायिभावयोः ॥३४॥

## स्थायिभावानामुत्पत्तिक्रमः—

संवेदनप्रकरणे इन्द्रियसंवेदनं भावसंवेदनं चेति द्विविधं संवेदनं प्रतिपादितम् । तत्रेन्द्रियसंवेदनं विषयस्योपस्थितावेव सम्भवति । आदौ बालानामिन्द्रियसंवेदनात्मकमेव ज्ञानं भवति । इयं हि मनोविकासस्याद्यावस्था । तत्र स्थायिभावानामुत्पत्ति-र्न भवति । ततश्च किञ्चित्कालानान्तरं मनोविकासस्य द्वितीयावस्था समायाति । अत्र च विषयाभावेऽपि तस्य विचारमात्रेणापि मनसि प्रतिक्रिया संजायते । विदेशे स्थितस्य जनस्य मातृभूमिस्मरणमात्रेण तद्विषयिणी स्नेहधारा सम्प्रवर्तते । इयमेव भावसंवेदननाम्ना व्यवह्रियते । सा चेन्द्रियसंवेदनापेक्षया समुत्कृष्टा, तदनन्तरभाविनी चावस्था स्थायिभावस्यावस्था भवति । नाद्यायां नापि द्वितीयायामवस्थायां स्थायिभावानां समुत्पत्तिः किन्त्वस्यामेव तृतीयायामवस्थायां स्थायिभावाः समुत्पद्यन्ते । तदुत्तरं च तुरीयायामवस्थायामात्मसम्मानस्य विशिष्टः स्थायिभावः समुदेति, भावस्य व्यक्तित्वं च निर्माति ।

## आत्मसम्मानस्य स्थायिभावः—

आत्मसम्मानस्य स्थायिभावो हि सर्वेषां स्थायिभावानामधिपतिः शासकश्च भवति । संवेदनजन्याः संवेगा यदा कस्यापि पदार्थस्य भावस्य

वा समन्तात् परिवृताः स्थिराश्च जायन्ते तदा तद्विषयकः स्थायिभावो निर्मीयत इति पूर्वमुक्तम्। यदा ते संवेगाः स्वात्माधिष्ठानां अहन्तां ममतां वावगाहन्ते तदात्मसम्मानस्य स्थायिभावः समुदेति। तदारभ्य सर्वेष्वपि मानवव्यवहारेषु स एव स्थायिभावो नियामको भवति। अस्य कार्यस्यानुष्ठाने मे लाभोऽलाभो वा कीर्तिर्निन्दा वा भविष्यतीति भावनैव तस्य कर्तव्यनिर्धारिका भवति। न चायं सर्वथा स्वार्थप्रधानमेव व्यवहारं प्रवर्त्यति किन्तु तदा परदृष्ट्यात्मविवेचनमपि शिक्षते जनः। अन्ये जना स्ततो यादृशीमाशां कुर्वन्ति तादृगेव कार्यमनुष्ठातुमपि प्रयतते। साक्षाद् दृष्टृभूतोऽपि च आत्मानं दृश्यमिव परिकल्प्य,लोका यथा तद्विषये विचारयन्ति स यथाशक्यं तादृशमेवादर्शं पालयितुं प्रयतते। अयमात्मसम्मानस्य स्थायिभाव एव तस्य चरित्रनिर्माणे व्यवहारे च प्रवर्तको भवति। यदा स कस्मिंश्चिदकार्ये समुद्युक्तो भवति तदा, मे मित्राणि, मे जनकौ, लोका वात्र किं वक्ष्यन्ति इति विचार्यैव ततो निवर्तते, इति तत्राप्यात्मसम्मानस्य स्थायिभाव एव प्रयोजको भवति। तस्मादयमात्मसम्मानस्य स्थायिभावः सर्वेषां स्थायिभावानां सम्राडित्युच्यते।

**विकृताः स्थायिभावाः—**

उचिता अनुचिताश्चेति द्विविधाः स्थायिभावा भवन्ति। तत्र येऽनुचितास्त एव विकृताः स्थायिभावा उच्यन्ते। ते च नैतिकधारणाविरोधिन एव भवन्ति। अत एव प्रायश्चेतनासमक्षं नायान्ति किन्त्वचेतने मनसि स्थिताः एव स्वव्यापारं कुर्वन्ति। तद्यथा पितृस्नेहस्य स्थायिभावो नैतिकः स्वाभाविकश्च भवति। किन्तु कस्यचिन्मनसि कस्मादपि कारणात् स्वपितृविषये वैरभावना सञ्जाता। सा नैतिकस्य स्थायिभावस्य विरोधिनीति सामान्यतः सर्वसमक्षं न दृश्यते। यस्य मनसि सा भावना भवति सोऽपि तां विस्पष्टं न प्रत्यभिजानाति। किन्तु सा मनसि ग्रन्थिमन्तर्द्वन्द्वं च जनयति। येन कदाचिद् व्यवहारे महत्काठिन्यमनुभूयते। यावत् ते ग्रन्थयो न मुच्यन्ते तावद्विवेकयुक्तो व्यवहारो दुःशक एव भवति। अनिच्छन्नपि दैवात् प्रेरित इव जनोऽकार्ये प्रवर्तते।

## भावनाग्रन्थयः—

कस्यापि व्यक्तिविशेषस्य वस्तुविशेषस्य वा सम्पर्के यदि सदैव तुल्याकारा एव संवेगा अनुभूयन्ते तदा तद्विषये विशिष्टः स्थायिभावो हृदयेऽङ्कितो भवतीति पूर्वमुक्तम्। ते स्थायिभावाः कदाचित् पुरुषस्य नैतिकधारणानुरूपा भवन्ति, कदाचिच्च तत्प्रतिकूला भवन्ति। तत्रानुकूलानां स्थायिभावानामङ्गीकरणे किमपि काठिन्यं न भवति किन्तु प्रतिकूलाः स्थायिभावाः सुखेनात्मसात् कर्तुं न शक्यन्त इति मनसि भावनाग्रन्थिमुत्पादयन्ति। एवं लोकाचारवैपरीत्यादन्यस्माद्वा कस्मादपि कारणाद्येषां भावानां बहिः प्रकाशनमनुचितं प्रतीयते, जनस्तेषां भावानां बलान्निग्रहं करोति। किन्तु निग्रहात् तेऽवचेतने मनस्यव्यक्तरूपेण निलीयन्ते न तु विनश्यन्ति। तेऽपि भावनाग्रन्थिं जनयन्ति। तेषां मनोग्रन्थीनां प्रभावो बहुधा मनुष्यस्य व्यवहारे दृश्यते। मनोग्रन्थयो हि कदाचिन्मानसान् शारीरान् वा रोगानुत्पादयन्ति। कदाचिच्चापराधे प्रवर्तयन्ति। मनोग्रन्थिजन्या रोगा अपराधाश्च मनोविश्लेषणविधिनैव सम्यक् चिकित्सिता भवन्ति, नान्यथा। मनोवैज्ञानिकश्चिकित्सकः पूर्वं मनोग्रन्थीनामनुसन्धानं करोति। ततश्च तत्स्वरूपं रोगिणः सम्मुखे प्रस्तौति। यदि च रोगी स्वरोगस्य मूलभूतं निदानमङ्गीकरोति तदा प्रायस्तस्य मनोग्रन्थिरुद्भिद्यते स च रोगमुक्तः सञ्जायते। अयं विधिः रेचनविधिरुच्यते। किन्तु कदाचिद्रेचनाविधिना कार्यं न भवति तदा होमरलेनमहोदयेन निर्दिष्टः पुनः शिक्षणविधिराश्रीयते। पुनः शिक्षणविधिना पुरुषस्य जीवनार्थविषये धारणासु च परिवर्तनं विधीयते। तत्परिवर्तनेन च तस्य सञ्चितशक्तेरुपयोगः सम्यक्तया कर्तुं शक्यते। अतो वैयक्तिकजीवनस्य सुधाराय मनोग्रन्थीनां परिज्ञानमनुसन्धानं चात्यन्तमावश्यकं भवति।

### प्रश्नाः

१—संवेगस्य किं लक्षणं स्वरूपं चेति निरूप्य तद्वैशिष्ट्यं प्रदर्शनीयम्।
२—संवेगानां जीवने शिक्षायां च क उपयोगः।
३—संवेगानां वर्गीकरणप्रकारः प्रदर्शनीयः।

## विंशः परिच्छेदः

# बुद्धिपरीक्षा

एवं मनोविज्ञानस्य मुख्येषु विषयेषु निरूपितेषु केचन नव्यतरास्तत्सम्बद्धा विषया अवशिष्यन्ते त इतः परं निरूप्यन्ते। तेषु बुद्धिपरीक्षापि महत्त्वपूर्णो विषयोऽस्ति। बुद्धिपरीक्षायाः क्रमः शर्मण्यदेशीयैर्मनोवैज्ञानिकैः प्रारब्धः। तेषु बुण्टमहोदयः प्रमुख आसीत्। प्रयोगशालासु विविधयन्त्राणां साहाय्येन यथा मानवानां भारवहनशक्तिर्मीयते तथैव यन्त्राणां साहाय्येन मानवानां संवेदनशक्ति-वैशिष्ट्यं मीयते स्म। यत्र च संवेदनशक्तेराधिक्यं भवति स एव बुद्धिमान् भवति। संवेदनशक्तिपरिमाणानुसारं बुद्धिपरिमाणं भवतीति तेषां प्रारम्भिकानां बुद्धिपरीक्षकाणां सिद्धान्त आसीत्। तद्यथा द्वयोः पदार्थयोः भारे वर्णे वातीव सूक्ष्मो भेदोऽस्ति। सामान्या जनास्तयोर्भारस्य वर्णस्य वा तारतम्यं ज्ञातुं न शक्नुवन्ति। किन्तु केचन विशिष्टाः प्रतिभाशालिन इन्द्रियपातमात्रेणापि तद्भेदमनुभवन्ति। अत एव ते सामान्यजनापेक्षया बुद्धिमन्तः कथ्यन्ते।

किञ्चित्कालानन्तरं 'संवेदनानुसारिणी बुद्धिः' इत्ययं बुण्टादीनां सिद्धान्त उपेक्षणीयः संजातः। बहवः प्रतिभाशालिनः पुरुषाः संवेदनशक्तिविषये मन्दाः, बहवो मन्दबुद्धयश्च पुरुषाः संवेदनविषये तीव्रा अप्युपलभ्यन्त इति संवेदनानुसारिणी बुद्धिरिति वक्तुं न शक्यते। अत एव बुद्धिपरीक्षायाःप्रत्नं सिद्धान्तमनादृत्य फ्रांसदेशीयेन डा० अलफ्रेड बिने महोदयेन १६०५ ईसवीये संवत्सरे बुद्धिपरीक्षाया नव्या सरणिराविष्कृता। बिने महोदयः 'पेरिस' नगरपालिकायाः चिकित्सकः आसीत्। मन्दबुद्धीनां छात्राणां शिक्षायाः पृथक् कश्चिद्विशिष्टः प्रबन्धः करणीय इत्ययं प्रश्नस्तदानीं नगरपालिकायाः समक्षे प्रस्तुत आसीत्। किन्तु मन्दबुद्धीनां परीक्षा कथं भवेदित्यत्र कश्चिदप्युपायो विस्पष्टो नासीदिति बुद्धिपरीक्षाप्रकारस्यावधारणविषये बिनेमहोदयो विशेषतो नियुक्तः। तेन च बुद्धिपरीक्षायाः सरणिरेकावधारिता। तत्रैव च संशोधनादिकं विधाय अन्या अपि काश्चन बुद्धिपरीक्षापद्धतय इदानीमुपलभ्यन्ते।

## बिने महोदयस्य बुद्धिपरीक्षाप्रकारः—

बिने महोदयेन वयःक्रमानुसारं बालकानां बुद्धिपरीक्षार्थं पञ्चशः प्रश्ना निर्धारिताः। त्रिवर्षदेशीयाः सामान्या बाला येषां प्रश्नानां समाधानं कर्तुं प्रभवन्ति तादृशाः षट् प्रश्नास्तेन निर्धारिताः। यो बालकस्तेषां समीचीनं समाधानं विदधाति स सामान्यबुद्धियुक्तो बालः। यस्तत्समाधानेऽसमर्थो भवति स मन्दबुद्धिरवधार्यते। यश्चोच्चतरां प्रश्नावलीं समाधातुं शक्नोति स तीव्रबुद्धिरित्येषा बिनेमहोदयस्य बुद्धिपरीक्षासरणिरासीत्। त्रिवर्षदेशीयाद्बालकादारभ्य मध्ये मध्ये च कञ्चिद्वयःक्रमं विहाय षोडशवर्षपर्यन्तानां बालकानां बुद्धिपरीक्षार्थं विभिन्ना प्रश्नास्तेन निर्धारिताः। तत्र केचन प्रश्ना निम्नांकिताः सन्ति।

### त्रिवर्षदेशीयानां बालानां कृते प्रश्नाः

१—स्व नासिकां, मुखं नेत्रे च दर्शय।

२—द्वयोः संख्ययोरावृत्तिः करणीया। तद्यथा ३७, ६४, ७२ इत्येतासां संख्यानामावृत्तिकरणे काचनैका संख्यावश्यं शुद्धा भवेत्।

३—स्वलिङ्गज्ञानं—बालिकासि त्वं बालको वा।

४—स्वनाम गोत्रं च कथय।

५—द्वयोश्चित्रयोः स्थितानां वस्तूनां नामानि कथय।

६—किञ्चिद्वस्तुत्रयं पुरो निधाय तन्नामजिज्ञासा करणीया

### चतुर्वर्षदेशीयानां बालानां कृते प्रश्नाः

१—शीतानुभवं बुभुक्षां च शब्दैः सूचय।

२—त्र्यंकयुतं संख्यात्रयमावृत्त्यर्थं देयम्। यथा २८४, ३७५, ५६४ इति संख्यात्रयस्यावृत्तिः करणीया। तत्रैका संख्यावश्यं शुद्धा भवेत्।

३—चत्वारोऽर्था गणनीयाः।

४—द्वयोः कीलयोर्लघुतरं दर्शय।

५—द्वयोश्चित्रयोः सुन्दरतरं दर्शय। युग्मत्रयमत्र दर्शनीयम्।

### पञ्चवर्षदेशीयानां बालानां कृते प्रश्नाः

१—अनुष्ठानाय युगपत्कार्यत्रयं देयम्। तद्यथा द्वारं पिधेहि, पुस्तकमानय, जलपात्रमपनय।

२—एकं समकोणचतुर्भुजचित्रं, तद् दृष्ट्वा चित्रान्तरनिर्माणाय देयम्।
३—दशपदयुक्तस्य वाक्यस्यावृत्तिः करणीया।
४—स्ववयःकथनम्।
५—प्रभातमध्याह्नयोर्भेदपरिज्ञानम्।
६—नील-पीत-हरितादीनां सामान्यवर्णानां परिज्ञानम्।
७—चतुरंकयुतानां संख्यानामावृत्तिः।
८—भारे स्वल्पान्तरस्य वस्तूनां युग्मत्रयस्य भारतारतम्यपरिज्ञानम्।

एवमन्येषां वयःक्रमाणां कृतेऽपि तेन प्रश्ना निर्धारिता आसन्। बिनेमहोदयस्यैतस्मिन् बुद्धिपरीक्षाप्रकारे त्रिविधं वैष्टयमासीत्। १ सहस्रशो बालानां परीक्षां कृत्वा तेनैते समीचीनाः प्रश्नाः निर्धारिता आसन। २ तत्प्रक्रियानुसारं बालकानां वास्तविकं, मानसं चेति द्विविधमायुः स्वीकृतं भवति। यो बाल उच्चतरावस्थाया बालानां कृते निर्धारितानां प्रश्नानां सम्यक् समाधानं कर्तुमर्हति स तीव्रबुद्धिराख्यायते। यश्च स्वावस्थानुरूपाणाम ष प्रश्नानामुत्तरं दातुमसमर्थः स मन्दबुद्धिराख्यायते। एवं मानसमायुर्वास्तविकादायुषो भिन्नमपि सम्भवति। उभयोरप्यायुषोस्तुलनया च बुद्धेर्मानं निर्धारितं भवति। ३ तेन विशिष्टा बुद्धिभेदा न विहिताः, बालकानां सामान्यबुद्धेः परीक्षार्थमेव तस्य प्रश्ना आसन्।

## बुद्धिपरीक्षाप्रकारस्य विकासः—

बिनेमहोदयस्य प्रयासमवलोक्यान्यैरपि मनोवैज्ञानिकै बुद्धिपरीक्षाविषये परीक्षणानि प्रारब्धानि। शर्मण्यदेशीयस्य विलयम स्टर्न महोदयस्य प्रेरणया बिने महोदयस्य सिद्धान्ते प्रथमं परिवर्तनं जातम्। तदनुसारं मानसिकस्यायुषः स्थाने बुद्ध्युपलब्धिसिद्धान्तः समायातः। मानसिके आयुषि वास्तविकेनायुषा विभाजिते सति बुद्ध्युपलब्धिरवाप्यते। सामान्यत उक्तपरीक्षासु दश वर्षदेशीयेन बालकेन ८० अङ्काः प्राप्तव्या भवन्ति। कदाचित्कश्चिदष्टवर्षदेशीयोऽपि बालो ८० अङ्कान् प्राप्नोति। तदा तस्य दशवर्षं मानसमायुः अष्टवर्षं च वास्तविकमायुर्भवति। वास्तविकेनायुषा मानसमायु-र्विभज्य शतेन गुणनं च विधाय

बुद्ध्युपलब्धिः $\frac{१०}{८} \times \frac{१००}{१} = १२५$ आप्यते । ततश्चायं बालकस्तीव्रबुद्धिराख्यायते। यदि कश्चिद् द्वादशवर्षदेशीयो बालकः परीक्षायां ८० अङ्कान् प्राप्नोति तदा तस्य वास्तविकमायुर्द्वादशवर्षं किन्तु मानसमायुर्दशवर्षमात्रमेव भवति। तथा च वास्तविकेनायुषा मानसिके आयुषि विभाजिते शतगुणे च कृते $\frac{१०}{१२} \times \frac{१००}{१} = ८३.३$ बुद्ध्युपलब्धिरवाप्यते । ततश्चायं बालको मन्दबुद्धिराख्यायते। अयं बुद्ध्युपलब्धिसिद्धान्तोऽभिधीयते। विलियम स्टर्न महोदयश्च शर्मण्यदेशीयोऽस्य सिद्धान्तस्य प्रवर्तकः। तदनुसारं बुद्ध्युपलब्धिभेदाद् बालकानां बुद्धिर्नवसु विभागेषु निम्नाङ्कितेन प्रकारेण विभक्ता भवति--

| ( बुद्ध्युपलब्धौ ) | ( बुद्धिप्रकारः ) |
|---|---|
| १४० तत ऊर्ध्वं वा बुद्ध्युपलब्धौ | प्रतिभाशाली बालको भवति |
| १२० तः १४० पर्यन्तं बुद्ध्युपलब्धौ | प्रखरबुद्धिर्बालकोऽभिधीयते । |
| ११० तः १२० पर्यन्तं बुद्ध्युपलब्धौ | तीव्रबुद्धिर्बालको भवति । |
| ९० तः ११० पर्यन्तं बुद्ध्युपलब्धौ | सामान्यबुद्धिर्बालको भवति । |
| ८० तः ९० पर्यन्तं बुद्ध्युपलब्धौ | मन्दबुद्धिर्बालको भवति । |
| ७० तः ८० पर्यन्तं बुद्ध्युपलब्धौ | निर्बलबुद्धिर्बालको भवति । |
| ५० तः ७० पर्यन्तं बुद्ध्युपलब्धौ | मूढो बालोऽभिधीमते । |
| २५ तः ५० पर्यन्तं बुद्ध्युपलब्धौ | मूर्खो बालोऽभिधीयते । |
| ० तः २५ पर्यन्तं बुद्ध्युपलब्धौ | जडो बालोऽभिधीयते । |

## बुद्धिपरीक्षायां टरमैनमहोदयस्य सुधारः—

बिने महोदयोत्तरं विलियम स्टर्नमहोदयेन प्रश्नानामुत्तरेष्वङ्कदानपद्धतिर्निर्धारितासीत्। तदनुसारमेव च पूर्वोक्तो बुद्ध्युपलब्धिसिद्धान्तो निर्धारितोऽभवत्। बिनेमहोदयस्य मूलसिद्धान्ते अङ्कदानपद्धतिर्नासीत्। स्टर्नमहोदयेन याङ्कदानपद्धतिराविष्कृता। तत्र यदि कश्चिद्बालक एकस्यां प्रश्नावल्यां द्वयोः प्रश्नयोरुत्तरं न ददाति तदा तत्र शून्यं लभते। ततश्च यदि बालकः प्रश्नावल्यां भाषाविषयाणां सर्वेषां प्रश्नानां समीचीन-

मुत्तरं ददाति किन्तु गणितविषयकयोर्द्वयोः प्रश्नयोरुत्तरं न ददाति तदा तत्र शून्यं लभते। भाषाविषयकाणां सर्वेषां प्रश्नानां समीचीनमुप्युत्तरं तत्र व्यर्थं भवति। इयमत्र सिद्धान्ते महती त्रुटिरासीत्। टरमैनमहोदयेन अत्र यथोचितं संशोधनं विहितम्। तेन तादृशी प्रश्नावली निर्मिता या एकैव प्रश्नावली सर्वेषां सवयस्कानां बालानां कृते पर्याप्ता भवति। प्रत्येकस्य प्रश्नस्य समुचित उत्तरे निर्धारिता अङ्का दीयन्ते। अनया प्रणाल्या परीक्षायां कस्मिंश्चिद्विषयविशेषे बालकानां विशिष्टा प्रवृत्तिरपि परीक्षिता भवति। ततश्चेयं समीचीनतरा प्रणाली प्रतीयते।

### टरमैन महोदयस्य बुद्धिपरीक्षापत्रम्

१—शरीरावयवानां संकेतनम्। यथा क्व ते नासिका, मुखं, हस्तौ नेत्रे वा।

२—परिचितवस्तूनां नामकथनम्। यथा—घटादिपदार्थदर्शने तन्ना-मकथनम्।

३—किमपि चित्रमवलोक्य तत्राङ्कितं वस्तुत्रयं नामतो निर्देश्यम्।

४—लिङ्गविवेकः। त्वं बालकोऽसि बालिका वा।

५—नामनिर्देशः। किन्ते नाम।

६—आवृत्तिः। अनुकरणरूपेण षण्णां सप्तानां वाङ्कानामावृत्तिः करणीया।

### चतुर्वर्षदेशीयानां बालकानां कृते प्रश्नाः

१—ह्रस्वदीर्घयोर्वस्तुनोस्तारतम्यपरिज्ञानम्।

२—आकृतिविवेकः एकस्य वृत्तस्यान्यस्य वा कस्यचिद्वस्तुनश्चित्रं दर्शयित्वा चित्रान्तरेषु तस्य वस्तुतः प्रत्यभिज्ञानम्।

३—चतुर्णां कार्षापणादीनां परिगणनम्।

४—एकस्य वर्गाकारस्याकृतिनिर्माणम्।

५—व्यावहारिकप्रश्नानां समाधानम्। यथा बुभुक्षायां शैत्ये वा त्वं किं प्रतिविधास्यसि।

६—अनुकरणरूपेण चतुर्णामङ्कानामावृत्तिः।

एवमन्येषामपि बालकानां कृते प्रश्नावली टरमैनमहोदयेन निर्मिता।

## सामूहिकी बुद्धिपरीक्षा—

बुद्धिपरीक्षापद्धतिः सर्वत पूर्वं फ्रांसदेशे आविष्कृताऽभवत्। किन्त्विदानीममरीकादेशे इगलैंडदेशे च तस्याः प्रचुरः प्रचारो दृश्यते। बिने महोदयस्याद्या परीक्षापद्धतिर्वैयक्तिकी पद्धतिरासीत्। तस्यां प्रत्येकस्य बालकस्य बुद्धिपरीक्षा पृथक्-पृथक् क्रियते स्म। किन्तु अमरीकादेशस्य मनोवैज्ञानिकैः सामूहिकी परीक्षापद्धतिराविष्कृतास्ति। तदनुसारं सहस्रशोऽपि बाला युगपदेव परीक्ष्यन्ते। सर्वेषां कृते तुल्यमेकमेव प्रश्नपत्रं दीयते। प्रत्येकस्य वयःक्रमस्य सामान्या अङ्का निर्धारिताः सन्ति। यो बालोऽत्र स्ववयःक्रमानुसारमङ्कान् लभते स सामान्यबुद्धिर्बालोऽभिधीयते। यः स्वावस्थोचिताङ्कापेक्षयाधिकानङ्कान् प्राप्नोति स तीव्रबुद्धिरभिधीयते। यश्च तदपेक्षया न्यूनानङ्कानवाप्नोति स मन्दबुद्धिश्चाभिधीयते।

विदेशेषु बुद्धिपरीक्षाया अयं क्रमोऽद्यापि विकासोन्मुखो दृश्यते। किन्तु भारते इयं पद्धतिः स्वल्पप्रचारैव दृश्यते।

## बुद्धेः स्वरूपम्—

बुद्धिपरीक्षायाः पूर्वोक्ता विविधा पद्धतयस्तु मनोवैज्ञानिकैराविष्कृताः सन्ति। किन्तु बुद्धेः स्वरूपविषये तेषामैकमत्यमद्यापि नावलोक्यते। बुद्धिः किं ज्ञानात्मिका शक्तिर्वर्तते किं वा क्रियात्मिका, किं वोभयात्मिका इत्यत्र विप्रतिपत्तयो विदुषां दृश्यन्ते। केषांचिन्मते मानवस्य ज्ञानात्मिका क्रियात्मिका च शक्तिः पृथक् कर्तुं न शक्यत इति मनुष्यस्य कार्यक्षमताऽपि तस्य बुद्धिमापने प्रमाणं भवति। यस्मिन् पुरुषे प्रचुरा कार्यक्षमता कार्ये उत्साहश्च भवति स तदनुपातेनैव बुद्धिमान् भवति। मैगडूगलमहोदयस्य मते बुद्धिः क्रियात्मिकैव शक्तिर्भवति। अन्येषां मते पुनः सा ज्ञानात्मिका शक्तिर्भवति।

बुद्धिस्वरूपविषये प्रकारान्तरेणापि विदुषां विवादो दृश्यते। केषांचिन्मते सा एकविधैव शक्तिरसङ्कीर्णा भवति। अन्येषां मते सा विविधानां शक्तीनां समूहेन निर्मिता भवति। केचिच्च योग्यताद्वयसम्मिश्रणेन बुद्धिर्निर्मीयत इत्यामनन्ति। बुद्धिरेकविधैव शक्तिरिति सामान्यानां लोकानां सिद्धान्तः। यत्र बुद्धिर्भवति स सर्वमपि कार्यजातं साधुतया करोति। यत्र च बुद्धिर्न भवति तस्य सर्वमपि कार्यजातं त्रुटिपूर्णं भवति। अस्मिन् सिद्धान्ते कुशलो गणितज्ञः, कुशलः कविरपि भवितुमर्हति। प्रतिभावान् पुरुषो यस्मिन् क्षेत्रेऽवतरति तत्रैव स्वबुद्धिवैभवं प्रदर्शयति।

अमरीकादेशस्थो मनोवैज्ञानिकः थार्नडाइकमहोदयः विविधानां शक्तीनां समूहमात्रं बुद्धिरिति प्रतिपादयति। एकः पुरुषः कस्मिंश्चित् कार्यविशेषे विषयविशेषे वा निपुण इति विषयान्तरेषु कार्यान्तरेष्वपि वा निपुणो भवेदिति नावश्यकम्। केचिदेकत्र निपुणा अप्यन्यत्र मन्दा दृश्यन्ते। गणिते दुर्बलोऽपि भाषायां मेधावी दृश्यते। अत एव बुद्धिर्विभिन्नप्रकाराणां शक्तीनां समूहमात्रं भवतीति थार्नडाइकमहोदयस्य सिद्धान्तः।

इङ्गलैंडदेशीयस्य चार्ल्स स्पीयरमैन महोदयस्य मते बुद्धौ सर्वत्रैव सामान्यविशेषात्मकं भागद्वयं भवति। यथा मानवानां स्वरूपे मानवमात्रानुगतं सामान्यं मनुष्यत्वमपि भवति। प्रातिस्विको विशेषश्चापि भवति। एवं बुद्धिविषयेऽपि भागद्वयं वेदितव्यम्। बुद्धेः सामान्योंऽशः कार्यमात्रे उपयुक्तो भवति। विशेषश्च भागो विशिष्टे विषये एव तस्य वैशिष्ट्यं द्योतयति। एवं बुद्धेः स्वरूपविषये विविधा विप्रतिपत्तयो दृश्यन्ते विदुषाम्।

## बुद्धिश्चरित्रं च—

बुद्धिचरित्रयोः सम्बन्धोऽपि मनोवैज्ञानिकानां कृते समस्यारूपेणैवावतिष्ठते। मनुष्यस्य बुद्धिस्तस्य चरित्रस्य सूचिका भवति न वा इत्यत्रापि विप्रतिपत्तयो दृश्यन्ते। केषांचिन्मते बुद्धिचरित्रयोर्न कश्चिदपि

सम्बन्धो भवति। बुद्धिर्हि जन्मजाता, शक्तिश्चरित्रं चार्जितो गुणः। प्रखरबुद्धयो दुश्चरित्रा मन्दबुद्धयश्च चरित्रवन्तो जना लोके बहुलमुपलभ्यन्ते। अतो बुद्धिचरित्रयोः कश्चिदपि सम्बन्धो न प्रतीयते। तद्विपरीतं अमरीकादेशे कारागृहस्थानामपराधिनां बुद्धिपरीक्षायां ८० प्रतिशतं बन्दिनो मन्दबुद्धयः प्राप्ताः। तेन बुद्धिमान्द्यस्य चरित्रहीनतायाश्च सम्बन्धः प्रतीयते। तदेवमुभयविधयोरुदाहरणयोर्दर्शनादस्मिन् विषये मनो वैज्ञानिकैरद्यावधि किमपि सुस्थिरं मतं न स्थापितम्।

तदयमत्र संक्षेपः—

बुद्धिर्ज्ञानात्मिका शक्तिः किं वा सास्ति क्रियात्मिका।
विषयेऽस्मिन् विवादो हि नव्यानां बहु दृश्यते॥ १॥
शक्तिरेकैव सा बुद्धिः शक्तीनां व्यूह एव वा।
इत्यत्रापि मतभेदो विदुषां बहु लक्ष्यते॥ २॥
विशिष्टे बुद्धियोगे किं चरित्रं दीप्यते न वा।
उभयत्रापि दृष्टान्ताः विषयोऽशक्यनिर्णयः॥ ३॥
एवं बुद्धिविषयेऽत्र पक्षा नैके समुत्थिताः।
मनोवैज्ञानिकैः किन्तु, न कश्चिदवधारितः॥ ४॥

## प्रश्नाः

१—बुद्धिपरीक्षायाः प्रकारः कस्मिन् देशे सर्वतः प्राक् केन चाविष्कृतः।

२—बिने महोदयस्य टरमैनमहोदयस्य च बुद्धिपरीक्षापद्धत्योः को भेदः।

३—बुद्ध्युपलब्धिपदेन किं गृह्यते? कश्च बुद्ध्युपलब्धिप्रकारः? सोदाहरणं दर्शय।

४—सामूहिकबुद्धिपरीक्षा कुत्राविष्कृता? कश्च तस्या विशिष्टः प्रकार उपयोगश्च।

५—बुद्धिस्वरूपविषये विदुषां का विप्रतिपत्तयः? कस्य च तत्र स्वकमभिमतम्।

६—बुद्धिचरित्रयोश्च कः सम्बन्धो भवतीति दर्शय।

## एकविंशः परिच्छेदः

# व्यक्तित्वम्

### व्यक्तित्वस्वरूपम्—

पुरुषस्य विशिष्टं स्वरूपं व्यक्तितत्वपदेन गृह्यते । तस्य शरीरं, मनश्चरित्रं, गुणा, अवगुणा वा सर्वेऽपि तत्र समाविष्टा भवन्ति । मानवानां मूलप्रवृत्तयः, संवेगाः, प्रत्यक्षज्ञानं कल्पना, स्मृतिः, बुद्धिः, विवेकश्चेति सर्वमपि तेषां व्यक्तित्वेऽन्तर्भवति । न केवलमेतावदेवापि तु पुरुषान्तरैः सह सम्बन्धा अपि तदन्तर्गता भवन्ति । वस्तुतः सामाजिकसम्पर्केणैव मानवस्य व्यक्तित्वं निर्मीयते विकसितं च भवतीति व्यक्तित्वे भूयान् सामाजिको भागो भवति ।

न केवलमुपर्युक्तानां मनोभावानां गुणानां वा समुच्चयमात्रं व्यक्तित्वं किन्तु तत्र तेषां सुव्यवस्थितं संगठनमेकीभावश्चापेक्षितो भवति । वयःक्रमानुरोधेन बालानां जन्मजाताः स्वभावा अनुभववशात्परिवर्तन्ते विकसिता वा भवन्ति । तदनुरूपमेव च तस्य व्यक्तित्वमपि विकसितं भवति । यथा यथा आयुरभिवर्धते तथा तथानुभवानामभिवृद्धिर्भवति । एतेषामनुभवानां व्यवस्थितं सङ्गठनमेकीभावश्चापि यथोत्तरं जायते । तेनैव व्यक्तित्वनिर्माणं भवति । यदा तु पुरुषस्य विभिन्नेष्वनुभवेषु संस्कारेषु च विरोधो भवति तस्य शक्तीनां च सङ्गठनं न भवति तदा तद्व्यक्तित्वमपि विच्छिन्नप्रायं भवति । व्यक्तित्वविच्छेदो हि मानसदौर्बल्यात्मकोऽव्यवस्थितो भावसन्निवेशः । व्यक्तितत्वविच्छेदे च मानवस्य सर्वस्वमपि विनष्टप्रायं जायते ।

### व्यक्तित्वस्याङ्गानि—

पुरुषस्य विविधानां शारीरिकशक्तीनां मानसशक्तीनां च सङ्गठनात्मकं व्यक्तितत्वं भवतीति पूर्वमुक्तम् । तदनुसारमिमानि व्यक्तित्वस्य मुख्यान्यंगानि भवन्ति—

१. पुरुषस्य स्वरूपम् ।

२. पुरुषस्य बुद्धिः ।

३. संवेगात्मकं जीवनम् ।
४. मानसं दार्ढ्यं चरित्रं च ।
५. सामाजिकत्वम् च ।

## पुरुषस्य स्वरूपम्—

पुरुषस्य देहरचना, वेषविन्यासादयश्च तस्य स्वरूपेऽन्तर्गता भवन्ति । कश्चित् दीर्घः कश्चिद्ह्रस्वः कश्चित्स्थूलः कश्चित् कृशः, कश्चिद् गौरः कश्चिच्च श्यामः पुरुषो भवति । सर्वोऽप्येषामान्तरो भेदः पुरुषस्य व्यक्तित्वे प्रभावमुत्पादयति । पुरुषः पुरुषान्तरैः सह आत्मनस्तुलनां करोति । सर्वत्रापि चात्मनो वैशिष्ट्यमेव च कामयते । कुतोऽपि हीनतात्मनस्तस्मै न रोचते । अत एव यदि तस्य किंचिदप्यंङ्गं विकृतमपरूपं वा भवति तर्हि तस्य मनसि तस्य विशिष्टः प्रभावो जायते । स आत्मनो हीनतामनुभवति । ततश्च तस्य मनसि आत्महीनता ग्रन्थिरुत्पद्यते । तद्वशाच्च तस्योद्वेगाः, चरित्रं बुद्ध्यादयश्च सर्वेऽपि विशेषरूपेण परिवर्तन्ते । य एकत्रात्मनो हीनतामनुभवति स विषयान्तर आत्मनो वैशिष्ट्यमाधातुं प्रयतते । ह्रस्वस्य पुंसो ध्वनिरुच्चैस्तरो भवति । काणाः पङ्गवश्च पराक्रमशालिनो भवन्ति । अन्धाः प्रायो गायनकुशला दृश्यन्ते । सर्वमपीदं विकृताङ्गनां वैशिष्ट्यं क्षतिपूर्तिसिद्धान्तमनुसृत्य प्रवर्तते ।

वेषभूषादिकमपि पुरुषस्य स्वरूपेऽन्तर्भवति । समुचितानि वस्त्राण्यपि पुरुषस्य व्यक्तितत्वनिर्माणे प्रभवन्ति । लघीयांसः कुरूपाश्चापि सैनिका रक्षिणो वा गणवेशधारणे प्रभावशालिनः प्रतीयन्ते । एवं सुन्दरा समुन्नताश्चपि पुरुषाः समुचितवेषविन्यासाद्यभावे प्रभावहीना दृश्यन्ते । अत एव जनो यदा समाजे गच्छति तदा सुन्दराणि वस्त्राणि परिदधाति । वस्त्रवशादश्रीकोऽपि सुश्रीकः प्रतीयते । अत एवाभियुक्तैरुच्यते—

> किं वाससैवं न विचारणीयं, वासः प्रधानं खलु योग्यतायाः ।
> पीताम्बरं वीक्ष्य ददौ तनूजां, दिगम्बरं वीक्ष्य विषं समुद्रः ॥

न केवलं शरीरं वेषविन्यासादिकमेव वा पुरुषस्य सुन्दरं व्यक्तित्वं प्रदर्शयति किन्तु तस्य भाषणभङ्गी व्यवहारपद्धतिश्चापि तत्र निमित्तता-

मुपयाति । ये जनाः शरीरतोऽसुन्दरा भवन्ति तेऽपि भाषणभङ्ग्या व्यवहारपद्धत्या च समाजे प्रियतरा जायन्ते । तेषां भाषणं व्यवहारादिकं च तेषामपरूपतामाच्छादयति, तथा वा परिवर्तयति यथापरूपतापि तेषां मनोहारिणी जायते । अपरूपोऽपि मधुरभाषी शीलवांश्च पुरुषो दम्भिनः कटुभाषिणश्चाधिकः प्रियो भवति जनानाम् ।

## बुद्धिः—

पुरुषस्य व्यक्तित्वे तत्स्वरूपापेक्षया बुद्धेर्महत्त्वतधिकं भवति । तस्य ज्ञान बुद्ध्यनुरूपं भवति । तस्याभिरुचिरपि बुद्ध्यनुसारिणी भवति । यो जनो यं विषयं बुद्धिदोषाज् ज्ञातुं न शक्नोति तत्र तस्याभिरुचिरपि न जायते । अतो मनोविकासोऽपि बुद्धिमेवापेक्षते । मन्दबुद्धयो जनाश्चरित्रनिर्माणे तथा न प्रभवन्ति यथा तीव्रबुद्धयः । यो जनः दुराचारस्य दुष्परिणामं सदाचारस्य च सुपरिणामं सम्यक्तया विजानाति स एव स्वज्ञानानुसारमाचारं व्यवहारं च विधाय आत्मनश्चरित्रनिर्माणे साफल्यमधिगच्छति । मन्दबुद्धीनां सदाचरणे दण्डभयं प्रोत्साहनं वा हेतुर्भवति किन्तु सुधियां सच्चरित्रं विवेकाश्रितं भवति । देहरचनावद् बुद्धिरपि जन्मजातैव भवति । जन्मतो मन्दबुद्धिस्तीव्रबुद्धिर्वा पुरुषः प्रौढावस्थायामपि तथैवावतिष्ठते किन्त्वभ्यासवशेन तस्योपयोगितायां परिवर्तनं सञ्जायते ।

पुरुषस्य संवेगाः सामाजिका व्यवहाराश्चापि बुद्धिप्रभाविता भवन्ति । चिन्तनशीलाः पुरुषाः सामान्यतः संवेगाभिभूता न भवन्ति । चिन्तनसंवेगयोः शाश्वतिको विरोधो भवति । एकस्याभिवृद्धिरपरस्य न्यूनतासम्पादिनी भवति । समाजिकव्यवहाराणां सञ्चालनेऽपि बुद्धिरेव प्रभवति । अत एव पुरुषस्य व्यक्तित्वनिर्माणे बुद्धेरतीवमहत्त्वपूर्णं स्थानं भवति ।

## संवेगाः—

संवेगा मनुष्यस्य व्यक्तित्वनिर्माणे महत्त्वपूर्णाः सन्ति । मनोवैज्ञानिकैः संवेगदृष्ट्या पुरुषाणां चतुर्धा विभागः कृतोऽस्ति । १. केचित्

प्रफुल्लाः, २ केचिदुदासाः, ३ केचित् क्रोधशीलाः, ४ केचिच्च चञ्चलाः इति संवेगानुरोधेन चतुर्विधाः पुरुषाः दृश्यन्ते। सर्वेऽप्येते विकृताः समाजेऽवांछनीयाश्च भवन्ति। तथापि तेषु प्रफुल्लः, प्रशस्यो भवति। प्रफुल्लः पुरुषः सदैव प्रसन्नवदन. परिहासपेशलश्च भवति। किन्तु तत्र गाम्भीर्यं न भवति। स कस्यापि कार्यस्योत्तरदायित्वं सम्यङ् निर्वोढुं न शक्नोति। स कस्यामपि परिस्थितौ नैराश्यात्मकं पक्षं न विचारयति सर्वत्रापि साफल्यमेव परिकल्पयति। किन्तु वस्तुतोऽयथार्थेयं विचारपद्धतिः। सुखं दुःखं साफल्यमसाफल्यं च सर्वमप्यत्र स्वाभाविकम्। तत्रैकतरं पक्षमुपेत्य प्रवर्तमानो यथार्थवादी न भवति। प्रफुल्लः पुरुष आशावादस्य परां काष्ठामध्यास्ते। तस्यायमाशावादातिरेक एव तस्यासाफल्यप्रयोजको जायते।

प्रफुल्लस्वभावाद्विपरीत उदासः स्वभावो भवति। प्रफुल्लस्वभावः पुरुषः यथा सर्वत्र आशां सफलतां च पश्यति तथैवोदासस्वभावः पुरुषः सर्वत्र नैराश्यमसाफल्यं च विलोकयति। दुःखेनाभिभूतं भविष्यतीति बुद्धया स उपनतं सुखमपि सम्यङ् नोपभुंक्ते। दुःखं तु दुःखं भवत्येव किन्तु सुखमपि तत्कृते दुःखमेव सम्पद्यते। एवंविधः पुरुषो यदि विवेकेन परिचालितो भवति तदा तत्त्वज्ञः सञ्जायते। 'परिणाम-ताप-संस्कारदुःखै गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति योग-सूत्रं ( योगदर्शन २, १५ ) वैराग्यवतां योगिनां विवेकमूलां सुखेऽपि दुःखभावनामुपदिशति। किन्तु विवेकाभावे तादृशाः पुरुषा निष्क्रिया जायन्ते। आत्मनो जीवनमपि भाराय मन्यन्ते। आत्मघातादावपि च प्रवर्तन्ते।

क्रोधशीलः पुरुषः स्वभावतः कर्कशो भवति। स कदापि शान्तं न व्यवहरति। सदैवान्यैः सह कलहायते। यदान्यत्र न प्रभवति पुरुषान्तरं वा कलहाय नाप्नोति तदा स्वीयेष्वेव कलहं प्रवर्तयति। क्रोधातिरेके आत्मनो वक्षस्ताडनं शिरोविधूननं वा विधत्ते। क्रोध आत्मनो दुःखायैव कल्पते न सुखाय। स यथा परेषां वैरी सञ्जायते एवमात्मनैवात्मनोऽपि रिपुः सञ्जायत इति स्वजीवनं स्वयमेव दुःखाकरोति।

चञ्चलस्वभावः पुरुषश्चिरमेकस्यां स्थितौ न तिष्ठति। 'क्षणे रुष्टः

क्षणे तुष्टः रुष्टः तुष्टः क्षणे क्षणे' एवं प्रतिक्षणं चलायमानः स कदापि स्थिरं सुखं नावाप्नोति। स किमपि कार्यं धैर्येण सम्पादयितुं न शक्नोति।

## युङ्गमहोदयस्य मतम्—

डा० युङ्गमहोदयेन अन्तर्मुखा बहिर्मुखाश्चेति द्विविधाः पुरुषा निर्धारिताः। बहिर्मुखः पुरुषः सदैव विषयासक्तो वाह्यविषयानेव चिन्तयति। सदा जनसम्पर्क एव तस्मै रोचते। क्षणमप्येकाकितया स्थातुं न शक्नोति। भोजने, भ्रमणे, अध्ययने सर्वत्रापि स अन्येषां साहचर्यमपेक्षते। तत्र नेतृत्वभावना प्रबला भवति। तद्वशादेव स सर्वेष्वपि कार्येषु हस्तक्षेपं करोति, असाफल्यमनुभूयापि च तत्र पुनः पुनः प्रवर्तते।

अन्तर्मुखाः पुरुषास्तद्विपरीता एव भवन्ति। अन्तर्मुखः पुरुषो विषयाद्‌द्विजते, जनसम्पर्कस्तस्मै न रोचते, एकाकितामेव कामयते। सभायां प्रायो न गच्छति गत्वा च क्वचित् पश्चाद्भाग एवोपविशति यथाशीघ्रं च ततो निर्गन्तुं समीहते। एतेषु कार्येषु तस्य यावान् समयो व्यत्येति स तस्य वन्ध्यतामेव समर्थयति। एवं विधस्य पुरुषस्य नैकानि मित्राणि न भवन्ति। येऽपि भवन्ति तेषामपि प्रसादने स सचेष्टो न भवति। अत एव तेऽपि प्रायस्ततोऽसन्तुष्टा जायन्ते।

बहिर्मुखः पुरुषो व्यवहारकुशलो भवति तस्मात्समाजे समुचितं स्थानं प्राप्नोति। तद्विपरीतमन्तर्मुखो न व्यवहारकौशलं जानाति नापि तस्य समाजे तादृशः समादरो भवति। उभयोरप्यनयोः पुरुषयोः प्रत्यभिज्ञानं धनोपार्जने विवाहकार्ये च भवति। बहिर्मुखः सदैव धनोपार्जने सचेष्टो भवति। विवाहसम्बन्धे चापरिमेयमानन्दमनुभवति। विवाहं विनापि बह्वीषु कामिनीषु तस्य प्रवृत्तिर्दृश्यते। अन्तर्मुखश्च धनार्जनाय तथा सस्पृहो न भवति स्त्रीभ्यश्च बिभेति। गृहस्थजीवनं प्रायस्तस्मै न रोचते। न केवलं भारते किन्तु पाश्चात्यदेशेष्वपि प्रमुखा दार्शनिकाः प्रायो अविवाहिता एवासन्। प्लैटो, स्पिनोजा, कान्ट, शोपनहार, निट्शे स्पेन्सरादयः पाश्चात्याः प्रमुखा दार्शनिका अविवाहिता एवासन्।

अन्तर्मुखा बहिर्मुखाश्च द्विविधा अपि पुरुषाः, भावप्रधाना विचारप्रधानाश्चेति पुनरपि द्विविधा भवितुमर्हन्ति । तदेवं चतुर्विधाः पुरुषाः सञ्जाताः—

१ भावप्रधाना बहिर्मुखाः ।
२ विचारप्रधाना बहिर्मुखाः
३ भावप्रधाना अन्तर्मुखाः
४ विचारप्रधाना अन्तर्मुखाः ।

यद्यपि भावविचारौ विरुद्धस्वभावौ गुणौ भवतः । भावस्यातिरेके विचारो विलीयते । विचारप्राधान्ये च भावो न भवति । तथापि सर्वेष्वपि पुरुषेषूभयोः सम्बन्धो भवत्येव । किन्तु विपरीतस्य गुणस्य तत्र दमनं विधीयते ।

विचारप्रधाना बहिर्मुखाः पुरुषा अपि द्विविधा भवन्ति । एकस्य विचारस्तर्काश्रितो भवति परस्य चार्षदृष्टिसमाश्रितो भवति । तर्के बाह्यानुभवाश्रितानां हेतूनां व्याप्तीनां चोपोद्वलनं भवति । प्राड्विवाकादीनां गणना तादृशेषु विधीयते । आर्षदृष्टिसमाश्रिता बहिर्मुखाः पुरुषास्तर्कसमाश्रयेण विचारे न प्रवर्तन्ते किन्तु तत्रान्तःप्रेरणामेव प्रमाणयन्ति । देशस्य नेतारः प्राय एवं विधाः पुरुषा एव भवन्ति । यद्यपि तेषां निर्णया आध्यात्मिकविषयैः सम्बद्धा न भवन्ति किन्तु बाह्यविषयसम्बद्धा एव भवन्ति । तथापि तत्र तर्कस्थानेऽन्तः प्रेरणा दैवी शक्तिरेव वा प्रमाणं भवति । गान्धिमहोदयः प्रमुखेष्ववसरेषु तामेवान्तःप्रेरणामाश्रित्य महत्त्वपूर्णान् निश्चयानकरोत् । हिटलरोऽपि विषमेष्ववसरेषु तामेव दैवीप्रेरणां शरणीकरोति स्म ।

भावप्रधाना बहिर्मुखाः पुरुषा भावानां संवेगानां वा समाश्रयेणैव कार्येषु प्रवर्तन्ते । स्त्रीषु प्रायो भावानां संवेगानां वा प्राबल्यं भवति। बालानां पालनादिकं स्त्रीणां मुख्यं कार्यं तत्र च स्नेह-दयादीनां संवेगानां प्रचुरं प्रयोजनं भवतीति वेधसा भावप्रधानमेव स्त्रीणां चित्तं विनिर्मितम् । भावप्राधान्यादेव स्त्रीणामविश्वसनीयता प्राचीनैर्विद्वद्भिर्नवीनैश्च मनोवैज्ञानिकैस्तुल्यरूपेणाभ्युपेयते । राजनीतिसदृशे गोप्ये कर्मणि स्त्रीणां सहयोगो नाभिनन्द्यते । तन्मुखेन गुप्तानामपि मन्त्राणां भेदोऽतीव सुलभो भवति ।

बहिर्मुखानां भावप्रधानानां पुरुषाणां बाह्येषु सामाजिकेषु कार्येषु चातिशयाभिरुचिर्भवतीति तत्र परोपकारभावप्राधान्यमनुमीयते। किन्तु तेषां बाह्यं मनो यथा परोपकारप्रवणं प्रतीयते तथैव तेषामदृश्यमन्तः करणं स्वार्थप्रधानं भवति। बाह्यरूपेण स आत्मविषये न किमपि चिन्तयति। किन्तु स्वयमजानन्नपि स्वार्थपरायणो भवति। 'न वै परस्य कामाय परः प्रियो भवति,आत्मनस्तु कामाय सर्वः प्रियो भवतीति'न्यायेन स्वार्थमनिच्छतोऽपि तस्यात्मख्यापनार्था व्यापाराःस्वार्थतयैव परिणमन्ति।

अन्तर्मुखा विचारप्राधानाः, अन्तर्मुखा भावधानाश्च पुरुषास्तद्विपरीता भवन्ति। अन्तर्मुखो विचारप्रधानः पुरुष एकान्तप्रिय आध्यात्मिकचिन्तपरश्च भवतीति स्वार्थमय इव प्रतीयते किन्त्वदृश्येऽन्तः करणे स परार्थप्रधान एव भवति न स्वार्थप्रधानः। बहिर्मुखः परोपकारिणभिवात्मानं प्रकाशयति। अन्तर्मुखश्च परोपकारं कुर्वन्नपि तत्प्रकाशनादपरज्यते। स स्वसमयोस्योपयोगमध्ययने चिन्तने च करोति। तादृशा एव पुरुषाः,प्रायेण दार्शनिका भवन्ति।

अन्तर्मुखा विचारप्रधाना अपि तर्काश्रिता आर्षज्ञानाश्रिता श्चेति द्विविधा भवन्ति। तत्र तर्काश्रिता अन्तर्मुखा विचारप्रधाना दार्शनिकाः, आर्षज्ञानाश्रिता विचारप्रधाना अन्तर्मुखाश्च ऋषयः सन्तश्च भवन्ति।

अन्तर्मुखा भावप्रधानाश्च प्रायः स्वदुःखेन परदुःखेन च दुःखिता भवन्ति किन्तु तस्य प्रतीकाराय सचेष्टा न भवन्ति। तेषां निश्चया नैराश्यपूर्णा भवन्ति। कवयः प्रायोऽस्यां श्रेण्यां समायान्ति। तेषु भावानां प्राधान्यं भवति। ते एकान्तप्रियाः सामाजिके व्यवहारे च अकुशला शिथिलाश्च भवन्ति। परिचितैरेव मित्रैः सह तेषां सम्बन्धो भवति। यदा विस्तीर्णे सामाजिकक्षेत्रे समायान्ति तदा तेषां व्यवहाराकौशलं स्फुटी भवति। भावावेशे प्रायस्तथा व्यवहरन्ति येन लोके तेषामादरः शिथिलतामेति। एवं विधाः पुरुषा वञ्चकैः सरलतया वञ्चयितुं शक्यन्ते। कस्यापि कारुण्यमयीं कथां श्रुत्वा सपद्येव द्रवीभवति तेषां हृदयम्। तत्कष्टनिवारणाय च सर्वस्वमपि दातुं प्रवर्तन्ते। किन्तु बाह्यक्रियासु तेषामभिरुचिर्न

भवतीति तेषामयमुत्साहश्चिरं नावतिष्ठते । एतादृशाः पुरुषा एव भक्ति-मार्गस्य निर्मापका भवन्ति ।

महाकवयो भावप्रधाना दिव्यदृष्टियुक्ता अन्तर्मुखाश्च भवन्ति भावातिरेकं विना कवित्वं न सम्भवति । दिव्यदृष्टिं विना च ज्ञानं न सम्भवतीति तत्र भावप्राधान्यं दिव्यदृष्टिश्चेत्युभयमपेक्षितं भवति । वाल्मीकि-व्यास-कालिदाससदृशा महाकवयो दिव्यदृष्टिमन्तो भाव-प्रधानाश्च विलोक्यन्ते । पाश्चात्येषु कविषु शेक्सपियर-प्रभृतयोऽपि तादृशा एव दिव्यदृष्टिभावनासमन्विताः प्रतीयन्ते ।

तदयमत्र संक्षेपः—

मानवस्य स्वरूपं च बुद्धिः संवेगभावनाः ।
मनोबलं चरित्रं च वृत्तिः सामाजिकी तथा ॥१॥
मिलितं सर्वमप्येतद् व्यक्तित्वमिति गीयते ।
व्यक्तित्वस्य बलेनैव जन आद्रियते सदा ॥२॥
प्रफुल्लाः कोपनाश्चैव उदासाश्चञ्चलास्तथा ।
संवेगदृशा पुरुषाः चतुर्धा सम्प्रकीर्तिताः ॥३॥
अन्त-र्बहिर्मुखत्वेन विभागो द्विविधः पुनः ।
विचार-भावप्राधान्याच्चातुर्विध्यमुपैति च ॥४॥

## प्रश्न

१—व्यक्तित्वस्य किं स्वरूपमिति निरूपणीयम् ?

२—व्यक्तित्वस्य कान्यङ्गानि ? कथं च तेषां जीवने उपयोगः ।

३—संवेगदृष्ट्या मानवानां के भेदाः प्रतिपादिताः ? संवेगयुताः पुरुषाः कथं प्रत्यभिज्ञायन्ते ? कथं वा समाजे वांछनीया भवन्ति ।

४—अन्तर्मुखबहिर्मुखभेदेन युङ्गमहोदयेन यो भेदः पुरुषाणां प्रति-पादितस्तं सविस्तरं [illegible]र्श ।

द्वाविंशः परिच्छेदः

# इतिवृत्तम्

पाश्चात्यदर्शनस्याद्यः समुद्भवो यूनानदेशे सञ्जातः। यूनानदेशोद्भूतः सुकरात-महोदयश्च तस्य पितामहः कीर्त्यते। यद्यपि सुकरातात् पूर्वमपि केचन दार्शनिका विचारा यूनानदेशे प्रचलिता आसन् तथापि तेषां विशिष्टं महत्त्वं नास्तीति सुक़रात एव पाश्चात्यदर्शनस्य प्रवर्तकः स्वीक्रियते। खीष्टात् पूर्वं पञ्चमे शते (४६६-३६६ बी० सी०) सुक़रातस्य जन्म सञ्जातम्। स लोकोत्तरस्तार्किक आसीत्। तर्कसमाश्रयेणासौ लोकान् पथभ्रष्टान् करोतीति निर्धार्य शासकैस्तत्कृते मृत्युदण्डोऽवधारितः। विषपानेन घातितश्च। तस्याभियोगो मृत्युश्च [ट्रायल-एण्ड डेथ आफ़ साक्रटीज़] इत्याख्यके ग्रन्थे तस्य सविस्तरं वर्णनमुपलभ्यते। तत्रैव च तद्विचाराणां सिद्धान्तानां चापि सम्वादरूपेण वर्णनं समुपलभ्यते। तत्रैव पुस्तके १४८ पृष्ठे नित्यस्यात्मनः सत्ता परमात्मनः सत्ता परलोकादिसत्ता च प्रतिपादिताऽस्ति। सुक़रातात् पूर्वं षष्ठशते यूनानदेशे देहाद् व्यतिरिक्तस्यात्मनः सत्ता न स्वीक्रियते स्म। तस्मिन् काले इन्द्रियाण्येव ज्ञानग्राहकाणि मन्यन्ते स्म। तदुत्तरं च तत्रात्मनः स्वतन्त्रा सत्तापि तत्रत्यैर्दार्शनिकैरवधारिता। ततश्च ज्ञानकर्तृत्वमिन्द्रियाणि विहाय आत्मन्युपसंक्रान्तम्। इन्द्रियाणां च ज्ञानसाधनत्वमायातम्। ततश्च सुक़रातमते नित्यस्यात्मनः प्रतिपादनादिकं स्पष्टमुपलभ्यते। एवं यूनानदेशे आत्मवादसमुत्थानसमकालमेव मनोविज्ञानस्य बीजारोपणं सञ्जातम्। अन्तःप्रेक्षणं च सुक़रातमते ज्ञानस्य प्रधानं साधनमासीत।

तदयमत्र संग्रहः —

मनोविज्ञाननाम्नाद्य शास्त्रं यत्तु निगद्यते।
मूलतस्तु तदेवासी-दध्यात्मदर्शनं पुरा ॥१॥
साइकालोजीति शब्दोऽप्यात्मविज्ञानबोधकः।
मनोविज्ञानशब्देना-नुवादोऽस्याभिमेदतः ॥२॥

पाश्चात्यदर्शने ख्यातः सुकरातः पितामहः ।
खीष्टात् पूर्वन्तु सञ्जातो यूनाने पञ्चमे शते ॥३॥
तस्याभियोगो मृत्युश्च नाम्ना ख्याते तु पुस्तके ।
संवादरूपेणैवास्य विचारा व्यक्ततां गताः ॥४॥
जीवात्मा,त्वपरो नित्यः शुद्धो बुद्धोऽमलः शुचिः ।
प्रेत्य याति परं लोकं ज्ञानरूपं परेश्वरम् ॥५॥
विज्ञानाय मनोवृत्तेरन्तःप्रेक्षणमेव सः ।
उपायं दर्शयाभास चिरं सोऽनुमतः परैः ॥६॥

**प्लैटोमहोदयस्याभिमतम—**

अफलातूननाम्ना विख्यातः प्लैटोमहोदयः सुकरातस्य प्रथितः शिष्य आसीत् । तेनापि मनोविज्ञानेविषये केचन सिद्धान्ताः स्थापिताः सन्ति । १ पोषणं २ अनुभूतिः, ३ बुद्धिपूर्विका क्रिया चेति त्रिविधा आत्मनः क्रियास्तेन निर्धारिताः । तत्र पोषणक्रिया केवलं स्थावरेष्वपि विद्यते किन्तु अनुभूति-बुद्धिपूर्विका क्रिया च तत्र नास्ति । पशुषु पोषणमनुभूतिश्चेति द्विविधा क्रिया उपलभ्यते किन्तु बुद्धिपूर्विका क्रिया तत्रापि नास्ति । मानवेषु त्रिविधापि क्रिया दृश्यत इति मानवाः सर्वेषां प्राणिनां श्रेष्ठतमाः । ततः पोषणानुभूतिरूपक्रियाद्वयेन युक्ताः पशवो मानवापेक्षया अवरा भवन्ति । केवलया पोषणक्रियया युक्ताः स्थावराश्च प्राणिनामधमा भवन्ति । एवं अफलातूनमते स्थावरेष्वप्यात्मा विद्यते । तेन मनोविज्ञानविषये कश्चिदपि ग्रन्थो न लिखितः किन्तु तस्यान्येषु ग्रन्थेषु तस्य-विचाराः सिद्धान्ताश्चोपलभ्यन्ते । खीष्टात् पूर्वं ४२६ तः ३४७ पर्यन्तं तस्य काल आसीत् ।

तथा चायमत्र संग्रहः—

पोषणमनुभूतिश्च क्रिया च बुद्धिपूर्विका ।
प्लैठोनाम्नास्य शिष्येण जीववृत्तिस्त्रिधा कृता ॥७॥
पोषणं स्थावरेष्वेकं सानुभूति पशौ द्वयम् ।
बुद्धिपूर्वा क्रिया चेति मानवेषु त्रयं तु तत् ॥८॥
अत एव त्रिभिर्युक्ता मानवा उत्तमाः स्मृताः ।
मध्यमाः पशवश्चैव स्थावराश्चाधमाः मताः ॥९॥

## अरस्तुमहोदयः [ ३८४–३२२ खी० पू० ]—

अरस्तुमहोदयोऽपि यूनानदेशस्य प्रसिद्धो दार्शनिको विद्यते। मनोविज्ञानशास्त्रविषये च तस्य सातिशं वैशिष्ट्यं प्रतीयते। वैज्ञानिकेन रूपेण तेनैव मनोविज्ञानस्य निरूपणं प्रारब्धम्। 'डी एनिमा' नामकस्तस्य प्रथितो ग्रन्थो वस्तुतो मनोविज्ञानस्यैव ग्रन्थोऽस्ति। तदनन्तरं अष्टादश शतकं यावत् तत्र प्रतिपादिताः सिद्धान्ता एव योरोपे मनोविज्ञानसिद्धान्तरूपेण सर्वत्र प्रचलिता आसन्। विद्यालयेषु च साभिनिवेशं पाठ्यन्ते स्म। प्लैटोमहोदयस्य मते मस्तिष्कं ज्ञानस्य केन्द्रस्थानमासीत्। किन्तु अरस्तुमहोदयेन मस्तिष्कस्य केन्द्रतां विहाय हृदयस्य ज्ञानकेन्द्रत्वं स्थापितम्। रुधिरवाहिनीषु धमनीषु 'न्यूमा' नामको वायुविशेषो जीवनाधायक आसीदिति रुधिरस्य केन्द्रस्थानं हृदयमेव ज्ञानस्यापि केन्द्रस्थानमासीत् तन्मते। 'यून्मा'-द्वारेणैव सर्वमपि ज्ञानं जायते तन्मते। पदार्थेभ्यो गतिविशेष उद्भवति स च 'डायोफेनस'नामकेन माध्यमेन नेत्रदेशस्थेन न्यूमा-नामकेन वायुना संयुक्तः पदार्थस्य चाक्षुषं ज्ञानं जनयति। एवं श्रावणादिज्ञानमपि ततद्देशस्थेन न्यूमा-नामकेन वायुना सह शब्दादिगुणीनां सम्बन्धाद् भवतीति तन्मतम्।

अरस्तुमते यद्यपि ज्ञानस्य केन्द्रस्थानं हृदयमस्ति तथापि हृदयव्यतिरिक्त आत्मैव ज्ञानस्याश्रयोऽस्ति। एवमन्येषामपि गुणानामाश्रय आत्मैवेति ज्ञानादयो विशिष्टा गुणाः शक्तयो वा आत्मनिष्ठा एव भवन्ति। अरस्तुमहोदयेन आत्मनो गुणानां शक्तीनां वा वैशिष्ट्यं प्रतिपादितमिति तदीयं मनोविज्ञानं 'शक्तिमनोविज्ञानं' [ फैकल्टी साइकालोजी ] इति नाम्नापि व्यवह्रियते। बालकेष्वन्तर्निहितानां शक्तीनां विकास एव शिक्षायाः मुख्य प्रयोजनमिति तन्मतमेवोररीकृत्य योरोपे चिरं शिक्षाव्यवस्था क्रियते स्म। किन्त्वेकोनविंशे शते सिद्धान्तोऽयं सर्वथापि हेयतामापन्नः।

तथा चायमत्र संग्रह —

'डी एनीमा'-ख्यके ग्रन्थे श्रीलोऽरस्तुमहोदयः।
खीष्टात् पूर्वे शते तुर्ये मनोविज्ञान-नायकः ॥१०॥

केन्द्रं ज्ञानस्य मस्तिष्कमासीत् प्लैटोमते पुरा ।
हृदये ज्ञानकेन्द्रत्वमरस्तुः प्रत्यपादयत् ॥११॥
रक्तवाहिशिरानिष्ठो 'न्यूमा'-ख्यो वायुरस्य च ।
आश्रयो जीवनस्येति मृत्युस्तन्निर्गमान्मतः ॥१२॥
यतो रक्तोद्भवस्थानं हृदयमेव सम्मतम् ।
ततो 'न्यूमा'ऽत्रसम्बद्धो ज्ञानकेन्द्रं तदेव च ॥१३॥
प्रतिक्षिप्ताः पदार्थेभ्यो रश्मयो नेत्रसङ्गताः ।
ज्ञानतन्तून् समुद्बोध्य चाक्षुषं जनयन्ति हि ॥१४॥
एवं सर्वविधं ज्ञानं ज्ञानतन्त्वैकद्वारकम् ।
अद्यत्वे मन्यते सर्वैर्मनोविज्ञानवेत्तृभिः ॥१५॥
किन्त्वरस्तुमते ज्ञान-तन्तवो नैव सम्मताः ।
ज्ञानमात्रे तु तत्स्थाने द्वारं न्यूमैव तन्मते ॥१६॥
पदार्थेभ्यो गतिर्जाता पुष्पाद् गन्धादयोऽथवा ।
'डायोफ़ोनस' नाम्ना तु माध्यमेनेन्द्रियं गताः ॥१७॥
'न्यूमा'-ख्यं पवनं तत्र संप्रभाव्य यथाक्रमम् ।
तद्द्वारा हृदयं प्राप्ता ज्ञानं कुर्वन्ति तन्मते ॥१८॥
हृद्देशे जायते ज्ञानं किन्तु ज्ञानं न तद्गुणः ।
आत्मैवात्र गुणी ज्ञेयो मता अन्येऽपि तद्गुणाः ॥१९॥
स्मृतिः शक्तिविचारो वा याश्चान्या आत्मशक्तयः ।
तासां विकास एवात्र मतं शिक्षाप्रयोजनम् ॥२०॥
आत्मैव विषयस्तत्र उपायोऽन्तः परीक्षणम् ।
दर्शनं, न तु विज्ञानं मनोविज्ञानमस्य च ॥२१॥

**तन्तुसंस्थानस्याविष्कारः—**

ख्रीष्टात् पूर्वं तृतीये शते 'हेरोफ़िलस' 'इरेसिस्ट्रेटस' नामकौ द्वौ चिकित्सकावभवताम् । ताभ्यां शरीररचनाविषये प्रचुरमनुसन्धानादिकं कृत्वा तन्तुसंस्थानस्याविष्कारः कृतः । किन्तु ज्ञानवाहि-क्रियावाहि-भेदेन तन्तुविभागस्तावदज्ञात एवासीत् । ख्रीष्टात् पूर्वं द्वितीये शते 'गेलन' नामकः अन्यश्चिकित्सकः सञ्जातः । तेन सर्वतः प्राक् ज्ञानवाहि-क्रिया-वाहि-भेदेन तन्तुसंस्थानस्य द्विविधो विभागो दर्शितः । एवमरस्तुमहोदयात्

पूर्वं यद्यपि तन्तूनां सामान्यं ज्ञानं सञ्जातमासीत् किन्तु ज्ञानवाहि-क्रिया-वाहितन्तूनां विभागस्ततः पूर्वमज्ञात एवासीदिति तन्मते 'न्यूमा'-ख्यो वायुरेव ज्ञानमात्रे द्वारी भवति। नव्ये तु मनोविज्ञाने तन्तुसस्थानस्यातीव महत्त्वपूर्णं स्थानमस्ति।

खीष्टात्पूर्वं तुरीये तु शते तत्र चिकित्सकैः।
दृष्टाः शारीरनिष्णातैस्तन्तवो देहवर्तिनः ॥२२॥
द्वितीये च शते पूर्वं गेलनाख्यविपश्चिता।
ज्ञानवाहि-क्रियावाहि-तन्तुभेदोऽपि लक्षितः। २३॥
परिज्ञातेऽपि ज्ञानस्य क्रियायाश्चैव वाहके।
तन्तुभेदे प्रभावोऽस्य न तावान् परिदृश्यते ॥२४॥
द्विसहस्राब्दपर्यन्त शतीं यावत्तु षोडशीम्।
अरस्तुप्रभवं लोकः सिद्धान्तमनुगच्छति ॥२५॥

## सप्तदशे शते मनोविज्ञानस्य प्रगतिः—

एवं षोडशीं शतीं यावन्मनोविज्ञानस्य स्थितिः संक्षेपतो निर्दिष्टा। अयं मनोविज्ञानस्येतिवृत्ते प्रथम 'आदिकालः'। तत एकोनविंशशतीं यावत् द्वितीयो 'मध्य कालः'। अत्र द्वितीये मध्यकालविभागे शतकत्रयं समायति। तत्र सप्तदशे 'टामस हाब्स' महोदयः (१५८८-१६७९) 'डेकार्टे' महोदय (१५९६-१६५०) श्चेति द्वौ प्रसिद्धौ दार्शनिकौ सञ्जातौ। ताभ्यां च मनोविज्ञानक्षेत्रे विशिष्टा प्रगतिरुत्पादिता। अस्मिन्नेव शते 'गैलीलियो' नामकेन प्रसिद्धेन वैज्ञानिकेन दूरवीक्षण-यन्त्रस्याविष्कारः कृतः। प्रसिद्धो 'न्यूटना'-ख्यो वैज्ञानिकोऽप्यस्मिन्नेव शते जनिं लेभे, स्वाविष्कारैश्च विज्ञानक्षेत्रे क्रान्तिमकरोत्। अनयो वैज्ञानिकयोर्नवाविष्कृतानां सिद्धान्तानां नियमानां च प्रभावः सर्वत्रापि सञ्जात इति मनोविज्ञानक्षेत्रेऽपि कापि क्रान्तिस्तेन विहिता। सुक्रातादारभ्येदानीं यावत् मनोविज्ञानक्षेत्रेऽन्तःप्रेक्षणमेव साधनत्वेन स्वीक्रियते स्म। किन्तु भौतिकविज्ञानक्षेत्रे निरीक्षण-परीक्षणादीनां बाह्यप्रेक्षण-साधनानां प्रयोगं दृष्ट्वा 'टामसहाब्स' महोदयेन मनोविज्ञानक्षेत्रेऽपि बाह्य प्रेक्षणसाधनानां समावेशो विहितः। यद्यप्यन्तःप्रेक्षणस्य प्रत्याख्यानं

बहिष्कारं वासौ न कृतवांस्तथापि निरीक्षण-परीक्षण-गणना-परिमाणादीनां बाह्यप्रेक्षणसाधनानां तत्र विनियोगमभ्यनुज्ञाय किमपि महत्त्वपूर्णं परिवर्तनं कृतवानित्यसन्दिग्धम् ।

हाब्समहोदयादप्यधिकं महत्त्वपूर्णं च परिवर्तनं डेकार्टे ( १५९६-१६५० ) महोदयस्य सिद्धान्तैस्तत्र संजातम् । सुकरातादपि पूर्वकालाद्देहादिव्यतिरिक्त आत्मा स्वीक्रियते इति पूर्वं दृष्टम् । तथापि डेकार्टे-महोदयेन देहात्मनो नितान्तं स्वातन्त्र्यं स्थापितम् । देहे न कश्चिदात्मनो भागः आत्मनि च न कश्चिद्देहभाग इति देहात्मनो-र्न कश्चिदपि सम्बन्धः । न देहेनात्मा प्रभावितो भवति, नाप्यात्मना देहो नियम्यते । शारीरा व्यापारा पशुव्यवहारवद् यान्त्रिका एव भवन्ति नात्मप्रेरिता इति तस्याभिमतम् । डेकार्टे महोदयः पशुषु आत्मसत्तां नाङ्गीकरोति । आत्म-विरहितेषु पशुषु सर्वेऽपि दैहिका व्यापारा यान्त्रिका एव भवन्तीति तत्साम्यान्मानवानामपि दैहिका व्यापारा यान्त्रिका एव नात्मना नियन्त्रिताः। देहव्यापाराणां यान्त्रिकत्वेऽपि डेकार्टेमहोदयो मानवेष्वात्मसत्तां स्वीकरोति । ये चात्मनियन्त्रिता इच्छिका देहव्यापारा दृश्यन्ते तेऽपि मस्तिष्कस्थेन 'पीनियल ग्लैंड' नामकेन ग्रन्थिना सञ्चालिता भवन्ति । इन्द्रियेभ्यो मस्तिष्कपर्यन्तं विशिष्टेन द्रवद्रव्येन परिपूर्णं शिराजालं प्रसृतमस्ति । इन्द्रियसन्निकर्षे सत्यस्मिन् द्रवद्रव्ये गतिरुत्पद्यते मस्तिष्कं चाभिधावति । ततश्च सहजप्रतिक्रियारूपेण सा गतिः पुनरिन्द्रियं प्रति गच्छति । ततश्च तत्र दैहिका व्यापारा दृश्यन्ते । इति डेकार्टेमहोदयस्याभिमतमस्ति ।

डेकार्टे-हाब्समहोदयावुभावपि समकालावेवास्ताम् । ताभ्यां मनोविज्ञानस्य क्षेत्रमात्मज्ञानक्षेत्राद्विभक्तम् । आत्मनोऽध्ययनमध्यात्म-विद्यायाः कार्यम् । यन्त्रवत्परिचालितानां देहव्यापाराणां मनोव्यापाराणां चाध्ययनमेव मनोविज्ञानशास्त्रस्य कार्यमिति मनोविज्ञानशास्त्रमध्यात्म-विद्यायाः सर्वतो भिन्नमिति ताभ्यां स्थापितम् । किंच मनोविज्ञानक्षेत्रे चेतनाशब्दस्य नूतनः प्रयोगस्ताभ्यामारब्धः। अत एवास्य युगस्य मनोविज्ञाने चेतनैव तद्विषयेतामवगाहते, न मनो नापि चात्मा । उभयोरपि तयोः स्थाने चेतनाशब्द एव व्यवह्रियते विस्पष्टत्वात् । बाह्यप्रेक्षण-

साधनानां समावेशेऽप्यन्तःप्रेक्षणस्योपयोगो नात्र निवार्यते । इदानी-मात्मनोऽन्तःप्रेक्षणस्थाने चेतनाया अन्तःप्रेक्षणं विधीयते ।

तदयमत्र संग्रहः—

अथ सप्तदशे शते न्यूटनादिविचक्षणैः ।
स्वाविष्कृतैर्नवैर्यन्त्रैः क्रान्तिर्वैज्ञानिकी कृता ॥२६॥
क्रान्तेस्तस्याः प्रभावस्तु सर्वक्षेत्रेषु दृश्यते ।
मनोविज्ञानक्षेत्रेऽपि नवा दृष्टिः समागता ॥२७॥
अन्तःप्रेक्षणमेवासीत् साधनं वृत्तिदर्शने ।
हाब्सनेनाथ बाह्यापि दृष्टिरत्र नियोजिता ॥२८॥
निरीक्षणं मानं संख्या परिमाणं परीक्षणम् ।
अन्तर्दृष्ट्या सहैवात्र सर्वमेतत् प्रवर्तितम् ॥२९॥
अस्मिन्नेव शते विज्ञो श्रीडेकार्टे महोदयः ।
देहात्मनोस्तु स्वातन्त्र्यं क्रियासु प्रत्यपीपदत् ॥३०॥
देहे नैवात्मनो लेशो देहांशो नैव चात्मनि ।
क्रियासु न प्रभावो वाऽनयोः कश्चित् परस्परम् ॥३१॥
केवलं मानवे ह्यात्मा पशुदेहे न विद्यते ।
ज्ञानक्रिये विनात्मानं पशूनां भवतस्ततः ॥३२॥
यान्त्रिक्यस्तु क्रियाः सर्वाः पशुवन्मानवेष्वपि ।
भासन्ते बुद्धिपूर्वा याः यान्त्रिक्य एव ता अपि ॥३३॥
मस्तिष्कं बुद्धिपूर्वाणां क्रियाणां केन्द्रमत्र यत् ।
पीनियलग्रन्थिस्तत्र क्रियाणां सम्प्रवर्तकः ॥३४॥
इन्द्रियेभ्यस्तु मस्तिष्कपर्यन्तं द्रवपूरिताः ।
शिराः सन्ति च तद् द्वारा ज्ञानप्रतिक्रिया भवेत् ॥३५॥
विषयेन्द्रियसम्पर्काद् गतिर्जाता शिराद्रवे ।
मस्तिष्कात्तु परावृत्ता वहिरुत्पादयेत् क्रियाम् ॥३६॥
बुद्धिपूर्वा अपि ह्येवं मस्तिष्केन नियन्त्रिताः ।
यन्त्रवच्चेतनाहीना मानवेऽपि प्रतिक्रियाः ॥३७॥
डेकार्टेमते पशवोऽचेतनाश्चेतना नराः ।
तुल्यकालस्तु हाब्सोऽस्य चात्महीनावुभावपि ॥३८॥

न्यूटनेन यथा सृष्टिरीश्वरं तु विनोदिता ।
एवं शरीरव्यापारा आभ्यामात्मानमन्तरा ॥३९॥
आत्मा नापि मनः स्पष्टं केवला चेतना स्फुटा ।
विषयश्चेतनैवात्र शास्त्रे तत अजायत ॥४०॥

**अष्टादशे शते मनोविज्ञानस्य प्रगतिः—**

अष्टादशे शते मनोविज्ञानक्षेत्रे पूर्वताऽपि विशिष्टा प्रगतिर्दृश्यते । पूर्वं आत्मा मनो वा मनोविज्ञानस्य विषय आसीत्, इदानीं चेतना तत्स्थाने समागता । जान लाक (१६३२-१७०४) महोदयेन चेतनाविषये विशेषरूपेण विचारितम् । तन्मते चेतना जन्मतः प्रत्ययशून्या विशुद्धा पट्टिकेवास्ति । यथा यथा च संसारसम्बन्धस्तत्र जायते तथा तथा प्रत्ययसंस्कारास्तत्र संगृहीता भवन्ति । तेषां च प्रत्ययानां परस्परं सम्बन्धोऽपि जायते । लाकमहोदयस्येयं विचारधारैव भाविनः प्रत्ययसम्बन्धवादस्य बीजभूता भवति ।

जानलाक महोदयेन प्रत्ययसम्बन्धवादस्य बीजारोपणं कृतम् । तदनन्तरं डेविड ह्यूम महोदयेन (१७११-१७७६) प्रत्ययसम्बन्धवादस्य पल्लवनं कृतम् । पूर्वमेकः प्रत्ययश्चेतनायां समायाति, ततश्च तदनुकूलः प्रतिकूलो वान्यः प्रत्ययः समायाति । एवं चेतनायां प्रत्ययप्रवाहोऽयमनवरतं प्रवर्तते । सर्वे चैते प्रत्ययाः परस्परं सम्बद्धा भवन्ति । ततश्चास्माकमनुभवः, स्मृतिः स्वप्नादिकं च सर्वमपि ज्ञानं प्रत्ययसम्बन्धात्मकमेवास्ति । अयं सिद्धान्तो मनोविज्ञानक्षेत्रे 'प्रत्ययसम्बन्धवाद' नाम्ना व्यवह्रियते । ह्यूममहोदयश्चास्य सिद्धान्तस्य प्रवर्तकोऽभ्युपगम्यते । उत्तरः प्रत्ययः पूर्ववर्तिनं प्रत्ययमनुसरति, तदुत्तरश्च तमनुसरति इत्येतावानेव प्रत्यययोः सम्बन्धः । एवं कार्यकारणभावेऽप्ययमेव नियमः ।

अस्य प्रत्ययसम्बन्धवादस्यायं परिणामः सवृत्तः यदरस्तुप्रतिपादितस्य आत्मशक्तिवादस्य निराकरणं संजातम् । शक्तिमनोविज्ञानस्य स्थान प्रत्ययसम्बन्धवादेनापहृतम् । अरस्तुमहोदयस्य मते आत्मनो विविधाः शक्तय आसन् । किन्तु प्रत्ययसम्बन्धवादे प्रत्ययसम्बन्धव्यतिरिक्ता न कापि शक्तिः । स्मृतिशक्तिविश्लेषणे प्रत्ययसम्बन्धात्मिकैव सा शक्तिः पर्यवस्यति । यः सम्यक्तया प्रत्ययानां सम्बन्धयोजने समर्थो भवति तस्यैव

स्मृतिशक्तिस्तीव्रा कथ्यते। यश्च पूर्वप्रत्ययानां सम्बन्धयोजने तथा समर्थो न भवति तस्य स्मृतिशक्तिः क्षीणा उच्यते। एवमात्मनः शक्तिरूपेण ह पदिश्यमाना अन्येऽपि धर्माः प्रत्ययसम्बन्धरूपा एव भवन्ति। प्रत्ययानामयं सम्बन्धः कथं भवतीत्यत्रापि नियमास्तैरवधारिताः। तत्र अभ्यासः, अपूर्वता, विस्पष्टता च प्रत्ययानां सम्बन्धोत्पादने नियामकाः। तदनुसारं प्रत्ययानां स्वत एव परस्परं सुदृढः सम्बन्धो जायते। तत्सम्बन्धार्थमात्मनस्तत्र काप्यावश्यकता न भवति। एवं ह्यूमसहोदयस्य प्रत्ययसम्बन्धवादेन अरस्तुमहोदयस्यात्मशक्तिवादो निराकृतः।

एवमेकतो ह्यूममहोदयेनात्मशक्तिवादो निराकृतः, किन्त्वपरतः शर्मण्यदेशोद्भवेन जोहन्स निकोलस टेटन्स (१७३६–१८०७) महोदयेनान्तःप्रेक्षणसरणिं शरणीकृत्यान्तःकरणस्य ज्ञान–संवेदन–कृत्यात्मकास्त्रयो विभागा भवन्तीति प्रतिपाद्य प्रकारान्तरेण शक्तिसिद्धान्तः समर्थितः। एवं ह्यूमेन निराकृतोऽपि शक्तिसिद्धान्तोऽन्तःकरणस्य शक्तित्रयरूपेणान्यत्र शरणं प्राप्तवान्।

अस्मिन्नेव शते वोनट महोदयेन कैबिनस (१७८६–१८०२) महोदयेन च 'ज्ञानतन्तु–मनोविज्ञानस्य' स्थापनं विहितम्। अस्मिन् सिद्धान्ते मानसो व्यापारः शारीरिकव्यापारस्याविनाभूतो भवति। यदा कापि मानसी क्रिया भवति तदा तत्सम्बन्द्धा दैहिकी क्रियापि नियमतो भवत्येव। पूर्वं ज्ञानतन्तुषु दैहिको व्यापारो जायते ततश्च मानसो व्यापार इत्ययमत्र क्रमः। कैबिनसमहोदय न तु एतत्सम्प्रोक्तं यत् यथा पित्ताशयात् पित्तरसः संप्रवर्तते तथैव मस्तिष्काद् विचाराणां रसः संस्रवति। ततश्च मानसो व्यापारो मस्तिष्कव्यापारादविनाभूत एव भवतीति तस्याभिप्रायः। आस्ट्रियादेशोद्भूतेन (१७५८–१८२८) गालमहोदयेनापि सिद्धान्तोऽयं समर्थितः। शिरःकपालस्तोच्चावचान् भागाननुसन्धाय स मानवानां मानसिकशक्तीनां परिज्ञानं करोति स्म। तन्मते मानसिकशक्तीनां केन्द्रस्थानानि मस्तिष्के भवन्ति। तस्मिन् मस्तिष्ककेन्द्रे यदि कापि क्षतिर्जायते तदा तत्सम्बद्धा शक्तिरपि नश्यति। गालमहोदयस्यैव शिष्यः 'स्पुरज्हीम' नामासीत्। तेन एडिनवर्गस्थेन' 'जार्ज कोम्ब' महोदयेन सह मिलित्वा 'कपालरचनाविज्ञान'–विषये प्रचुरं

साहित्यमपि निर्मितम् कपालमण्डलस्य विविधानामुच्चावचानां स्थानानां फलमत्र वर्णितमासीत् ।

तदयमत्र संक्षेपः—

सप्तदश्यां शताब्द्यां यश्चेतनावाद उत्थितः ।
फलं प्रत्ययसम्बन्धस्तस्यैवाष्टादशे शते ॥ ४१ ॥

चेतना पट्टिका स्वच्छा गृह्णाति प्रत्ययांस्तु सा ।
'जान लाक'-मते सैव चान्योन्यं योजयत्यपि ॥ ४२ ॥

एष प्रत्ययसम्बन्धसिद्धान्तोऽथ विशेषतः ।
व्याख्यातो वर्धितश्चापि ह्यूमेन विदुषा पुनः ॥ ४३ ॥

आत्मनो या स्मृतेः शक्तिः दृष्टसन्धानमेव वा ।
प्रत्ययसम्बन्धमात्रं तन्न क्वापि विशिष्यते ॥ ४४ ॥

ह्यूमेन स्थापितः सोऽयं सिद्धान्तस्तु नवो बुधैः ।
नाम्ना प्रत्ययसम्बन्ध-मनोविज्ञानमुच्यते ॥ ४५ ॥

अरस्तुकथिताः सर्वाः शक्तय आत्मनः स्फुटाः ।
सिद्धान्तमिममाश्रित्य नूनमेभिर्विलोपिताः ॥ ४६ ॥

कथं प्रत्ययसम्बन्धो जायतेऽत्र नियामकाः ।
अभ्यासो नूतनत्वं च तथा विस्पष्टता मता ॥ ४७ ॥

अस्यामेव शताब्द्यां च पुनः शार्मण्यपण्डितैः ।
मनोविज्ञानक्षेत्रेऽत्र प्रयोगा बहवः कृताः ॥ ४८ ॥

ज्ञानं कृतिश्च द्वावेव भेदौ यस्य कृतौ परैः ।
निकोलस टेटन्सोऽत्र संवेदनमवर्धयत् ॥ ४९ ॥

सुखादेस्तु ग्रहः 'फीलिंग'संवेदनमितीर्यते ।
ज्ञानमर्थग्रहो 'नोइङ्ग्' 'विलिंग्' इच्छा कृतिः पुनः ॥५०॥

ज्ञानतन्तुक्रियावश्यं मानस्या क्रियया सह ।
जायत इति सिद्धान्तो बोनटेन निरूपितः ॥ ५१ ॥

ज्ञानतन्तुमनोज्ञानं नाम्ना स तु निगद्यते।
ज्ञानतन्तुसमुत्पाद्या तत्र च मानसी क्रिया ॥ ५२ ॥

मानसा सर्वव्यापारा दैहिका एव तत्त्वतः।
क्रमात् सर्वेऽपि संवृत्ताः क्वात्मा क्वापि मनो गतम् ॥५३॥

पित्ताशयाद्यथा पित्तं विचाराणां रसस्तथा।
मस्तिष्कात् स्यन्दते नित्यमिति केन्निसोदितम् ॥५४॥

## ऊनविंशे शते मनोविज्ञानस्य प्रगतिः—

अष्टादशे शते ह्यूमहोदयेनैकतोऽरस्तुमहोदयस्यात्मशक्तिवादो निराकृतः। परत्र च शार्मण्यदेशीयैः, अन्तःकरणस्य ज्ञान-इच्छा-क्रियात्मकं शक्तित्रयं परिकल्प्य शक्तिवाद एव प्रकारान्तरेण समर्थित इति विरोधे समुपस्थिते ऊनविंशे शते ( १७७६—१८४१ ) हर्बार्टमहोदयेन अन्तःकरणस्य शक्तित्रयं निराकृत्याभेदः शक्तीनां स्थापितः। तन्मते ज्ञानेच्छादयो न पृथक् शक्तिभेदाः, सर्वत्र सर्वोपलब्धेः। इच्छा ज्ञानं कृतिं चान्तरा न सम्भवति। एवं ज्ञानमपीच्छां क्रियां चान्तरा न जायते। एवं कृतिरपि ज्ञानमिच्छां चापेक्षते इति ज्ञानेच्छाक्रियादिरूपा मानसा व्यापारा अभिन्ना एव। ततश्च समष्ट्यात्मकमेकं मनो। न मनसः शक्तिभेदाः सन्तीतिमनःसमष्टिसिद्धान्तो हर्बार्टमहोदयेनाविष्कृतः। तस्य चाविष्करात् शिक्षाक्षेत्रे महत्त्वपूर्णं परिवर्तनं सञ्जातम्। इतः पूर्वं अरस्तुसिद्धान्तमाश्रित्य मनसो विभिन्नशक्तीनां विकास एव शिक्षायाः प्रयोजनमासीत्। मनः समष्टि- सिद्धान्तस्याविष्कारानन्तरं शक्तिविकासं विहाय समष्टिरूपेण मनोविकास एव शिक्षायाः लक्ष्यतां प्रतिपेदे। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यौपनिषदं न्यायमनुसृत्य शक्तिविकासस्य वाचारम्भणमात्रत्वं मनोविकासस्य च सत्यत्वमस्मिन् सिद्धान्ते समायातम्।

डार्विनमहोदयस्य विकासवादोऽस्य शतकस्य प्रधानतमः सिद्धान्तः। ( १८०६—१८८२ ) डार्विन महोदयेन विकासवादस्य सिद्धान्तः स्थापितः। हर्बर्टस्पेन्सर महोदयेन चास्य विस्तारः कृतः। अयं हर्बर्ट स्पेन्सर महोदयः ( १८२०—१९०३ ) पूर्वोक्ताद् हर्बार्ट (१७७६—१८४१) महोदयाद्

भिन्न एव । नामसाम्यात्तत्राभेदबुद्धिर्न विधेया । विकासवादानुसारमेक-घटकादमीबाख्यात् प्राणिन आरभ्य सर्वेषां प्राणिनां क्रमिको विकासः । वानराश्च मानवानां पूर्वजाः । सर्वेषु प्राणिषु जीवरक्षापरा सहजा शक्ति-र्भवति । किन्तु जीवनसंघर्षे योग्यतमस्यैव जीवनं रक्षितं भवति । दुर्बला अयोग्याश्चात्र संघर्षे विनश्यन्ति । परिस्थित्यनुरूं विभिन्नेषु प्राणिषु विभिन्नानामङ्गानां विकासः सञ्जातः । अतो मूलत एकरूपा अपि प्राणिनः स्वावश्यकतानुरूपमङ्गविकासमवाप्य भिन्नाकारतामुपगताः । एवं क्रमिकेण विकासेनैव वानरा मानवतां प्राप्ताः । अयमस्य विकास-सिद्धान्तस्य सारांशः ।

अस्य सिद्धान्तस्य सर्वेष्वपि ज्ञानविभागेषु प्रभावः सञ्जात इति मनोविज्ञानक्षेत्रेऽपि तस्य प्रभावो दृश्यते । मनोविज्ञानक्षेत्रे सहजशक्ति-सिद्धान्तो विकासवादप्रभावादेव समायातः । पश्वादौ जीवनरक्षार्थं सहजाः शक्तयो भवन्तीति तत्साम्यान्मानवेष्वपि सहजशक्तीनां कल्पना सञ्जाता । डार्विनस्य प्रेयराख्येन शिष्येण तासां सहजशक्तीनां तालिका निर्मिता, बालकेषु च तदनुसन्धानं प्रारब्धम् । विलियम जेम्स ( १८४२—१९१० ) महोदयेन पञ्चाशत मूलशक्तीनां संग्रह कृतः । इदानीं मैगडूगल ( १८७१ ), थार्नडाइक ( १८७४ ), वुडवर्डश्चेति त्रयः शक्ति-विशेषज्ञा मन्यन्ते । मैगडूगल महोदयेन चतुर्दश मूलशक्तयः स्वीकृताः सन्ति ।

अस्मिन् शते मनोविज्ञानस्य शरीररचनाशास्त्रेण सह विशिष्टः सम्बन्धः सञ्जातः । दर्शनकक्षां विहाय स्वतन्त्ररूपेण चास्याध्ययनादिकं प्रारब्धमिति परिवर्तनद्वयमतीव महत्त्वपूर्णं प्रतीयते शरीररचनाशास्त्र-सम्बन्धादेव नाडितन्त्रस्य तन्तुसंस्थानस्य च मनोविज्ञानक्षेत्रेऽध्ययनं प्रचलितम् । तदनुसारं च पञ्चज्ञानेन्द्रियजन्यज्ञानानां पञ्च विभिन्नानि केन्द्रस्थानानि मस्तिष्के विद्यन्ते । तत्रैकतरस्यापि ज्ञानकेन्द्रस्य क्षतिस्त-द्विषयग्रहणे पुरुषमयोग्यं विधत्ते । किन्तु द्वितीयमहायुद्धानन्तरं अम-रीकादेशे लैशली ( १९१४ ) महोदयेन मूषकादिषु कृतैः विविधैः परी-क्षणैरेतदवधारितं यदेकस्य ज्ञानकेन्द्रस्य विनाशे कञ्चित्कालमेव सा शक्तिर्विलुप्यते । पुनश्च केन्द्रान्तरसहकारात् तत्सम्बद्धं कार्यं पुनरपि प्रवर्तते।

क्रमशो भौतिकविज्ञानवन्मनोविज्ञानस्य क्षेत्रेऽपि परीक्षणार्थं प्रयोगशालानां स्थापना सञ्जाता। सर्वतः प्राक् १८७९ संवत्सरे वुन्ट महोदयेन मनोवैज्ञानिकी प्रयोगशाला संस्थापितासीत्।

तदत्रयत्र संक्षेपः—

प्रत्याख्यातं तु ह्यूमेन आत्मशक्तिमतं पुरा।
प्रत्ययानां च सम्बन्धः स्थाने तस्य निरूपितः ॥५५॥

तथापि शक्तयस्तत्र मनसो यास्त्रिधा कृताः।
तानं चेच्छा क्रिया चेति भग्नं शक्तिमतं कुतः ॥५६॥

ज्ञाने क्रिया समाविष्टा क्रियायां ज्ञानमेव च।
एवमिच्छापि सर्वत्र सर्वं सर्वे संगतम् ॥ ५७ ॥

एवमद्वैतमास्थाय शक्तिभेदो निराकृतः।
ऊनविंशे शते नूनं हर्बार्टाख्य-विपश्चिता ॥ ५८ ॥

एकं समष्टिरूपं च मनो जातं ततः परम्।
विकासस्तस्य शिक्षाया मुख्यं लक्ष्यं, न शक्तयः ॥५८॥

जाता विकासवादस्य स्थापना च ततः परम्।
डार्विनः स्थापकस्तस्य आचार्यः स्पेन्सरस्तथा ॥६०॥

शक्तिर्यत्र जयस्तत्र जीवनं तस्य रक्षितम्।
अन्ये जीवनसंघर्षे विलयं यान्ति प्राणिनः ॥ ६१ ॥

जीवरक्षापरा शक्तिः जन्मजा प्राणिमात्रगा।
शक्तो योग्यतमश्चात्र तद्बलादेव जीवति ॥ ६२ ॥

एवं विकाससिद्धान्ते शक्तयः प्रतिपादिताः।
मनोविज्ञानक्षेत्रेऽपि शक्तियोगोऽभवत् पुनः ॥६३॥

सहजाः शक्तयस्तत्र पञ्चाशज्जेम्ससम्मताः।
चतुर्दशत्वमायाता मैग्डूगलमते पुनः ॥ ६४ ॥

ततः शरीरशास्त्रेण सम्बन्धोऽस्य विशिष्यते ।
क्रमाद् वैज्ञानिकं रूपं शास्त्रमेतत् प्रपद्यते ॥६५॥
आत्मास्य विषयः पूर्वं मनो जातस्ततः परम् ।
चेतना चाथ मस्तिष्कं ऊनविंशशते मतम् ॥६६॥

उपसंहार;—

मनोविज्ञानवृत्तं तु संविभक्तं युगत्रये ।
आद्यः कालोऽथ मध्यश्च काल आधुनिकस्तथा ॥६७॥
सुकरातात् समारभ्य शतीं यावन्तु षोडशीम् ।
त्रिविधेऽस्मिन् विभागेऽत्र आद्यकालस्तु सम्मतः ॥६८॥
ततः परतरं प्रायो वर्षाणां शतत्रयम् ।
ऊनविंश शतीं यावत् मध्यकालः प्रकीर्तितः ॥६९॥
आधुनकश्च कालोऽथ ततः परतरः पुनः ।
विंशे शते समारब्धो अद्यापि सम्प्रवर्तते ॥७०॥
कालत्रयविभागेऽत्र द्वयोर्वृत्तं तु संग्रहात् ।
प्रोक्तमस्मिन् परिच्छेदे शिष्टमग्रे प्रवक्ष्यते ॥७१॥
परिच्छेदद्वयेनैव-मितिवृत्तं निरूप्य वै ।
मनोविज्ञानगा सर्वा प्रगतिः सम्प्रदर्शिता ॥७२॥

## प्रश्नाः—

१—मनोविज्ञानस्य प्रारम्भः क्व केन च रूपेणाभवत् ।
२—प्लटो महोदयस्य अरस्तु महोदयस्य च मनोवैज्ञानिकाः सिद्धान्ताः प्रदर्शनीयाः ।
३—सप्तदशे शते मनोविज्ञानस्य का प्रगतिः सञ्जाता ।
४—अष्टादशे शते च मनोविज्ञानविषये काभिनवा प्रगतिर्जाता ।
५—ऊनविंशे शते मनोविज्ञानस्य का प्रगतिर्दृश्यते ।
६—सुकरात्कालादारभ्य ऊनविंशशताब्दीं यावत् मनोविज्ञानविषये कानि महत्त्वपूर्णानि परिवर्तनानि सञ्जातानि ।

---

त्रयोविंशः परच्छेदः

# नव्यसम्प्रदायाः

सुकरातकालादारभ्योनविंशशताब्दीं यावन्मनोविज्ञानस्य क्षेत्रे या प्रगतिः सञ्जाता तस्याः संक्षिप्तं विवरणं विगते परिच्छेदेऽस्माभिरुपस्थापितम्। इदानीं प्रचलितेऽस्मिन् विंशतमे शतेऽस्मिन् क्षेत्रे किं कार्यं जातमित्यस्य विवरणमस्मिन् परिच्छेदे उपस्थाप्यते। सुकरातादारभ्य षोडशीं शतीं यावन्मनोविज्ञानेतिवृत्तस्यादिमः काल आसीत्। ततश्चोनविंशशताब्दीं यावत्तस्य मध्यमः काल आसीत्। अथायं तृतीयो विभागो मनोविज्ञानेतिवृत्तस्याधुनिकः कालोऽस्ति। अस्मिन् कालेऽत्र अवान्तरसम्प्रदायान् विहायाधोऽङ्किताः पञ्च मुख्या मनोवैज्ञानिकाः सम्प्रदायाः समुद्भूता दृश्यन्ते—

१. सत्तावादः ( एग्जिस्टंशियलिज्म )
२. व्यवहारवादः ( बिहैवियरिज्म )
३. मनोविश्लेषणवादः ( साइको-अनेलेसिस )
४. प्रयोजनवादः ( परपसिविज्म )
५. अवयविवादः ( जेस्टाल्ट-स्कूल )

एतेषां सम्प्रदायानां परिचयेन मनोविज्ञानस्याधुनिकी प्रगतिः सम्यगवबोद्धुं शक्यत इति तेषां संक्षिप्तं विवरणमिह दीयते।

## १. सत्तावादः—

अस्य सिद्धान्तस्य संस्थापको टिचनर महोदयः ( १८६७–१९२७ ) अस्ति। विगते शते मनोविज्ञानक्षेत्रे प्रत्ययसम्बन्धवादस्य प्राबल्यमासीदिति पूर्वं दृष्टम्। प्रत्ययसम्बन्धवादिनश्चान्तः प्रेक्षणमेव तद्विज्ञानसाधनं मन्यन्ते स्म। इन्द्रियार्थसन्निकर्षाद् यज्ज्ञानं जायते तस्य संस्काराः प्रतिमारूपेण मनःपटलेऽङ्किता भवन्ति। एवंविधानां प्रतिमानां प्रत्ययानां वा परस्परं सम्बन्धो जायते। तत्सम्बन्धवशेनैव चानुभवस्मृत्यादयः सर्वेऽपि

व्यवहाराः प्रवर्तन्ते । प्रतिमासम्बन्धं बिना कश्चिदपि व्यवहारो न सम्भवति । अत एव प्रतिमानां प्रत्ययानां च सम्बन्ध एव मनोवैज्ञानिकस्य व्यवहारस्य मूलमिति । मनोवैज्ञानिकेऽध्ययने च प्रत्ययानां प्रतिमानां वा योगविभागादीनामेव परीक्षणं विधीयत इति प्रत्ययसम्बन्धवादिनामभिप्रायः ।

किन्तु टिचनरमहोदयात् प्रागस्य प्रत्ययसम्बन्धवादस्य तत्साधनभूतस्यान्तः प्रेक्षणस्य च विषये प्रबलो विरोधः समुद्भूतः । फ्रांसदेशीयो 'विनेट' महोदयः ( १८५७–१९११ ) शर्मण्यदेशीयः 'कुल्पे' महोदयश्चेति ( १८६२–१९१५ ) द्वौ मनोवैज्ञानिकौ प्रत्ययसम्बन्धवादस्य विरोधिनौ सञ्जातौ । ताभ्यां विविधैः परीक्षणैरेतदवधारितं यद्विचारकाले मानसिकप्रतिमानां काप्यावश्यकता न भवति । प्रतिमां बिनापि विचारः प्रवर्तते । अन्तः प्रेक्षणसाधनेन मानसिकप्रतिमानां प्रत्ययाना च योगविभागयोः परिशीलनमेव विचारकाले विधीयते इति यदा प्रतिमां विनापि विचारः सम्भवति तदान्तः प्रेक्षणं प्रतिमाभावे कस्य भविष्यतीति व्यर्थ एवान्तः प्रेक्षणस्य सिद्धान्तः । एवं प्रतिमाभावे प्रत्ययसम्बन्धसिद्धान्तोऽपि न घटत इति सोऽपि व्यर्थोऽसङ्गतश्च । एवं फ्रांसदेशे शर्मण्यदेशे च प्रत्ययसम्बन्धवादस्यान्तः प्रेक्षणस्य च प्रत्याख्यानं सञ्जातम् ।

टिचनरमहोदयस्य 'सत्तावादः' प्रत्ययसम्बन्धवादस्यान्तः प्रेक्षणस्य च परिपोषकोऽस्ति । तेन पुरातनः प्रत्ययसम्बन्धसिद्धान्तोऽस्मिन् विंशतमे शते पुनर्नवीकृतः । अस्माकं सर्वमपि चिन्तनं प्रतिमासहकारेणैव भवति न प्रतिमात्मकं संस्कारं विना कश्चिदपि विचारः सम्प्रवर्तते । सर्वेष्वपि विज्ञानेषु शास्त्रेषु वा मूलभूताः केचन स्वतःसिद्धाः पदार्था भवन्ति । तेषां सत्तामाश्रित्यैव शास्त्रं प्रवर्तते । एवं मनोविज्ञानशास्त्रे प्रतिमैव मूलभूता सत्ता विद्यते । भौतिकविज्ञानादिवत् तां मूलभूतां सत्तामाश्रित्यैव मनोविज्ञानं प्रवर्तते । विचारे चिन्तने वा प्रतिमानामुपयोगितास्ति न वेति विचारं विहाय शुद्धविज्ञानदृष्ट्यैव मूलसत्तामाश्रित्य मनोविज्ञानस्याध्ययनं विधेयमिति सत्तावादिनामभिप्रायो भवति । टिचनरमहोदयेनायं 'सत्तावादः' १९१० ई० खीष्टीये संवत्सरे स्थापित आसीत् ।

वदयमत्र संक्षेपः—

अथ विंशे शते कालस्तृतीयोऽसौ समागतः ।
मनोज्ञानेतिवृत्तस्याऽधुनिकः काल उच्यते ॥ १ ॥

तत्र मुख्याः समुद्भूताः सम्प्रदायास्तु पञ्च वै ।
स्वल्पास्तदङ्गभूताश्च सिद्धान्ताः केऽपि वा परे ॥ २ ॥

सत्तावादस्तु तत्राद्यो टिच्नरप्रतिपादितः ।
प्रत्ययप्रतिमासत्तां समाश्रित्य प्रवर्तते ॥ ३ ॥

विवनेटः फ्रांस्देशस्य कुल्पे शर्मण्यदेशजः ।
अन्तःप्रेक्षणं, प्रतिमां, सम्बन्धं मनुते न वै ॥ ४ ॥

तद्विरोधे च क्षेत्रेऽत्र सत्तावादोऽयमुत्थितः ।
प्रत्ययसम्बन्धवादे स च जातोऽवलम्बनम् ॥ ५ ॥

## व्यवहारवादः—

अमरीकादेशीयो वाटसनमहोदयो व्यवहारवादस्य संस्थापकोऽस्ति । तेन १९१२–१९१४ मध्ये व्यवहारवादः स्थापितः । अस्य सिद्धान्तस्य पृष्ठभूमौ चेतनारचनावादः चेतनाक्रियावादश्चेति द्वाववान्तरसम्प्रदायावाधारभूतौ स्तः । ऊनविंशे शते चेतनाया अध्ययनमेव मनोविज्ञानस्य विषयः सञ्जात इति पूर्वं विवेचितम् । वाह्यप्रेक्षणसाधनानां समावेशेऽपि तत्रान्तःप्रेक्षणस्य प्रचुरः प्रभाव आसीत् । प्रत्ययसम्बन्धवादोऽपि जीवित आसीत् । एतेषां संसर्गेण चेतनारचनावादाख्यो नूतनः सिद्धान्तः समुद्भूतः । फ्रांसदेशीयेन 'कांट' महोदयेनान्तःप्रेक्षणं प्रत्याख्यातम् । अन्तः प्रेक्षणे मन एव दृश्यं तत्रैव च द्रष्टृत्वमिति व्याहतम् । द्रष्टृ-दृश्ययोरभेदादन्तः प्रेक्षणमसंगतमिति तत्प्रत्याख्याने प्रथमा युक्तिः । किञ्च मनोविकार-विचारयोः शाश्वतिको विरोधोऽस्तीति तेषामध्ययनमसम्भाव्यमेव भवति । यदैव क्रोधात्मकस्यमनो विकारस्याध्ययनं विवेचनं वारभते जनस्तदैव तस्य क्रोधो विलीयते । न हि विचारकाले क्रोधःसमुदेति न वा स्थातुं शक्नोतीति नान्तःप्रेक्षणेन तद्विवेचनं कर्तुं शक्यत इतीयमन्तः प्रेक्षणविरोधिनी द्वितीया युक्तिः । किञ्च बालकानां, उन्मत्तानां

यूनां च व्यवहारेऽन्तः प्रेक्षणं न सम्भाव्यते। यूनां चान्तःप्रेक्षणं तेषां बाह्यसंस्कारैः प्रभावितं भवतीति तदप्रमाणिकमेव। एवं कांट महोदयेनान्तः प्रेक्षणं सर्वथैव प्रत्याख्यातम्।

## चेतनारचनावादः—

किञ्च चेतनाविषयेऽपि विप्रतिपत्तयः समुत्थिताः चेतनाया मनोवैज्ञानिकेऽध्ययने क्रियमाणे तस्यावयवानां विश्लेषणमभिप्रेतं भवति। प्रत्ययसम्बन्धसिद्धान्ते च प्रत्ययानां प्रतिमानां वा योगविभागो विचार्यते स चेतनावयवानामध्ययनरूप एव भवति। विविधानां प्रत्ययानां प्रतिमानां वा मेलनाच्चेतना निर्मीयते। यथा विविधानामवयवानां संयोगाद् भौतिकाः पदार्था उत्पद्यन्त एवं विविधाः प्रतिमाः प्रत्यया वा सम्बद्धाश्चेतनामुत्पादयन्ति। चेतनाविवेचनप्रसंगेनायं सिद्धान्तोऽस्मिन् युगे समुद्भूतः। स च सिद्धान्त 'श्चेतनारचनावाद' उच्यते। मनोविज्ञाने चेतनाया अस्पष्टत्वात् तदध्ययनं विहाय चेतनारचनात्मकस्य प्रत्ययसम्बन्धस्याध्ययनमुपयुक्तमितीयं धारणा समुत्पन्ना। अयमेव चेतनारचनासिद्धान्तः 'स्ट्रक्चरल' पदेन साइकालोजी व्यवह्रियते।

## चेतनाकार्यवादः—

चेतनारचनावादिभिश्चेतनाया अध्ययनं विहाय तद्रचनाया अध्ययनं प्रारब्धम्। तत्र चेतनापरित्यागे चेतनाया अस्पष्टतैव हेतुरासीत्। तमेव हेतुमाश्रित्यान्यैर्विचारकैश्चेतनारचनावादमपि प्रत्याख्याय चेतनाकार्यवादः (फंक्शनल साइकालोजी) स्थापितः। तेषामयमभिप्राय आसीत् यत् यदास्पष्टत्वाच्चेतनाया अध्ययनं कर्तुं न शक्यते तदा तद्रचनाया अप्यध्ययनं दुःशकमेवेति तद्रचनामपि विहाय केवलं मानवशरीरे दृश्यमानानां तत्कार्याणामेवाध्ययनं मनोवैज्ञानिकैर्विधेयम्। अयमेव सिद्धान्तोऽत्र 'चेतनाकार्यवादः' (फंक्शनल साइकालोजी) उच्यते। विलियम जेम्स महोदयः (१८४२–१९१०) अस्य सिद्धान्तस्य स्थापक आसीत्।

एवं यदा चेतनाया अस्पष्टतामङ्गीकृत्य चेतनारचना चेतनाकार्यं वा मनोविज्ञानस्य विषयतां लेभेऽन्तःप्रेक्षणस्य च प्रत्याख्यानं सञ्जातं तदा तत्परिणामरूपेणैव व्यवहारवादोऽत्र जनिं लेभे। चेतनाकार्यवाद-मपि विहाय व्यवहारवादिभि र्व्यवहारमात्रस्याध्ययनमेव मनोविज्ञानस्य कार्यमिति प्रतिपादितम्। चेतना त्वतिस्पष्टत्वाद् दुर्ज्ञेयास्तीति मनो-विज्ञाने हेयतां प्राप्ता। चेतनारचनावाद-तत्कार्यवादावपि तत्तुल्ययोगक्षेमा-विति तावपि व्यवहारवादिभिः प्रत्याख्यातौ। एवं चेतनाया नाममात्र-स्यापि सम्बन्धं दूरीकृत्या व्यवहारवादिभिः शुद्धो व्यवहावहारएव मनो-विज्ञानस्य विषयोऽवधारितः। अयं चेतनाविरहितो व्यवहार एव तन्मते मनोविज्ञानस्य विषयोऽस्ति।

## व्यवहारवादे सहायकाः—

चेतनारचनावाद-तत्क्रियावादौ व्यवहारवादस्याविर्भावे मूल-भूतावित्यालोचितमस्माभिः। तद्व्यतिरिक्तौ थार्नडाइक-पलवलमहोद-यावपि तत्र सहायकौ सञ्जातौ। थार्नडाइकमहोदयोऽमरीकाभिजनः पशु-मनोविज्ञानस्य विशेषज्ञोऽस्ति। तेन पशुविषये मनोविज्ञानसम्बन्धिनो बहवः प्रयोगाः कृताः, तैश्च प्रयोगैः पशूनां शिक्षणक्रमस्तेन निर्धारितः। स च प्रयत्नस्खलितयोः क्रमोऽस्ति। अस्मिन् विषये शिक्षणपरिच्छेदे सविस्तरं निरूपितमस्माभिः। प्रकृते तस्यैतावानेवोपयोगो यत् न केवलं पशव एव किन्तु मानवा अपि तेन क्रमेण बहूनि कार्याणि शिक्षन्ते। तत्र चाभ्यासनियम-परिणामनियमावपि तेन निर्धारितौ। नूतनकार्याणा-मभ्यासात् तत्र कौशलमुत्पद्यते। अनभ्यासे च सम्यग् विज्ञातमपि विस्म-रति जनः। थार्नडाइकमहोदयस्यायमभ्यासनियमो वाटसनमहोदयस्य व्यवहारवादे सहायक एवासीत्। तेन चेतनां विनापि सर्वस्य व्यवहार-स्याभ्यासवशादुपपादनं सुकरं सञ्जातमिति स व्यवहारवादे सहायक एव। किन्तु थार्नडाइकमहोदयस्य द्वितीयः परिणामनियमस्तथा व्यवहारवादा-नुरूपो न प्रतीयते। परिणामनियमस्यायमभिप्रायो यत् यस्य कार्यस्यानुष्ठा-नेन सुखमात्मनःसञ्जायते तद् विशिष्टमभ्यासमन्तरापि सहजतया शिक्ष्यते। यच्च कार्यमात्मनो दुःखाय कल्पते तत्र विवशतयाभ्यस्यमानेऽपि कौशलं न जायते। अस्मिन् परिणामनियमे चेतनायाः सम्पर्कः प्रतीयते। व्यव-

हारवादी वाटसनमहोदयश्च चेतना-नाम्नाप्युद्विजत इति तेन शिक्षणे परिणामनियमं प्रत्याख्यायाभ्यासनियम एवावधारितः। एवं थार्नडाइक-महोदयस्य व्यवहारवादे कश्चियोगः प्रतीयते।

द्वितीयः पलवलमहोदयो रूसाभिजन आसीत्। तेन १६०५ खीष्टीये संवत्सरे शिक्षणोपायं विवेचयता 'विषयप्रतिक्रियावादः''सहजक्रियावादो' वावधारितः। यथा पदार्थेभ्यः प्रतिक्षिप्ताः प्रकाशस्य रश्मयो नेत्रदेश-मवाप्य चाक्षुषं प्रत्यक्षं जनयन्ति, एवं ज्ञानतन्तुमुखेन मस्तिष्कपर्यन्त-मायाता चेष्टा तन्तुमुखेन मस्तिष्कात् प्रतिक्षिप्ता च प्रतिक्रिया बाह्यमि-न्द्रियव्यापारं जनयतीति विषयप्रतिक्रियावादस्याभिप्रायः। अयमेव सहजप्रतिक्रियारूपोऽप्युपायोऽभिधीयते। शिक्षणस्यायमुपायो चेतनामन्त-रापि सर्वविधं व्यवहारं साधयितु शक्नोतीति व्यवहारवादिनो वाटसन-स्यातीव सहायकोऽभवत्। अस्य सहजप्रतिक्रियासिद्धान्तस्यैव परिमार्जनं कृत्वा वाटसनमहोदयेन विषयप्रतिक्रियासिद्धान्तः स्थापितः। पश्यति, शृणोति, जिघ्रति इत्यादिषु क्रियापदेषु तत्कर्तृत्वेन चेतनायाः सम्पर्कोऽपि सम्भाव्यत इति चेतनां सर्वथैवापलपता वाटसनमहोदयेन तत्स्थाने रूपं प्रति प्रतिक्रिया, शब्दं प्रति प्रतिक्रिया, गन्धं प्रति प्रतिक्रिया इत्येव-मादयः शब्दाः प्रयुक्ताः। अयमेव विषयप्रतिक्रियासिद्धान्त व्यवहार-वादे शिक्षणोपायतया स्वीकृतः। एवं पलवल-थार्नडाइक महोदयोरपि व्यवहारवादे सहायकत्वमभ्युपगम्यते।

तदयमत्र संग्रहः—

व्यवहारवादनामा वाट्सनप्रतिपादितः।
द्वितीयो मुख्यसिद्धान्तो मतो विंशतमे शते ॥६॥
चेतनारचनावादस्तत्क्रियावाद एव च।
सम्प्रदायौ समुद्भूतौ चेतनायाः प्रसङ्गतः ॥७॥
चेतना, रचना, कार्यं सर्वं व्यर्थं न तत्फलम्।
मनोविज्ञैरिहाध्येयो व्यवहारस्तु केवलः ॥८॥
अभ्यासाच्च परिणामाद् व्यवहारविदो जनाः।
जायन्ते पशुवन्नूनं चेतना निष्प्रयोजना ॥९॥
पशुविज्ञानविज्ञस्तु थार्नडाइक् महोदयः।
यदेवं स्थापयामास तेनात्रोपकृतं बहु ॥१०॥

पलवलाभिमता चापि सम्बद्धा सहजा क्रिया ।
व्यवहारं समाधत्ते ततः सोऽपि सहायकः ॥ ११॥

पश्चावान्तरसिद्धान्तान् समाश्रित्य प्रयत्नतः ।
चेतनांच हिष्कृत्य व्यवहारवादो मतः ॥१२॥

## ३ प्रयोजनवादः—

आधुनिकेषु मनोविज्ञानसम्प्रदायेषु प्रयोजनवादस्तृतीयो मुख्यः सिद्धान्तोऽस्ति । व्यवहारवादिनां पूर्वोक्तं विषयप्रतिक्रियासिद्धान्तं समाश्रित्य तत्परिमार्जनं च विदधता मैगडूगलमहोदयेन १६०८ खीष्टीये संवत्सरेऽस्य प्रयोजनवादस्य स्थापना विहिता। यद्यपि स्थापनाकालस्य दृष्ट्या व्यवहारवादः प्रयोजनवादादर्वाचीनः प्रतीयते तथापि वादसनसदृशी विचारधारा ततः पूर्वमपि प्रचलितासीदिति तामेवोपजीव्य मैगडूगलमहोदयेन तत्परिमार्जनात्मकः प्रयोजनवादोऽयं स्थापितः । व्यवहारवादिनां नये विषयप्रतिक्रियावादो व्यवहारस्य प्रयोजको भवति । व्यवहारश्च मनोविज्ञानस्याध्येयो भवति । विषयेन्द्रियसम्पर्कादेव यथोचिता प्रतिक्रिया सञ्जायते तत्र चेतनायाः किमपि प्रयोजनं नास्तीति व्यवहारवादिनां सिद्धान्तः । किन्तु मैगडूगलमहोदयेनात्र किञ्चित् संशोधनं विधाय विषयेन्द्रियसम्पर्कातिरिक्तं प्रयोजनमपि प्रतिक्रियोत्पादने निमित्तं भवतीत्यवधारितम् । विषयेन्द्रियसम्पर्कात् पूर्वमपि कानिचित् प्रयोजकानि कारणानि मनस्यन्तर्हितानि भवन्ति । तदनुसारमेव च प्रतिक्रिया सञ्जायते । कश्चिद् रुग्णः पुरुषोऽस्ति । स स्वरोगनिवृत्त्यर्थं वैद्यसमीपं गच्छति । अत्र व्यवहारवादिनां नये वैद्यरूपस्य विषयस्य सम्पर्कादेव तत्समीपगमनात्मिका क्रिया सञ्जायते । किन्तु तदसङ्गमेतत्र प्रतीयते । नहि प्रेक्षावतां तादृश्याकस्मिकी प्रवृत्तिः । किन्तु पूर्वनिर्धारितं प्रयोजनमनुसृत्यैव क्रियासु प्रवर्तते लोको, न प्रयोजनमन्तरा । तथा च 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति लौकिकानामाभाणकः ।

व्यवहारवादिनां नये तादृक् किमपि प्रयोजकं कारणं न भवति । प्राणिनां सर्वेऽपि व्यवहारा यान्त्रिका एव भवन्ति । विषये सम्प्राप्ते

यान्त्रिकी प्रतिक्रिया स्वत एव प्रवर्तते। न तत्र चेतनाया नापि प्रेरकस्य कारणस्य काप्यावश्यकता भवति। तद्विपरीतं प्रयोजनवादिना मैगडूगल-महोदयेन न केवलं मानवानामेव व्यवहारे किन्तु पशूनामपि व्यापारे प्रेरक-कारणानामेव प्रवर्तकत्वमभ्युपगम्यते। प्रेरककारणानां भेदे प्रतिक्रिया-यामपि भेदो दृश्यते। बुभुक्षितस्य कुक्कुरस्य सन्मुखे यदि किञ्चित् खाद्यं प्रक्षिप्यते तदा स सपद्येव तदभिमुखं धावति खादति च। किन्तु परि-तृप्तस्य कुक्कुरस्याग्रे तदेव खाद्यं प्रक्षिप्यते चेत्, स तदभिमुखं न प्रवर्तते। अत्र समानेऽपि विषयसम्पर्के प्रेरककारणभेद एव प्रतिक्रियाभेदे नियामकः। अत एव मानवव्यवहारवत् पशुव्यवहारेऽपि प्रेरककारणानां निमित्तताऽ परिहार्या भवति। किन्तु पशूनां प्रेरकानि कारणानि सप्रयोजनान्यपि कदाचित्तेषामज्ञातानि भवन्तीति 'सप्रयोजनान्यपि' 'प्रयोजनपूर्णानि' नोच्यन्ते। इत्ययमेव विशेषः।

## योजनापद्धतिः—

सर्वत्र क्रियासु प्रयोजनमेव प्रवर्तकं भवतीति कृत्वा मैगडूगल-महोदयस्य मतमिदं 'प्रयोजनवाद'—नाम्ना व्यवह्रियते। प्रयोजनमेव प्रेरकं कारणं भवति। तस्य प्राबल्ये क्रियासु प्राबल्यं समायाति, तद्दौर्बल्ये च क्रियास्वपि दौर्बल्यं भवति। कश्चिद्बालकोऽध्ययने ऽतीवालसो विद्यते। कदापि स स्वकार्यं कृत्वा नानयति। किन्तु कथादीनां श्रवणे तस्य प्रबला-भिरुचिरस्ति। स यदि कथापुस्तकं लभते तत्पठने सोत्साहं प्रवर्तते। तत्र प्रेरककारणस्य प्राबल्यमेव तदुत्साहातिरेके निमित्तं भवति। तदेवं यदि बालकस्य सम्मुखे किञ्चित् विशिष्टं प्रयोजनमुपस्थितं भवति तदा कार्ये तस्योत्साहातिरेकः सञ्जायते। कठिनमपि कार्यं सोत्साहं सम्पादयति सः। इममेव सिद्धान्तमवलम्ब्य नवैर्मनोवैज्ञानिकैः शिक्षायां 'योजनापद्धतिः' योजिताऽस्ति। योजनापद्धतिर्हि बालानां सम्मुखे प्रयोजनसमुत्पादने एव शिक्षकं प्रेरयति। बालानां ज्येष्ठानां वा सम्मुखे यदा विशिष्टं प्रयोजनमायाति तदा तत्प्राप्त्यर्थं सर्वात्मना प्रवर्तन्ते। सर्वविधं च काठिन्यं विगणयन्ति। 'कार्यं वा साधयेयम देहं वा पातयेयम'इति लोकोक्ति-रपि इममेव सिद्धान्तमवलम्ब्य संवृत्ता।

## मूलशक्तयः —

तानि च प्रेरकानि कारणानि कानि भवन्तीति विवेचयता मैगडूगलमहोदयेन पूर्वोक्ताश्चतुर्दश मूलशक्तय एव सर्वत्र प्रेरकत्वेनावधारिताः । तासां प्राकृतिकशक्तीनामवरोधे विविधा शारीरिका मानसा वा रोगाः सञ्जायन्ते । फ्रायड-महोदयेन चतुर्दशशक्तीनां स्थाने एका कामभावनैव सर्वत्र प्रेरिका शक्तिरभ्युपगता । एडलरमहोदयेन चात्मगौरवभावनायाः एव सर्वत्र प्रेरकत्वं प्रतिपादितम् ।

तदयमत्र संग्रहः —

अथ प्रयोजनवादो मैगडूगलप्रदर्शितः ।
तृतीयो मुख्य सिद्धान्तो जात आधुनिके युगे ॥१३॥

विषयाणान्तु सान्निध्ये यान्त्रिकीव प्रतिक्रिया ।
विनैव प्रेरकं दृष्टा व्यवहारप्रवादिनाम् ॥१४॥

मैग्डूगलमतेनात्र किञ्चित् संशोधनं कृतम् ।
प्रेरकं कारणं तत्र विषयेभ्यः पृथङ् मतम् ॥१५॥

नियतः प्रेरको हेतुः क्रियामात्रे प्रवर्तकः ।
प्रयोजनाख्यो विज्ञेयः क्रियाभेदोऽस्य भेदतः ॥१६॥

बुभुक्षा लोलुपं खाद्ये प्राणिमात्रं करोति वै ।
औदासीन्यं च तत्रैव तृप्तिर्लोके करोति च ॥१७॥

पशूनां व्यवहारेऽपि नूनमस्ति प्रयोजनम् ।
अविज्ञातं भवेन्नाम क्रिया नैवाऽप्रयोजना ॥१८॥

प्रयोजकस्य प्राबल्ये क्रियाप्राबल्यदर्शनम् ।
दौर्बल्ये चैव तस्याथ क्रियापि दुर्बला मता ॥ १॥

तत एव प्रवृत्तेयं योजनापद्धतिर्नवा ।
शिक्षायां, बालकस्याग्रे सा प्रयोजनदर्शिका ॥२०॥

मूलशक्तिस्तु सर्वत्र काचिदेका नियामिका ।
मैग्डूगलमते चैताः शक्तयस्तु चतुर्दश ॥२१॥

फ्रायडस्य मते सैका प्रेरिका कामभावना ।
एड्लरस्य मते सैषा आत्मगौरवभावना ॥२२॥

## ४ अवयविवादः—

आधुनिकेषु विशिष्टेषु सम्प्रदायेषु चतुर्थो 'अवयविवादः' प्रमुखो नव्यतमश्च सिद्धान्तोऽस्ति । जर्मनाभिजनौ कर्ककोफका–वाल्फाङ्काहलर-महोदयौ चास्य संस्थापकौ स्तः । १६१२ खोष्टीयसम्वत्सरस्य समीपे तस्य स्थापना सञ्जाता । जर्मनभाषायामयं सिद्धान्तो जेस्टाल्टस्कूल' नाम्ना व्यवह्रियते । तत्र 'जेस्टाल्ट' शब्दो अवयविवाचकोऽस्ति । सम्पूर्ण-समष्ट्यात्मकं वस्तु 'जेस्टाल्ट' पदेनोच्यते । अतो जेस्टाल्टवादोऽयमवयविवादोत्रोच्यते प्रत्ययसम्बन्धवादस्य तत्परिणामभूतस्य चिन्तनाणुवादस्य च विरोधेऽयं सिद्धान्तः समुत्थितः । प्रत्ययसम्बन्धवादिनां नये प्रत्ययानां विविध अंशा भवन्ति । प्रत्यानां प्रतिमानां च योगविभागाभ्यामेव विविधो व्यवहारो दृश्यते । तेषां योगविभागस्याध्ययनमेव च मनोविज्ञानस्य प्रयोजनम् । अयमेव सिद्धान्तश्चिन्तनाणुवाद उच्यते । चिन्तनस्य विचारस्य-वाअणवो भवन्तीति यथा भौतिकानामणूनां योगाद् भौतिकाः पदार्था निर्मीयन्ते तथा चिन्तनाणूनां योगाद्विचारा निर्मीयन्ते । अस्यावयववादस्य विरोधे अवयविवादोऽय समायातः । तन्मते ज्ञानस्य विचारस्य वा अवयवा न भवन्ति किन्तु सम्पूर्णं समष्ट्यात्मकमेकमेव ज्ञानं जायते ।

प्रत्ययसम्बन्धवादिनां नये पूर्वं विभिन्नाः प्रत्यया उत्पद्यन्ते ततश्च तेषां, तत्प्रतिमानां वा संयोगाद्विचारः प्रवर्तते । किन्तु कस्तत्र सम्बन्धस्य जनक इतीयं जिज्ञासा समुदेति । प्रत्ययसम्बन्धवादिनोऽपि चेतनां नाङ्गीकुर्वन्तीति कस्तत्र विभिन्नानां प्रत्ययानां सम्बन्धकारक इत्यस्य प्रश्नस्य किमपि समीचीनमुत्तरं न भवति । आत्मवादिनां तु सम्बन्धकारक आत्मा सम्भवति । किन्त्वनात्मवादिनां सिद्धान्ते न किञ्चिदपि समाधानं सम्भवति । अतो जेस्टाल्टवादिभिः समष्ट्यात्मकं अवयविरूपमेकमेव ज्ञानं भवतीति प्रतिपादितम् । कश्चिद् रागः श्रूयते । नायं रागो विभिन्नानामवयवानां सम्मेलनाद् श्रुतो भवति किन्तु समष्टिरूपेणावयव्यात्मनैव श्रूयते ।

अस्यावयविवादस्य शिक्षायामपि विशिष्टं महत्त्वं दृश्यते सामान्यतो वर्णेभ्यो पदानि पदेभ्यश्च वाक्यानि निर्मीयन्त इति मन्यते। ततश्च बालकानामध्यापने पूर्वं वर्णाः, ततस्तद्योगात् पदनिर्माणं शिक्ष्यते। ज्ञातेषु च पदेषु तद्योगाद्वाक्यनिर्माणमध्याप्यते। वाक्यानि च पाठ्यन्ते। किन्तु जेस्टाल्टवादिनां नये पूर्वं वाक्यान्येव पाठनीयानि भवन्ति। पदज्ञानमन्तरैव पूर्वं प्रायोगिकानि वाक्यानि कण्ठतोऽध्याप्यन्ते। ततश्च पदानां वर्णानां च शिक्षणं दीयते। ततश्च पूर्वं अवयविग्रहणं तदनन्तरमवयवविभागो, न त्ववयवसंयोगादवयविनिर्माणम्।

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको कश्चन ॥'

अथ वैयाकरणभूषणोक्तः सिद्धान्तो वर्ण-पद-वाक्यानां पारमार्थिकं विभागं नाङ्गीकरोत्येवं जेस्टाल्टवादिनोऽपि तद्विभागं नाङ्गीकुर्वन्ति।

तदयमत्र संग्रहः—

अवयविवादस्तुर्यः सिद्धान्तोऽत्र नवे युगे।
शर्मण्यदेशसम्भूतो जेस्टाल्टवादनामकः ॥ २३॥
कोफका-कोहलौ चास्य स्थापकौ द्वौ नवौ बुधौ।
ल्यूविनस्तस्य चाचार्यः शर्मण्याभिजनाः समे ॥२४॥
प्रत्ययसम्बन्धवादे प्रत्ययावयवा मताः।
स्वभावतः समुद्भूतं चिन्तनाणुमतं ततः ॥२५॥
चिन्तनाणुविरोधे च सिद्धान्तोऽयं समुत्थितः
नैवावयवनिष्पन्नं ज्ञानमवयव्यात्मकम् ॥२६॥
पूर्वं वर्णास्ततः शब्दास्ततो वा क्यं च गृह्यते।
सामान्यतोऽत्र जेस्टाल्ट-सिद्धान्ते तद्विपर्ययः ॥२७॥

**५ मनोविश्लेषणवादः—**

मनोविश्लेषणवादोऽस्य युगस्य मुख्यतमः सिद्धान्तोऽस्ति। स विस्तृतं स्वतन्त्रं च विवेचनमपेक्षत इति अग्रिमपरिच्छेदयोस्तद्विवेचनं विधास्यते।

## प्रश्नाः

१ विंशतमेऽस्मिन् शते मनोविज्ञानक्षेत्रे केऽभिनवाः सम्प्रदायाः समुत्पन्नाः तेषां नामानि कालक्रमः, स्थापकानां नामानि च देयानि।

—:*:—

## चतुर्विंशः परिच्छेद

# मनोविश्लेषणवादः

समुद्भवः—

आधुनिकस्य कालस्य नवेषु मनोवैज्ञानिकेषु सम्प्रदायेषु मनोविश्लेषणवादः प्रमुखः प्रसिद्धतमश्च सम्प्रदायोऽस्ति। आस्ट्रियादेशाभिजनो डा० सिगमण्ड फ्रायड—महोदयोऽस्य सम्प्रदायस्य मुख्यः संस्थापकोऽस्ति। एडलर—जुंग महोदयावपि तत्र तस्य सहकारिणौ शिष्यौ चास्ताम्। फ्रायड—महोदयः (१८५६—१९३९) आस्ट्रियादेशस्य वियना-ख्यायां राजधान्यां चिकित्सकः आसीत्। चिकित्साप्रसङ्ग एव तेनैतदनुभूतं यन्मानसा रोगास्तु मनोवैषम्यनिमित्तका भवन्त्येव किन्तु शारीरिका अपि भूयांसो रोगा मनोवैषम्यमूलका भवन्ति। तेषां च प्रतिविधानं शारीरिकैरुपचारैर्न सम्भवति। किन्तु मानसा एवोपचारास्तेषां प्रतिविधाने किंचित्करा भवन्ति। ततश्च मानसोपचारमार्गमनुसन्दधता तेन मनोविश्लेषणमार्गोऽयमुपलब्धः। तेनैव मार्गेण प्रचुराणां मानसव्याधिग्रस्तानां शारीरिकरोगसंत्रस्तानां चोपचारं विधाय तेषांमारोग्यं स्वकीयं यशो, मनोविज्ञानक्षेत्रे च क्रान्तिमकरोत्।

तस्मिन्नेव समये फ्रांसदेशे डा० चारकोटमहोदयः प्रसिद्धश्चिकित्सक आसीत्। स फ्रायडमहोदयाज्ज्येष्ठो मानसिकरोगाणां च चिकित्सायां विश्रुतः सफलतमश्च चिकित्सक आसीत्। पूर्वं मनोरोगाणां चिकित्सापद्धतिमध्येतुं फ्रायडमहोदयस्तस्य समीपं गतः, बहुकालं च तत्सविधे कार्यमकरोत्। चारकोटमहोदयस्य चिकित्साक्रमो निर्देशप्रधान आसीत्। यदा कश्चिदातुरस्तस्य समीपे चिकित्सार्थमायाति स्म तदा सर्वतः प्राक् समुचिते सुखासने तमुपवेश्य शरीरशैथिल्यं सम्पादयितुं निर्दिशति स्म। यदा सम्पूर्णमङ्गक्लान्तिं विहाय शरीरं सर्वात्मना सुखासीनं शिथिलं च सञ्जायते तदा मनो विचारशून्यं वृत्तिशून्यं च विधातुं निर्दिशति स्म। एवं यदातुरस्य शरीरं मनश्चोभयमपि व्यापारशून्यं शान्तं च संजायते तदा चिकित्सकमहोदयः स्वास्थ्यभावनाया ध्यानं निर्दिशति। तदनुसारं अहं स्वस्थोऽस्मि न मे कश्चिद् रोगः इत्येवं

रूपेणातुरः कश्चित्कालं ध्यायति । एवं स्वस्थतां निर्दिश्य ध्यानप्रकारेणा-तुराणां मनसि स्वास्थ्यभावनां प्रवेशयति स्म । ततश्च सङ्कल्पबला-दातुराणां रोगशान्तिर्जायते । अयं चारकोट महोदयस्य मानसिकश्चि-कित्साक्रम आसीत् ।

फ्रायडमहोदयेन मनोयोगपूर्वकमयं चिकित्साक्रमोऽधीतः । तत्र च तेनैतदनुभूतं यदनेनोपायेन यद्यपि रोगाणां तात्कालिकी निवृत्ति संकल्पबलाज्जायते किन्तु निवृत्ते तस्मिन् संकल्पबले पुनरपि द्रुतमभि-भवन्ति रोगास्तमातुरमित्यनभ्युपाय एवायं रोगनिवृत्तेः । चारकोट महो-दयो रोगाणां निदानं विज्ञातुं न प्रयतते, निदानपरिज्ञानमन्तरैव निर्देश-बलाद्रोगनिवृत्त्यर्थं यतते इत्यपि न समीचीनम् । यदि तु रोगस्य निदानं ज्ञात्वा तस्योन्मूलनाय प्रयत्नं विधीयेत तदा रोगस्य समूलमुच्छेदः सम्भ-वति । ततस्तेन मनोरोगाणां मूलकारणस्यानुसन्धानमेव तन्निवृत्तेः साधन-मिति निर्धारितम् । निदानानुसन्धानमन्तरा केवलेन निर्देशविधिना यथेष्टो लाभो न भवति । निदानं चानुसन्धाय यदि निर्देशविधिरन्यो वा कश्चिदभ्युपायस्तन्निरासार्थमुपादीयेत तदा तत्र ध्रुवं साफल्यं सम्भवतीति मूलसिद्धान्तमुपादाय तेन स्वतन्त्ररूपेण चिकित्साकार्यं प्रारब्धम् । ततश्च मनोरोगाणां मूलमनुसंदधता तेन मनोविश्लेषणविधिस्तत्सम्बद्धाश्च सिद्धान्ता आविष्कृताः । तेषामाविष्कारेण मनोविज्ञानक्षेत्रे क्रान्तिः संजाता । यतः पूर्ववर्तिभिः व्यवहारवादिभिः मनसश्चेतनायाश्च सर्वथैव विलोपः कृत आसीत् । ते हि विचारप्रसंगे तयोः कामप्यावश्यकतां न पश्यन्ति स्म । अतस्तैश्चेतनादिकं सर्वं विधूय व्यवहारमात्रस्याध्ययनमेव मनोविज्ञानस्य कार्यमित्यवधारितमासीत् । किन्तु फ्रायडमहोदयेन मनस-श्चेतनायाश्चाध्ययनमेव मनोविज्ञानस्य कार्यमित्यवधारितम् । अयं मनो-विश्लेषणवादस्यागमः ।

तथा चायमत्र संग्रहः—

मनोविश्लेषवादश्च फ्रायडप्रतिपादितः ।
पञ्चमो मुख्यसिद्धान्तः शतकस्यास्य विद्यते ॥१॥

फ्रायडो वियनावासी ख्यात आसीच्चिकित्सकः ।
आविष्कृतश्चिकित्सायाः प्रसंगेनैव खल्वयम् ॥२॥

क्वचिच्छारीरिके व्याधावपि हेतुस्तु मानसः ।
मानसेनोपचारेण तच्छान्ति नैव दैहिकैः ॥३॥

कथन्नु मानसो रोगो देहमूलोऽथवा कथम् ।
जायते इति विज्ञानं मनोविश्लेषतः कृतम् ॥४॥

फ्रांसदेशे तदासीत्तु चारकोटश्चिकित्सकः ।
मानसे रोगविज्ञाने सफलो विश्रुतस्तथा ॥५॥

हिस्टीरियादिरोगेषु निर्देशविधिना तु सः ।
मानसेनोपचारेण चिकित्सायाः प्रवर्तकः ॥६॥

सर्वथा देहशैथिल्यं मनः शून्यं च वृत्तिभिः ।
सम्पादयति पूर्वं स चिकित्साया उपक्रमे ॥७॥

शान्ते मनसि 'स्वस्थोऽहम्' इति ध्यानं विधीयते ।
एवं ध्यानाच्च सङ्कल्पादातुरो याति स्वस्थताम् ॥८॥

सर्वेष्वपि तु रोगेषु निदानञ्चिन्तनं विना ।
चारकोटः सदा युंक्ते निर्देशविधिमेव तु ॥९॥

सङ्कल्पस्य बलाद्रोगो लीयते न तु नश्यति ।
ततः कालान्तरे शीघ्रं पुनरावर्तते च सः ॥१०॥

दृष्ट्वैवं मूलहेतूनामनुसन्धाय नाशनम् ।
रोगनाशेऽभ्युपायं तु सुकरं स व्यचिन्तयत् ॥११॥

अस्मिन्नेव प्रसंगेऽसौ मनोविश्लेषपद्धतिम् ।
आविष्चकार क्रान्तिश्च मनःक्षेत्रे व्यजायत ॥१२॥

पूर्वमासीन्मनो लुप्तं चेतना च विलोपिता ।
व्यवहारं विहायाथ तत्सर्वं पुनरागतम् ॥१३॥

**मनसस्त्रयो विभागाः—**

मनोविश्लेषनिपुणेन फ्रायडमहोदयेन मनसस्त्रयो विभागाः प्रदर्शिताः सन्ति—

१ चेतनं मनः

२ चेतनोन्मुखं अर्धचेतनं वा मनः

३ अचेतनं मनः

लोकस्य बाह्यव्यापाराणां साक्षात्संचालको मनोभागश्चेतनं मन उच्यते। पुरुषस्य गमनागमनलेखनभाषणादिरूपो बाह्यः सर्वोऽपि व्यापारश्चेतनात्मकेनैव मनोभागेन संचालितो नियन्त्रितश्च भवति। चेतनस्य मनसो बाह्येषु स्वव्यापारेष्वहंकारो भवति। तत्र चेतनं मनः स्वोत्तरदायित्वमनुभवति। ततश्च स्खलितादावपत्रपते साफल्ये च मोदते। कोऽपि बाह्यो व्यापारश्चेतनस्य मनसोऽधिष्ठानं विना न सम्भवतीति बाह्यव्यापाराणां नियामकं तद् भवति।

चेतनान्मनसः परं चेतनोन्मुखमर्धचेतनं वा मनो भवति। अप्रकाशिताः प्रकाशोन्मुखाश्च इच्छा भावनाः, स्मृत्यादिसंस्काराश्चास्मिन् अचेतने मनोभागे तिष्ठन्ति। सर्वेऽपि विचारा भावा वा एतन्माध्यमेनैव चेतनं मनोभागं प्रविशन्ति बाह्यां चाभिव्यक्तिं लभन्ते।

अर्धचेतनान्मनसोऽपि परमचेतनं मनो भवति। तन्निष्ठा भावा विचाराः संस्काराश्च सर्वथैवाव्यक्ता भवन्ति। चेतनं मनस्तेषां विषये किमपि न जानाति। नापि मनोविश्लेषणादिकं विशिष्टमुपायमन्तरा तद्विज्ञानं कथमपि भवति। इदमचेतनं मनोऽतीव प्रबलं भवति। तस्य क्षेत्रमपि विस्तीर्णं भवति। फ्रायडमहोदयेनास्याचेतनस्य मनसस्त्रयो गुणाः प्रतिपादिताः सन्ति।

१ तद्धि ज्ञानेन्द्रियजन्यचेतनाया दूरं गतिपूर्णं, तिरोहितं च।
२ सामान्यरूपेण चेतनं मनस्तद्विज्ञातुं न शक्नोति। मनोविश्लेषणं सम्मोहननिद्रादिकं वा तत्परिज्ञाने साधनम्।
३ इच्छाशक्तेस्तत्र कश्चिदपि प्रभावो न भवति।

चेतनायाः दूरस्थितमप्यचेतनं मनो लोकस्य सर्वव्यापाराणामुद्गमस्थानं भवति। व्यक्ते मनसि दृश्यमाना उपलभ्यमाना वा विचारधारास्तत एवोद्भवन्ति। चेतनेन मनसा बलादभिभूयमानाश्च सर्वा अपि वासनास्ततः पलाय्यात्रैवाचेतने मनसि शरणं लभन्ते। काले चावसरं लब्ध्वा बहिः प्रकाशन्ते।

मनसस्त्रिविधोऽयं विभागो व्यापारदृष्ट्यैव विज्ञेयो न तु भौतिकोऽयं विभागः। मनस्त्वभौतिकं निराकारं चास्ति। ततोस्तद्व्यापारविधयैवायं विभागो विज्ञेयः। सोऽयं विभागोऽधोऽङ्किते चित्रे स्फुटी भवति—

चेतनं मनः

अर्धचेतनंमनः

अचेतनं मनः

प्रकारान्तरेण त्रिविधो विभागः—

'इगो एंड इड' नाम्नि स्वपुस्तके फ्रायडमहोदयेन प्रकारान्तरेणापि मनसस्त्रिविधो विभागो दर्शितोऽस्ति । तत्र अहम् [ ईगो ], प्राहम् [ सुपर ईगो ], अव्यक्त [ इड ] चेति त्रयो मनोविभागाः प्रतिपादिताः सन्ति। अहम्भाव एव मनोव्यापाराणां नियामको भवति। तदनुमोदिता एव भावा वाह्यामभिव्यक्तिं लभन्ते नान्ये। अयमेवाहम्भावो लोकाचारविपरीतानां भावनानां दमनं करोति। यदि कदाचित् काप्यान्तरिकी लोकाचारविपरीता भावना बहिर्गमनाय प्रबला संजायते अहम्भावश्च तन्निरोधेऽक्षम इव जायते तदा तत्रोद्विग्नताऽनुभूयते। क्वचित्परकलत्रादावनुरक्तस्य पुंसः कदाचित् तादृशी दुरवस्था जायते। दुर्दमनीयाया वासवाया दमनाय यतमानोऽहम्भावो मार्गान्तरमलभमानो लोकादपि पलायते। ततश्च नारीणां नाम्नोऽप्युद्विजते। प्रेरकात्पलायनमेव च शान्तेरभ्युपायमधिगच्छति। ततो वाह्येन जगता, लोकाचारेण, सामाजिकै विधानैश्च सहान्तरिकवासनानां साम्यापादनमेवाहम्भावस्य कार्यं भवति।

प्राहम—अहम्भावादुपरि प्राहम्भावो भवति। स च फ्रायडमहोदयेन 'सुपर-ईगो' नाम्ना निर्दिष्टोऽस्ति। अहम्भावस्य व्यापाराणामौचित्यानौचित्यं प्राहम्भावः परीक्षते। सभ्यतायाः संस्कृतेः, धर्मनियमानां

च सारभूतोऽयं भावः। परम्परागताभिरदृश्याभिः प्रक्रियाभिर्ये संस्कारा संचिता भवन्ति त एव प्राहम्भावरूपेण मनोव्यापाराणामौचित्यानौचित्यपरीक्षायां द्वारीभवन्ति। वंशानुक्रमाद्बाल्यादेव शिक्षाभ्यासाद्वा ते संस्काराः प्रस्तररेखेव मनस्यंकिता भवन्ति अचेतनस्य प्रहम्भावस्य चांगतां यान्ति। रात्रौ यदाहम्भावः प्रसुप्तप्रायो भवति तदाप्ययं जागर्ति। अत एव चेतनेन मनसाहम्भावेन वा बलान्नियन्त्रिता वासनाः स्वप्नेऽपि सामान्येन रूपेण वहिर्निर्यान्ति किन्तु विकृतेनैव रूपेणाभिव्यक्ति लभन्ते। प्राहम्भावस्य कश्चिद् भागश्चेतनः कश्चिच्चाचेतनो भवति।

इड—आन्तरिकप्रेरणानां मानसिकशक्तेश्च स्रोत एव फ्रायडमहोदयेन इड नाम्ना व्यवह्रियते। अहम्भावस्य प्राहम्भावस्य च सामर्थ्यं इडाख्याद्व्यक्तभागादेव लभ्यते।

एषां भागानां प्रदर्शनं निम्नाङ्किते चित्रे विधीयते—

रङ्गशालानिदर्शनम्—

त्रिषु भागेषु मनोविश्लेषणं विदधता फ्रायडमहोदयेन रंगशालया सहोपमितं मनः। रंगभूमिः, रङ्गशीर्षं, नेपथ्यगृहं चेति रङ्गशालायास्त्रयो मुख्यविभागा भवन्ति। तत्र चेतनं मनो रंगपीठतुल्यं भवति। रंगपीठे पात्रैर्योऽभिनयः क्रियते स सर्वेषामपि प्रेक्षकाणां दृष्टिगोचरो भवति। रंगशीर्षभागे द्वारद्वयं भवति। ताभ्यामेव नटा रंगपीठं प्रविशन्ति ततो निर्यान्ति च। रंगशालायास्तृतीयो ऽदृश्यश्च भागो नेपथ्यगृहं भवति। तत्र नटा विविधं वेषविन्यासादिकं विधाय यथोचिते काले रंगशीर्षमुखेन रंगपीठमागत्य स्वाभिनयं कुर्वन्ति। एवं लोकानां अचेतनं मनो नेपथ्य-

गृहस्थानीयं विद्यते। अर्धचेतनं चित्तं रंगशीर्षस्थानीयं चेतनं। मनश्च रंगपीठस्थानीयं विद्यते।

भरतनाट्यशास्त्रानुसारं रंगशालायाः स्वरूपं तत्र मनोभागानां सम्बन्धश्च निम्नाङ्कित चित्रे स्फुटी भवति—

मनोविश्लेषदृष्टेण फ्रायडमहोदयेनैवं मनसो निराकारत्वेऽपि व्यापारदृष्ट्या तस्य त्रयो भागाः निर्धारिताः सन्ति।

**अचेतनस्य मनसः कार्याणि—**

१—दैनिके जीवने बहुधा आकस्मिकानि स्खलितानि जायन्ते। तेषां किमपि कारणं न प्रतीयते। किन्तु तत्राचेतनमनोनिष्ठाः संस्कारा एव निमित्तभूता भवन्तीति फ्रायडमहोदयेन सप्रयत्नमवधारितम्। संस्कृत-नाटकेषु गोत्रस्खलितस्य वर्णनं बहुत्रोपलभ्यते। कश्चिन्नायकः कस्या अपि नायिकायाः सविधे स्थितो वार्तालापप्रसंगे तन्नामस्थले ऽन्यस्या नायिकाया नामोच्चारणं करोति तद् गोत्रस्खलनमभिधीयते। न खलु बुद्धिपूर्वमिदं गोत्रस्खलनं भवति किन्तु नायकस्याव्यक्ते मनसि स्थितो ऽन्यनायिका-विषयोऽनुराग एव तत्रापराध्यति। एवमन्यदापि किंचिदन्यद्वक्तुं प्रवृत्तो ऽपि जनो ऽविज्ञातेनरूपेणान्यत् किंचिद्वक्तुं प्रवर्तते। इदं भाषणस्खलनं अव्यक्तस्य मनस एव कार्यं विज्ञेयम्। एवं कदाचिदन्यस्य स्थाने किंचिद-न्यदेव लिखति, अन्यस्य स्थाने किंचिदन्यदेव वाचयति वा। श्रवणकाले-ऽपि चान्यदुच्चारितमन्यथा शृणोति। एवं कदाचित् सुस्मृतोऽपि सामान्यः

पदार्थस्तथा विस्मृतिमुपयाति यथा प्रयत्नेनापि स्मृतिपथं नोपयाति। क्षणान्तरे च स्वयमेव पुनरपि स्मृतिपथमवरति। एवंविधानि स्खलितानि प्रतिदिनं सर्वैरनुभूयन्ते। कैश्चिन्मनोवैज्ञानिकैस्तत्र श्रान्त्यादीनि शारीरिकाणि कारणानि प्रदर्शितानि किन्तु फ्रायडमहोदयस्य मते तत्राचेतनमनोनिष्ठाः संस्कारा एव मूलभूता भवन्ति।

(२) पूर्वोक्ते रंगशालादृष्टान्ते, ये नटा मञ्चे गन्तुमवसरं न लभन्ते ते तावत्कालपर्यन्तं नेपथ्यगृहे एव तिष्ठन्ति। ये च स्वाभिनयं समापयन्ति तेऽपि पुनः नेपथ्यगृहं प्रविशन्ति। एव मानवजीवने लोकाचारवैपरीत्यादन्यस्माद्वा कस्मादपि कारणाद् ये भावा बहिरभिव्यक्तिं नासादयन्ति,चेतनेन वा मनसा बलादभिभूतास्तेऽचेतने मनसि प्रविशन्ति। तत्र चाव्यक्तरूपेण स्थिता बहिर्गमनस्य काल प्रतीक्षन्ते। किन्तु जागरणकाले चेतनं मनः सदैव जागरूकं तिष्ठतीति तेऽवसरं न प्राप्नुवन्ति। निद्राकालेऽपि प्रायोऽचेतनं मनो प्रहरीरूपेण जागरूकमेव विष्ठतीति तत्रापि तेषां निर्गमनावसरो दुर्लभ एव भवति। किन्तु शयनकाले यदा कश्चित्प्रमादः संजायते तदैव ते स्वप्नरूपेण वहिरायान्ति। यथा चौरादयो दस्यवो रात्रौ वेषपरिवर्तनं कृत्वा स्वकार्यं कुर्वन्ति तथाचेतन मनोनिष्ठाः संस्काराः स्वप्नरूपेण स्वकार्यं कुर्वन्ति। एवं स्वप्नाः प्रायोऽचेतनमनोव्यापारमूलका एव भवन्ति।

(३) अचेतने मनस्यन्तर्निहिताः संस्कारा एव नानाविधानां मानसरोगाणां निमित्ततामप्युपयान्ति। गतिमयाः स्वप्ना, योषापस्मार-( हिस्टीरिया द्विव्यक्तित्वं—वहुव्यक्तित्व— आकाशभयादयो मनोरोगास्तन्निमित्तका एव भवन्ति। तत्र निम्नाङ्कितानि कानिचिदुदाहरणानि मनोरञ्जकानि सन्तीत्युदाह्रियन्ते।

क–गतिमयः स्वप्नः— काचिन्महिला स्वभगिन्याः सौभाग्यं प्रति प्रबलामीर्ष्यामनुभवति स्म। किन्तु व्यक्तरूपेण न प्रकाशयति स्म। ईर्ष्या विषयकाः संस्काराः, तस्याश्चेतसि स्थिता आसन् तद्वशादेवैकदा रात्रौ तया स्वभगिन्या आभरणमञ्जूषापहृता क्वापि गोपिता च किन्त्वयं व्यापारः स्वप्नकाल एव कृतः। स्वप्नप्रसङ्ग एव समुत्थाय भगिन्याः प्रकोष्ठे गता, तस्याभरणपेटिकामपहृत्य आयता, सा च क्वापि गोपिता

पुनश्च गत्वा स्वशयने पूर्ववदेव निद्रामवाप्नः । प्रातःकाले भगिन्या तद्विषये पृष्टापि नोत्तरं दातुं समर्थाऽभवन् । प्रतिदिनमर्धरात्रौ सा तां मञ्जूषां स्वप्रकाश एवोद्घाट्य पश्यति स्म । पुनश्च शेते स्म । एकदा तस्या भगिन्या एतदवलोकितं तदा तद्रहस्यं प्रकाशितम् । अयं गतिमयस्य स्वप्नस्य दृष्टान्तः ।

ख–द्विव्यक्तित्वम्—स्काउटेनमहोदयेन द्विव्यक्तित्वस्य सुन्दरमुदाहरणं प्रदर्शितमस्ति । काचिदष्टाविंशतिवर्षदेशीया महिला एकस्मिन् दिवसे प्रातःकाले यदा तल्पं विहायोत्थिता तदा सा षोडशवर्षीया बालिका संजाता । पतिकुलस्य सर्वेऽपि पुरुषास्तदा तस्या अपरिचिता इव सञ्जाता । विवाहात् पूर्वं यथा पितृगृहे स्थिता पठनादिव्यापारं करोति स्म तथैव कर्तुं प्रवृत्ता । वर्षपर्यन्तं च तस्या सैवावस्थासीत् । बहुना प्रयत्नेन वर्षानन्तरं पुनरपि सा प्रकृतिस्था संवृता । इदं द्विव्यक्तित्वस्योदाहरणमस्ति ।

विलियम जेम्स महोदयेनापि 'प्रिंसिपल्स आफ साइकालॉजी' इत्याख्ये स्वपुस्तके द्विव्यक्तित्वस्योदाहरणं प्रदत्तमस्ति । अष्टादशवर्षदेशीया काचिन्महिला एकस्मिन् दिवसे चिरकालं शयनं कृत्वा विलम्बादुत्थिता । तदा सा सर्वमपि पूर्वजातं स्ववृत्तान्तमेकपद एव विस्मृतवती । सा स्वपितरावपि न प्रत्यभिजानाति स्म । पुनश्च शैशवादारभ्य सर्वेऽपि व्यापारास्तया पुनः शिक्षिताः ।

## मनोग्रन्थयः शारीरिकाश्च रोगाः—

अचेतनमनोनिष्ठा ग्रन्थयः संस्कारा वा न केवलं मानसानेव रोगानुत्पादयन्ति प्रत्युत शारीरिकेषु रोगेष्वपि निमित्ततामुपयान्ति । पक्षाघात–श्वास–मधुमेह–अजीर्ण–हृद्रोगाङ्गस्पन्दनादयो रोगा अन्तर्निहितानां मनोग्रन्थीनां प्रभावादेव जायन्ते । विगते महासमरे बहवः सैनिकाः पक्षाघातरोगेण ग्रस्ताः सञ्जाताः । मनोविश्लेषणविधिनैव तेषां निदानं यदा विहितं तदानुभूतं यत् तेषां चेतनाचेतनयोर्मनसोऽन्तर्द्वन्द्व एव तद्रोगस्य कारणमासीत् । कर्तव्यबुद्ध्या चेतनं मनस्तान् बाध्यतया युद्धाय प्रेरयति स्म । किन्त्वचेतनं मनस्तद्विपरीतमासीत् । ते वस्तुतो युद्धाय गन्तुं नेच्छन्ति स्म । तेषामस्या भावनायाः पूर्तिः प्रकारान्तरेणा-

सम्भाव्यैवासीदिति तदचेतने मनसि विद्यमानैर्मनोग्रन्थिभिस्तत्र पक्षाघातः समुत्पादितः। ततश्च तेषां युद्धाद्विमुक्तिर्जाता। एवमचेतनस्य मनसो वासनातृप्तिः संजाता। मनोविश्लेषणविधिना तेषां सैनिकानां चिकित्सायां विहितायां ते प्रायशो रोगमुक्ताः संजाताः। तत्प्रसंगेन च मनोविश्लेष-सिद्धान्तस्यापि प्रचुरा प्रगतिरुन्नतिश्चाभवत्।

केचिच्छात्राः परीक्षासमये ऽकस्मादेवास्वस्था रुग्णाश्च संजायन्ते। तत्राचेतनमनोनिष्ठा अनिच्छैव निमित्ततामुपयाति। येषां मनस्यात्मसम्मा-नस्य प्रबला भावना भवति तदनुरूपा प्रौढता च परीक्षार्थं न भवति त एव परीक्षाकाले रोगाक्रान्ताः संजायन्ते। एवं तेषामात्मसम्मानभावना ऽपरिक्षता तिष्ठति। जीवनस्य कठिनासु परिस्थितिषु श्वासरोगः संजायते तत्रापि मानसमेव रोगनिमित्तं भवति। मानसिकः क्लेश एव रोगं जन-यति। मानसिकी प्रसन्नता च रोगं शमयति। एवं वमनव्याधिरपि मानसिकैः कारणैः संजायते। कस्मिन्नपि देशे निवसन् मनुष्यो लाभवशाद् तं देशं विहायान्यत्र गन्तुं न शक्नोति तस्याचेतनं मनश्च तत्रावस्थानं नानुजा-नाति तदा वमनव्याधिरुत्पद्यते। कदाचिदचेतनमनोनिष्ठा कुकृत्यजात्म-ग्लानिरपि वमनव्याधेर्निमित्ततामुपयाति।

मानसैः कारणैर्यदा शरीरिकाणां रोगाणामुत्पत्तिः संजायते तदा तत्र द्विविधं प्रयोजनं भवति। कदाचिद्रोगोत्पत्तिर्बलान्निगृहीतामान्तरिकीं कांचिदिच्छां पूरयति कदाचिच्च रोगव्याजेनान्तरिका मनोविकारा बहिर्नि-र्गच्छन्ति। तद्विनिर्गमे च रोगः स्वयमेवोपशाम्यति।

## त्रिविधानि रोगकारणानि—

मनोविश्लेषवादिभिः शारीरिकाणां रोगाणां त्रिविधानि कारणानि प्रतिपाद्यन्ते। १ कदाचिच्छारीरिकसुखेच्छाया दमनं. २ कदाचिन्मान-प्रतिष्ठाया रक्षा, ३ कदाचिच्च नैतिकभावनाया दमनमात्मग्लानिश्च शारीरिकरोगाणां कारणं भवति। एडलरमहोदयस्य मते द्वितीयं जुंग-महोदयस्य मते च तृतीयं मुख्यं कारणं भवति। एवमेभिर्मनोवैज्ञानिकैः कालभेदेनापि त्रिविधानि रोगकारणानि स्वीक्रियन्ते। फ्रायडमहोदयस्य मते ऽतीतानामिच्छानां संस्काराणां च दमनं, एडलरमहोदयस्य मते ऽनागतानामाकांक्षाणां दमनं, जुंगमहोदयस्य मते च वर्तमाना मानसी

स्थितिः रोगोत्पादनं विधत्ते, इति मतभेदेन त्रिविधं रोगनिदानमभ्युपगम्यते। तत्र कालवर्गे वर्तमाना मानसी स्थितिः रोगं जनयतीत्ययमेव पक्षः समीचीनतरः प्रतिभाति । तत्रातीतानगतयोरुभयोरपि संस्काररूपेण सम्भावनारूपेण च सम्बन्धः सम्भवति। एवमाद्येऽपि वर्गे सामान्यत आन्तरिकेच्छानां दमनमेव रोगनिमित्तमित्ययमेव सिद्धान्तः सयमन्वबुद्ध्या समीचीनतमः प्रतिभाति। तच्च दमनं शारीरिकं सुखेच्छानां वा स्यात्। तत्र बालकानामविकसितानां च पुरुषाणामाद्य सुविकसितानां व्यक्तीनामुत्तरं प्रधानतया मानसं रोगकारणं भवति।

## मनोविश्लेषणचिकित्सा—

मनोविकारजन्यानां रोगाणां चिकित्सा मनोविश्लेषणविधिना सुकरा भवति। भयङ्कराः शरीरका मानसाश्च रोगा अपि मनोविश्लेषदक्षैश्चिकित्सकैरनेनैव विधिना चिकित्स्यन्ते । मनोविश्लेषचिकित्साया मुख्यतो द्विविधो विधिर्भवति। १ रेचनविधिः, २ पुनःशिक्षणविधिश्च। तत्रान्तर्निहितानां मनोग्रन्थीनामन्वेषणं विधाय बहिर्निस्सारणं रेचनविविधिना क्रियते । अत्र मनोविश्लेषविशेषज्ञा एव समर्था भवन्ति। मनोविश्लेषदक्षैर्महता प्रयत्नेनानवरतेन धैर्येण चान्तर्निहितानां मनो ग्रन्थीनामन्वेषणं क्रियते । यदा च रोगनिदानभूतस्य मनोग्रन्थेः परिज्ञानं सञ्जायते तदा रोगिणः सम्मुखे समुपस्थाप्य तस्यात्मस्वीकृतिरपेक्षिता भवति। यदा च रोगाक्रान्तः पुरुषो रोगस्य मूलकारणं विजानाति स्वीकरोति च तदाऽसौ मनोग्रन्थिः स्वयमेव विलीयते । तज्जन्यश्च रोगोऽपि सपद्येव विलीयते । किन्तु क्वचिज्जटिले रोगे केवलेन रेचनविधिना कार्यं न सम्पन्नं भवति। तत्र पुनःशिक्षणविधिरुपयुज्यते। रोगिणो जीवनादर्शे नैतिकधारणासु च परिवर्तनमेवास्य पुनःशिक्षणविधेः प्रयोजनं भवति। आदर्शस्य धारणानां च परिवर्तनेन तस्य सञ्चिता शक्तिस्तत्र सम्यग् विनियोक्तुं शक्यत इति जीवनादर्शपरिवर्तनेन तदनुरूपेण च शक्तिविनियोगेन रोगिणः स्थितिरेव परिवर्तते । मनोविकाराविष्टा ये जना विविधेष्वपराधेषु प्रवर्तन्ते तेऽनेन पुनः शिक्षणविधिनातितरामुपकृता भवन्ति । अयं च विधिर्मनोवैज्ञानिकैः शक्तिशोधविधिरप्युच्यते।

मनोग्रन्थीनामन्वेषणे महतो धैर्यस्यानवरतप्रयत्नस्य चापेक्षा भवति। कदाचिन्मासमितस्ततोऽप्यधिको वा काल एकस्यैव रोगिणो मनोग्रन्थ्यन्वेषणे व्यत्येति। तत्र च रोगिणः सांकेतिकचेष्टानां स्वप्नानां चाध्ययनमावश्यकं भवति। सम्मोहनविद्यायाः सहकारेण रोगिणः सम्मोहनं विधायापि मनोग्रन्थीनामन्वेषणं विधीयते। जाग्रत्काले च सहजशब्दसम्बद्धप्रक्रियापि मनोग्रन्थीनामन्वेषणे प्रयुज्यते। सहजशब्द-सम्बद्धप्रक्रियायां चिकित्सकः कांश्चिद् विशिष्टान् शब्दान् तस्य सम्मुखे उच्चारयति। तच्छ्रुत्वा तस्य मनसि यत्किमप्यायाति तद्वक्तुं प्रेर्यते। ततश्च स यद्वक्ति तत्सर्वमप्यङ्कितं भवति। तस्मिन् रोगिवक्तव्ये केचिन्मार्मिका विशिष्टाश्च शब्दा लभ्यन्ते। यदा चेमे शब्दास्तस्य सम्मुखे उच्यन्ते तदा विचित्राण्युत्तराणि लभ्यन्ते। तत्साहाय्येन च मनोग्रन्थीनामन्वेषणं सुकरं सञ्जायते। एवं मनोग्रन्थीनामनुसन्धानमध्ययनं च विधाय यदा चिकित्सकस्तान् रोगिणश्चेतनास्तरे समानयति रोगी च स्वयमपि तान् स्वीकरोति तदा ते मनोग्रन्थयः स्वत एवोद्भिद्यन्ते। ततश्च तज्जन्या रोगा अपि विलीयन्त इति मनोविश्लेषचिकित्साविधेस्तत्त्वम्।

## मनोग्रन्थयो अपराधाश्च—

बलान्नियन्त्रिता मनोभावना यथा विविधान् शारीरान् मानसान् वा रोगान् जनयति तथैव विविधेष्वपराधेष्वपि जनं प्रवर्तयति। बालकानामपराधप्रवृत्तिर्मानसिकी जटिलता च बहुधा मनोभावानां निरोधादेव जायते। अपराधिनश्चित्तं दुःखितं खिन्नं च भवति तेन तस्य मनसि अन्तर्द्वन्द्वस्य समुत्पत्तिः सञ्जायते। किन्त्वपराधप्रवणो बालको जनो वा भावना-निरोधमन्तर्द्वन्द्वं वा न प्रत्यभिजानाति। अन्तर्द्वन्द्वस्य प्रकाशनमपराध-रूपेण रोगरूपेण वा जायते। फ्रायडमहोदयस्य मते मानसा रोगा अपराधाश्च मनोविकाराणामभिव्यक्त्यात्मका एव भवन्ति।

अपराधप्रवणानां मनोवृत्तीनां प्रतिविधानमपि मनोविश्लेष-विधिना सुकरं भवति। ये बालका असत्यभाषणं, चौर्यं, व्यभिचारं परिपीडनं वा कुर्वन्ति तेषामपि मनोविश्लेषविधिना चिकित्सा क्रियते। श्री होमरलेनमहोदयेन तादृशा बहवो बालकाः सम्यक्तया चिकित्सिता

अपराधविमुखाश्च सम्पादिताः। सर्वेष्वप्यपराधिषु प्रायो मानवमात्रं प्रति घृणा भवति। ते चात्मनेऽपि क्रुध्यन्ति। ये जना दण्डमार्गमवलम्ब्य अपराधप्रवृत्तेः प्रतिविधानं कुर्वन्ति तेऽपराधिनो मनोनिष्ठां तां घृणामधिकामेव कुर्वन्ति न न्यूनतामानयन्ति। मनोविश्लेषकैरपराधप्रवृत्त्युन्मूलनाय दण्डविधानं नानुमोद्यते किन्तु स्नेहात्मकः सहानुभूतिपूर्णश्च व्यवहार एवाभिनन्द्यते। स्नेहात्मको व्यवहारोऽपराधिनश्चित्ते स्नेहस्रोत उद्घाटयति घृणाभावं च विलापयति। तस्य हृदये आशायाः सञ्चारो जायते। तस्यात्मसम्मानस्य भावना समुद्बुद्धा भवति। आत्मसुधारे च सर्वात्मना प्रवर्तते। घृणा हि दिव्यप्रवृत्तीनां विनाशिका स्नेहश्च तासां सम्पोषको भवति। स्नेहामृतेन मानसाः शारीराश्च सर्वेऽपि रोगाः प्रायो विलीयन्ते विरलतां वापाद्यन्ते।

## अचेतनस्य मनसः प्रबला वासनाः—

अचेतनमनोनिष्ठा बलान्निगृहीता भावना एव बहुधा रोगरूपेणापराधरूपेण वा बहिः प्रकाशन्त इति पूर्वमुक्तम्। तत्राचेतनस्य मनसः प्रबलतमा का वासना भवतीत्यत्र मनोविश्लेषवादिनां मतभेदो दृश्यते। फ्रायडमहोदयस्य मते कामवासनैवाचेतनस्य मनसः प्रबलतमा मुख्या च वासना भवति। तन्मते मानवानां सर्वोऽपि व्यवहारोऽनयैव कामवासनया सञ्चालितो भवति। पुत्रो मातरं स्निह्यति पुत्री च पितरं स्निह्यतीत्यत्रापि कामवासनैव मूलमिति फ्रायडमहोदयस्याभिमतम्। कामवासनायास्तृप्तिः समाजे सुकरा न भवतीति कामवासनाया निरोधो भवति। यथा यथा जनस्य नैतिकी धारणा प्रबला जायते तथा तथा कामवासनाया निरोधे प्रवर्तते जनः। किन्तु यथोद्दामो जलप्रवाहो बलान्निरुद्धोऽपि मार्गान्तरमाविष्करोति, एवं बालन्निगृहीता कामवासनापि मानसरोगरूपेण, शारीरिकरोगात्मना, सांकेतिकचेष्टाव्याजेन, स्वप्नादिमिषेण वाभिव्यक्तिं लभते।

एडलरमहोदयस्य मते आत्मगौरवस्यात्मख्यापनस्य वा भावनैव लोकस्य प्रबला मुख्यतमा च भावना भवति। सैव जनस्य सर्वमपि व्यवहारजातं नियन्त्रयति। लोकस्यात्मख्यापनार्थो प्रवृत्तिः सर्वदा सफला न भवति।

अतृप्ता चेयं भावना विविधान् रोगानुत्पादयति । तद्दमनेनात्महीनताया ग्रन्थिर्मनस्युत्पद्यते । कामभावनासम्बन्धिनो मनोविकारा अपि चात्म-हीनताया मनोग्रन्थेः परिणामरूपा एव भवन्ति ।

युङ्गमहोदयस्य मते सामाजिकी वासनैव मानवस्य मुख्या प्रबल-तमा च वासना भवति । यथात्मनः सुखाय सचेष्टो भवति जनस्तथा सामाजिकप्रतिष्ठासस्पृहोऽपि भवति । युङ्गमहोदयेन वैयक्तिकं मनो विहाय सामाजिकमपि मनोऽङ्गीकृतम् । तन्मते नैतिकभावनानामुदयः सामा-जिके मनस्येव भवति । ततश्च सामूहिकमचेतनं मन एव लोकस्य नैतिक-भावनानामाधारभूतम् । यथाऽनैतिकीनां भावनानां दमनं भवति तथैव क्वचिन्नैतिकीनां भावनानामपि दमनमावश्यकं भवति । यदावेशवशात् क्वचिन्नैतिकेऽपि कर्मणि प्रवर्तते जनस्तदा परिणामस्य प्रतिकूलत्वात्पश्चा-त्तापमनुभवतीति नैतिकीनां भावनानामपि दमनाय प्रवर्तते । नैतिक-भावनानां दमनेन ये रोगादयः सञ्जायन्ते तेऽतीव भयङ्करा भवन्ति ।

## सांकेतिका व्यापाराः—

अचेतनस्य मनसो वासनाः सांकेतिकव्यापाररूपेणापि प्रकाशिताः भवन्ति । केचिज्जना उपविष्टा अपि जङ्घां सञ्चालयन्ति कम्पयन्ति। केचिद्दन्तैर्नखान् कर्तयन्ति, केचिदोष्ठचर्वणं कुर्वन्ति स्कन्धं वा पुनः-पुनः परिचालयन्ति । एवं विधा बहवो व्यापाराः पुरुषैरविज्ञायमानरूपेणैव विधीयन्ते । ते सर्वेऽप्यचेतनस्य मनसो व्यापारा भवन्ति । मनोविश्लेष-वद्भिस्तेषां सम्बन्धो अचेतनमनोनिष्ठाभिरतृप्ताभिर्वासनाभिः सह स्थापितोऽस्ति । जङ्घाविधूननमतृप्तकामवासनायाः सूचकं भवति । नखकर्तनमोष्ठदंशनं वा चेतनमनोनिष्ठाया अतृप्ताया वैरनिर्यातनभाव-नायाः प्रतीकं मात्रं भवति । केचिद् गम्भीरस्य विषयस्य परिचिन्तनकाले स्वहस्तौ प्रक्षालयन्त इव दृश्यन्ते । तेषामयं व्यापारो मनोनिष्ठायाः पाद-प्रक्षालनभावनायाः प्रकाशको भवति । इमे सर्वेऽपि मनोनिष्ठानामतृ-प्तानां भावनानां सांकेतिका व्यापारा भवन्ति। तन्मुखेनातृप्तां भावनां पूरयितुमिव प्रवर्तते जनः ।

## सांकेतिकव्यापाराणामुपयोगः—

सांकेतिका व्यापारा अतृप्तानां भावनानां परिचायका भवन्ति। तन्मुखेनातृप्तभावनायाः पूर्तिरिव सञ्जायते। ततः सांकेतिका व्यापारा जीवनस्य सुचारुसञ्चालनायात्यन्तमुपयोगिनो भवन्ति। यावच्चाचेतन-मनोनिष्ठो ग्रन्थिर्नोच्छिद्यते तावत् सांकेतिका व्यापारा अपरिहार्या एव भवन्ति। न तेषां निरोधः सम्भवति। निरोधे वा कार्यशक्तिर्जनस्य हीयते प्रतिहन्यतेवा। अतो मनुष्यस्य कार्यक्षमताया निर्वाहाय सांकेतिका व्यापारा आवश्यका उपकारकाश्च भवन्ति।

### प्रश्नाः

१. मनोविश्लेषवादस्य कः प्रवर्तकः, कथं चास्य समुद्भवः सञ्जातः ?

२. मनोविश्लेषवादिनामभिमता मनोविभागाः प्रदर्शनीयाः।

३. अहं-प्राहं-इडरूपेण च फ्रायडमहोदयेन यो विभागः कृतोऽस्ति स सम्यग् व्याख्येयः।

४. रङ्गशालानिदर्शनं मनोविभागे कथमुपयुज्यते

५. अचेतनस्य मनसः कार्याणि निरूपणीयानि ?

६. मनोविकाराणां रोगहेतुत्वं मनोविश्लेषात्मको चिकित्साविधिश्च लेख्यः।

७. मनोग्रन्थीनामपराधहेतुत्वं तन्निवारणोपायश्च प्रतिपाद्यताम्।

८. अचेतनस्य मनसः का प्रबलतमा भावना ? तत्र काश्च विप्रति-पत्तयः।

९. सांकेतिकानां व्यापाराणां क उपयोगः।

## पञ्चविंशः परिच्छेदः

# स्वप्नाः

**अत्र स्वप्नस्य महत्त्वम्:—**

मनोविश्लेषसिद्धान्ते स्वप्नानामतीव महत्त्वपूर्णं स्थानं विद्यते। अचेतनमनोनिष्ठानां मनोग्रन्थीनामनुसन्धाने स्वप्नाध्ययनमुपकारकं भवतीति फ्रायडमहोदयेन तत्र बहु विवेचितम्। ये भावाश्चेतनेन मनसा बलान्निगृह्यन्ते तेऽविज्ञातरूपेणाचेतने मनसि निलीयन्ते न तु विनश्यन्ति। ते च तत्र स्थिता दस्यव इव बहिर्गमनस्यावसरं प्रतीक्षन्ते। छद्मवेषधारिणस्तस्करा इव स्वप्नव्याजेन त एव बहिरायान्ति। अत एव स्वप्नानां विशिष्टमध्ययनं मनोग्रन्थीनामनुसन्धाने महदुपकरोति।

**स्वप्नकारणम्—**

शारीरं मानसं चेति द्विविधं स्वप्नकारणं मनोविश्लेषवादिभिर्निर्धारितम्। तत्र देहस्था विकारा, बाह्या च देहसम्बद्धा उत्तेजनेति शारीरस्य स्वप्नकारणस्यापि द्वैविध्यम्। एवं मानसस्यापि स्वप्नकारणस्य बाह्यानुभवजन्याः संस्कारा आन्तरिकीच्छा चेति भेदेन द्वैविध्यम्। यदि कश्चिद् दुर्गन्धयुक्ते प्रकोष्ठे मलिनानि दुर्गन्धयुक्तानि वस्त्राणि चोपादाय शेते तदा दुःस्वप्नान् पश्यति। एवं शयनकाले मुखस्यावरणाद् मलिनो निश्वासवायुरन्तःप्रविश्य दुःस्वप्नानुत्पादयति। दुर्गन्धयुक्तो वायुर्यदान्तः प्रविशति तदा मस्तिष्केऽप्रियं प्रभावं जनयति। जाग्रत्काले तत्प्रतिकाराय चेष्टते जनः किन्तु शयनकाले प्रतिकारासम्भवात् स्वप्नान् प्रेरयति स प्रभावः। एवं शयनकालेऽप्रियशब्दानां सम्पर्कादप्रियाः स्वप्नाः मधुरध्वनीनां च सम्पर्कात् सुखप्रदाः स्वप्ना भवन्ति। सर्वेऽपीमे स्वप्ना बाह्योत्तजनजन्या भवन्ति। दैहिका विकारा अपि स्वप्नजनका भवन्ति। ज्वरस्यावेगकाले पीडाद्याधिक्ये वा प्रायशो दुःस्वप्ना जायन्ते। एवं मानसाः संस्कारा अपि स्वप्नप्रयोजका भवन्ति। यदा कमपि दृश्यविशेषं पश्यन् कमपि विषयं वा चिन्तयन् स्वपिति तदा तदनुरूपा एव स्वप्ना जायन्ते। इति शारीरं मानसं चेति द्विविधं स्वप्नकारणं सर्वैरपि

मनोवैज्ञानिकैरभ्युपगम्यते। किन्तु फ्रायडमहोदयेन तत्र नूतनः सिद्धान्तः स्थापितः। तन्मते बलान्निगृहीता वासना एव सर्वेषामपि स्वप्नानां प्रयोजिका भवन्ति। मानवस्यानैतिकीनामिच्छानां पूर्तिर्लोकाचारवैपरीत्यात्प्रायो व्याहन्यते। किन्त्वतृप्तास्ता वासना बलान्निगृहीता अपि न विनश्यन्ति। अव्यक्तरूपेणाचेतने मनसि निलीयन्ते। ता एव च स्वप्नव्याजेन बहिरायान्ति। फ्रायडमहोदयस्य मते कामवासनैव मानवव्यवहारस्य प्रवर्तिका भवति। तस्याश्च लोकाचारवशात्प्रायो निग्रहो विधीयत इति सैव स्वप्नप्रयोजिका भवति। वायावुड्डयनं जले सन्तरणं, कन्दराप्रवेशः, सन्त्रस्तस्य पलायनं, बालकैः सह क्रीडनादिकं च यत्स्वप्ने दृश्यते तत्सर्वं कामवासनाया एव विलसितं तन्मते।

## वैशेषिकोक्तं स्वप्नविवेचनम्—

भारतीये दर्शने वैशेषिकदर्शनस्य प्रशस्तपादभाष्ये संस्कारपाटवात्, धातुदोषात्, अदृष्टाच्च स्वप्ना जायन्त त्रिविधं स्वप्नकारणं निरूपितमस्ति। तत्र कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य सैव चिन्तासन्ततिः स्वप्ने परिदृश्यते। स च संस्कारपाटवजन्यः स्वप्नो भवति। तत्र स्वप्नविवेचनमित्थं कृतमस्ति—

'उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम्। कथम्, यदा बुद्धिपूर्वादात्मनः शरीरव्यापारादहनि खिन्नानां निशि विश्रामार्थमाहारपरिणामार्थं वाऽदृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते। प्रलीने च तस्मिन् उपरतेन्द्रियग्रामो भवति। तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्म-मनः संयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणेवा सत्सु विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते।

तत्तु त्रिविधम्। संस्कारपाटवाद्धातुदोषाददृष्टाच्च। तत्र संस्कारपाटवात् तावत्—कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा सञ्जायते।

धातुदोषात्—वातप्रकृतिकस्तद्दूषितो वा आकाशगमनादीनि

पश्यति । पित्तप्रकृतिः पित्तदूषितो वाग्निप्रवेशकनकपर्वतादीन् पश्यति । श्लेष्मप्रकृतिः श्लेष्मदूषितो वा सरित्समुद्रप्रतरणहिमपर्वतादीन् पश्यति ।

यत्स्वयमनुभूतेषु वा प्रसिद्धार्थेषु वा यच्छुभावेदकं यजारोहणच्छत्रलाभादि तत्सर्वं संस्कारधर्माभ्यां भवति । विपरीतं च तैलाभ्यञ्जनोष्ट्रारोहणादि तत्सर्वमधर्मसंस्काराभ्यां भवति । अत्यन्ताप्रसिद्धेष्वर्थेषु अदृष्टादेवेति

स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति तथाप्यतीतस्य ज्ञानप्रबन्धस्य प्रत्यवेक्षणात् स्मृतिरेव ।

वैशेषिकप्रशस्तपादभाष्यम् पृ० ६७

प्रशस्तपादभाष्यस्य स्वप्नविवेचनेनैतत्प्रतीयते यत् फ्रायडमहोदयो जलसन्तरणाकाशगमनादिविषयकान् यान् स्वप्नान् कामवासनोद्भवान् कथयति ते वस्तुतो वात-पित्त-श्लेष्मादिविकारजन्या भवन्ति । सामान्यतः स्वप्ना दृष्टार्थविषयका एव भवन्ति किन्तु कदाचित् पूर्वमनवलोकितोऽप्यर्थोऽदृष्टवशात् स्वप्ने प्रतीयते । तथा च नैषधकारेण श्रीहर्षेण महाकविना प्रतिपादितम्—

अदृष्टमप्यर्थमदृष्टवैभवात्
करोति सुप्तिर्जनदर्शनातिथिम्

## आदेशात्मकाः स्वप्नाः—

मनोविश्लेषणवादिनां मध्ये युङ्गमहोदयेन आदेशात्मकाः स्वप्ना अपि प्रतिपादिताः सन्ति । तन्मते स्वप्ना हि मानवस्य वर्तमानां स्थितिं तस्यावश्यकतां च सूचयन्ति । अतो मानसानां रोगाणामुपचारे स्वप्नस्याध्ययनं महदुपकरोति । बहवः स्वप्ना आदेशात्मका भवन्ति । स्वास्थ्यलाभाय रोगिणा किं कर्तव्यमिति स्फुटं तत्रादिश्यते । दैनिकेऽपि जीवने कदा किं कर्तव्यमित्यस्य ज्ञानं स्वप्नानामध्ययनेन भवितुमर्हति । स्वकीयं राज्यं विश्वामित्राय देयमित्ययमादेशो राज्ञा हरिश्चन्द्रेण स्वप्न एवाधिगत आसीत् ।

## स्वप्ननिरोधः—

स्वप्नदर्शनमचेतनस्य मनसः कार्यं भवति। सामान्यतोऽचेतनस्य मनसो व्यापारेषु जनस्य किमपि नियन्त्रणं न सम्भवति। किन्तु केचन मनोवैज्ञानिका निर्देशविधिना स्वप्नस्य निरोधमपि सुसाध्यं मन्यन्ते। यथा शयनात् पूर्वं यदि कश्चिदमुकसमयेऽहमवोत्थास्यामीति विचार्य स्वपिति तदा सङ्कल्पबलात् तस्मिन्नेव समयेऽवश्यमुत्तिष्ठति। एवं निर्देशविधिना स्वप्नानां निरोधोऽपि कर्तुं शक्यते। किन्तु तादृशः स्वप्न-निरोधो हितावहो न भवतीति फ्राउडमहोदयस्य सिद्धान्तोऽस्ति। तन्मते स्वप्नो हि निद्राया रक्षको भवति। बाह्योत्तेजनावशात् स्वप्नाः सञ्जायन्ते। यदि स्वप्ना न भवेयुस्तदा सा स्वप्नकारणभूतोत्तेजना निद्राविघाताय कल्पेत।

## निद्रा—

मानवस्य जीवनरक्षणाय यथा भोजनं पानं चावश्यकमस्ति तथैव निद्राप्यपरिहार्या भवति। यदि कदाचित् केनापि कारणेन निद्राप्रतिबन्धः सञ्जायते तदा सद्यएव तत्प्रभावो जनस्य स्वास्थ्ये दृष्टिगोचरो भवति। क्लान्तिं वैक्लव्यं च जनोऽनुभवति। न किमपि कार्यं कर्तुं शक्नोति। आलस्येन चाभिभूतो भवति। कदाचिदात्मसम्मानस्य क्षतिसम्भावनाया-मुपस्थितायां जनोऽनिद्रारोगाक्रान्तो भवति। अनिद्रायस्तो जनस्तन्निवार-णाय यमुपायमवलम्बते प्रायः स एव तद्विपरीतो भवति। स निद्राधिग-मविषये नितरां चिन्तयति। सा चिन्तैव च तत्प्रतिबन्धिका जायते। अत एव चिन्ता सर्वथैव हेया। शरीरं शिथिलं मनश्च विचारशून्यं विधाय शान्तभावेन शयने यातव्यम्। सा मानसी दैहिकी च स्थितिरेव निद्रायाः प्रयोजिका भवति।

मनोवैज्ञानिकैः स्वाभाविकी निद्रा, मदजन्या निद्रा, मूर्च्छा-जन्या निद्रा चेति निद्रायास्त्रयो भेदा विहिताः सन्ति। किन्तु वस्तुतः स्वाभाविकी निद्रैव निद्रापदवाच्या भवति। सैव जनस्य स्वास्थ्यवर्धिका

भवति। कदाचिद्रोगादिप्रसंगे अनिद्रानिवारणाय मदकारकैरौषधादिभिरपि निद्राया व्यवस्था विधीयते। तस्मिन् समये च सा लाभप्रदापि भवति। किन्तु क्रियासमभिहारेण यदि मदकारकाणामौषधादीनां सेवनं क्रियते तदा स्वास्थ्यस्य हानिरेव सञ्जायते।

## मूर्च्छा--

मूर्च्छापि निद्रावच्चेतनाशून्यावस्था विद्यते। केनचिदाघातेन यदा मूर्च्छितो भवति जनस्तदा तस्य चेतना विलीयते। स विचारादिकं कर्तुं न शक्नोति। असह्यस्य दुःखस्यानुभूतिमानवस्य जीवननाशाय कल्पेत यदि मूर्च्छा तत्र प्रतिबन्धिका न स्यात्। अत एवासह्ये क्लेशे समुत्पन्ने मूर्च्छा स्वयमेवागत्य प्राणपरिरक्षणं करोति। येषां मनो दुर्बलं भवति ते द्रुतमेव मूर्च्छयाभिभूता जायन्ते। केचिदन्येषां दुःखमवलोक्यैव मूर्च्छिताः सञ्जायन्ते। स्त्रीणां मनः कोमलं भवतीति ताः सपदि मूर्च्छाक्रान्ता भवन्ति।

## सम्मोहनम्—

परप्रेरणया मनसो या चेतनाशून्यावस्था सञ्जायते सा सम्मोहनिद्रापदवाच्या भवति। मनोविश्लेषसिद्धान्तस्योत्पत्तिः सम्मोहनिद्राप्रसंगेनैव सञ्जाता। फ्रायडमहोदयात् पूर्वं मानसचिकित्सापराश्चिकित्सका सम्मोहनं विधाय निर्देशविधिनैव रोगिणश्चिकित्सन्ति स्म। सम्मोहनिद्रा हि सामान्यनिद्राया भिन्ना भवति। यतोऽस्यां चेतनाशक्तिः सर्वथा वृत्तिशून्या न भवति किन्तु विशिष्टेन रूपेण सा कार्यं करोति। सम्मोहावस्थायां सम्मोहितस्य पुरुषस्य चित्तं सम्मोहकाधीनं भवति। स हि यथा निर्दिशति सम्मोहितः पुरुषस्तथैवाचरति। योगाभ्यासस्य स्वल्पांशभूतेयं सम्मोहनविद्या प्रतीयते। प्रबलया मनसशक्त्या समुपेतः पुरुषो दुर्बलान्तःकरणानां सम्मोहने समर्थो भवति। न प्रबलान्तःकरणानां सम्मोहनं भवति। अत एव प्रायो बालकेष्वेव सम्मोहनप्रयोगो विधीयते। सम्मोहावस्थायां सम्मोहितः सम्मोहकस्य वशवर्ती भवति। तद्विचारानु-

सारिण एव सम्मोहितस्य विचाराः कार्याणि च जायन्ते । एकदा सम्मोहावस्थायां काचिन्महिला सहसोत्थाय फ्रायडमहोदयस्यालिङ्गने प्रवृत्ता। तदारभ्यैव फ्रायडमहोदयेन सम्मोहनप्रयोगस्त्यक्तः । येषां नैतिका विचारा सुदृढा भवन्ति ते सम्मोहनेऽपि ततो विचालयितुं न शक्यन्ते । नहि काचित् पतिव्रता सदाचारिणी वा स्त्री सम्मोहनेऽपि व्यभिचारे प्रवर्तयितुं शक्यते ।

सम्मोहकाले यो निर्देशो दीयते तस्य कालान्तरभावी प्रभावोऽपि भवति । तद्विधानि बहूनि निदर्शनानि सम्मोहनविद्यावर्णनेषूपलभ्यन्ते । सम्मोहनकाले कस्मिंश्चिद्विशिष्टे समये कस्मिंश्चिद्विशिष्टे स्थाने गत्वा विशिष्टं कार्यं विधेयमिति निर्देशं प्राप्य सम्मोहितो जनो जागरणकालेऽपि निर्दिष्टे समये समायाते स्वतोऽजानन्नपि केनापि बलात् प्रेर्यमाण इव तत्र गच्छति निर्दिष्टं कार्यं च करोति । अयं सम्मोहनविद्यायाः प्रभावः ।

मनोवैज्ञानिका गुप्तानामन्तर्निहितानां च मनोग्रन्थीनामनुसन्धाने सम्मोहनिद्राया उपयोगं कुर्वन्ति । सम्मोहननिद्रायां विस्मृतानामचेतनमनोनिष्ठानां भावानां च स्मरणं कार्यते । तेन बहुधा मनोरोगाणां कारणं तत्रोपलभ्यते । तच्चिकित्सायां च तस्योपयोगो भवतीति मनोविश्लेषनिपुणैः सम्मोहनविद्यायाः स्वकार्ये बहुलमुपयोगो विधीयते ।

## पटाक्षेपः —

मनोविश्लेषवादस्य प्रवर्तकः सिगमण्ड फ्रायडमहोदयो जैकोस्लोवाकियाराज्यस्य मोरोवियाप्रान्ते फ्रेवर्ग स्थाने ( ६ मई १८५६ ) उत्पन्न आसीत् । जेकब फ्रायड महोदयस्तस्य जनकः एमिलिया नेथनज फ्रायड नाम्नी च तस्य जननी आसीत् । तस्य पिता तन्तुवायस्य कार्यं करोति स्म । स च यहूदीधर्मावलम्बी आसीत् । यहूदीधर्मावलम्बिनां ख्रीष्टीयधर्मावलम्बिनां च योरोपदेशे महान् विरोधोऽस्ति । यहूदीधर्मावलम्बिनो धनसम्पन्ना अपि संख्यायां न्यूनाः सन्तीति ख्रीष्टीयैः सदैव पीड्यन्ते । स्वस्थाने तद्विधमेव वैषम्यमनुभूय फ्रायडमहोदयस्य जनकः स्वदेशं

विहाय आस्ट्रियादेशस्य वियनाख्यायां राजधान्यां समायातः । तत्र नगरस्यैको भागो यहूदीनामेव कृते पृथक्कृत आसीत् । तस्मिन्नेव भागे परिवारोऽयं वसतिं लेभे । नववर्षदेशीयो सिगमण्ड फ्रायडमहोदयो विद्यालये प्रविष्टः । सप्तदशतमे वर्षे च बी० ए० परीक्षा तेनोत्तीर्णा । तत्राध्ययनकाल एव 'मार्था बर्नेज' नाम्न्या कन्यया सह तस्य स्नेह-सम्बन्धो जातो, विवाहश्च निश्चितोऽभवत् । १८८१ संवत्सरे तेन वियना-विश्वविद्यालयात् 'डाक्टर आफ मैडीसन' इत्याख्या परीक्षा समुत्तीर्णा । ततश्च तत्रत्ये चिकित्सालये पदाभिलाषिरूपेण कार्यं प्रारब्धम् । १८८५ वत्सरे स्नायुरोगाणामध्यापकपदे नियुक्तः । ततश्च छात्रवृत्तिं प्राप्य मानसरोगाणां विशेषज्ञतां सम्पादयितुं पेरिसनगरं गतः । तत्रत्ये उन्मत्तालयस्तदानीं मानसरोगाणां प्रसिद्धं स्थानमासीत् । तत्रैव चारकोट-महोदस्याध्यक्षतायां तेन मानसरोगाणां चिकित्साविधिरधीतः । तत्रैव च मनोविश्लेषणसिद्धान्तस्य बीजारोपणं सञ्जातम् । १८९६ त आरभ्य १८९८ पर्यन्तानां त्रयाणां वर्षाणां तस्य जीवने विशिष्टं महत्त्वं वर्तते । अस्मिन्नेव काले मनोविश्लेषणसिद्धान्तः, स्वप्नव्याख्यापद्धतिः, दिनचर्या-स्खलितसिद्धान्तश्चाभिव्यक्तिं लेभिरे । १९९८ पर्यन्तं हैंस, सैश, मैक्स आफ, कोनिगस्टेन, आटो रैंक, कार्ल अब्राहम, जुङ्ग प्रभृतयस्तस्य बहवः शिष्याः सञ्जाताः । अस्मिन्नेव काले स्टनले हालमहोदयस्य निमन्त्रणं प्राप्य फ्रायडमहोदयो अमरीका देशं गतः । तत्र च मनोविश्लेषणविषये तस्य व व्याख्यानानि सञ्जातानि । तानि च पुस्तकरूपेण प्रकाशितानि ।

अस्मिन्नेव काले द्वितीयस्य विश्वयुद्धस्य प्रसङ्गः समुपस्थितः जर्मनदेशस्याधिनायको हिटलरमहोदयो यहूदीनां शत्रुकल्प एवासीत् । १९३८ वत्सरे यदा फ्रायडमहोदय ८२ वर्षदेशीय आसीत् तदा तस्य धनसम्पत्त्यादिकं सर्वमपि राज्येनापहृतम् । तस्य जीवनसङ्कटं दृष्ट्वा डाक्टर अर्नेस्ट जेन्ज महोदयो लन्दननगराद् वायुयानेनाष्ट्रियादेशं गतः । तस्य प्रयत्नेन फ्रायडमहोदयः कथंचित् वियनानगरं विहाय आंगलदेशं गन्तुं सन्नद्धोऽभवत् । किन्तु तदा राज्याधिकारिभिर्हिटलराज्ञया सार्धद्वय-लक्षमिता शिलिङ्गराशिर्दण्डत्वेन निर्वारितः । तद्दानमन्तरा देशाद्बहिर्गन्तुं

न शक्नोतीति च निश्चितम्। अयं कठिनः प्रश्न आसीत्। किन्तु काचिद्राजकुमारी यस्याश्चिकित्सानेन कृतासीत् दण्डराशिनिर्यातनाय सन्नद्धाऽभवत्। ततो राज्याधिकारिभि दण्डराशिरधिको वर्धितः। किन्त्वमरीकाध्यक्षस्य रूजवेल्टमहोदयस्य प्रयत्नेन पूर्वनिर्धारितं राशिं गृहीत्वैव देशाद्बहिर्यातुमनुमतः। एवं ८२ वर्षदेशीयोऽयं प्रसिद्धतमश्चिकित्सको मनोवैज्ञानिकश्च यहूदिविरोधिनामत्याचारवशात् स्वदेशं विहायाङ्गलदेशं गतः।

स्वदेशत्यागेन तत्रानुभूतेनावमानेन च तस्य हृदये महती वेदनाभवत्। ततो मासत्रयानन्तरमेव भगन्दररोगेणाक्रान्तोऽयं २३ सितम्बर १९३८ दिवसे इमं लोकमपि विहाय परलोकं गतः। एवं च मनोविश्लेषसिद्धान्तसंस्थापकस्य फ्रायडमहोदयस्य जीवने पटाक्षेपः सञ्जातः।

❀ इति शुभम् ❀